॥श्रीः॥

श्रीमती समस्तजगदीश्वरी
पराशक्तिर्विजयतेतराम्

# श्रीमूकपञ्चशतकम्

---

तच्च

योधपुराधीश राजराजेश्वर श्रीमन्मानसिंहात्मजेन
श्रीसोवनसिंहेन
( शोभनसिंह ) उपनामकसुवर्णसिंहेन
विरचितया स्वर्णमालाख्यया टीकया
समलंकृतम्

---

जयपुरस्थ पण्डित लक्ष्मीनाथशास्त्रिणा
संशोधितम्

---

स्वेनैव योधपुरे
दाधीच आसोपा पण्डित बलदेवात्मज
पण्डित—रामकर्णस्य
प्रतापप्रेसनाम्नि यन्त्रालये मुद्रापयित्वा
प्रकाशितम्

संवत् १९५५

...सम्राड्कुरसमुक्तः॥७॥

श्रीजगदीश्वर्यै नमः

# मूकपञ्चशतकम्



ओं श्रीगणेशश्रीपादुकाभ्यो नमः । ओं श्रीगुरुश्रीपादुकाभ्यो नमः । ओं श्रीकामाक्ष्यम्बाश्रीपादुकाभ्यो नमः । ओं श्रीएकाम्रनाथश्रीपादुकाभ्यो नमः । ओं श्रीकाञ्चीपुरीश्रीपादुकाभ्यो नमः । ओं श्रीकम्पानदीश्रीपादुकाभ्यो नमः । ओं श्रीमूककविसार्वभौम श्रीपादुकाभ्यो नमः। ओं श्रीमूककविसार्वभौमसुधासहचरीवाणीश्रीपादुकाभ्यो नमः । ओं श्रीजलंधरनाथश्रीपादुकाभ्यो नमः । ओं श्रीमदस्मत्पितृचरणकमलेभ्यो नमः । श्रीमन्मरुदेशाधीशयोधपुरनाथहंसवंशावतंसराठोडकुलशिरोमण्यनेकभूपोत्तंसमणिमालामरीचिनीराजितपादपङ्कजस्य राजराजेश्वरमहाराजाधिराजमहाराजाष्टोत्तरशतश्रीयुतमानसिंहस्यात्मजेन पूज्यपादाराध्यश्रीमदानन्दानन्दनाथस्य दयनीयशिष्येणब्रह्मोपेन्द्ररुद्रमहेन्द्रप्रभृत्यशेषलेखमुकुटमालामणिनीराजितपादपीठिकायाश्चतुर्दशभुवनाधीश्वर्याः स्वात्मचिद्रूपाया अनेकश्रीविलसितमहात्रिपुरसुन्दर्याश्चरणपङ्कजचिन्मकरन्दमधुलिहा श्रीमन्मानसिंहपुत्रतख्तसिंहतनययोधपुरनाथसर्वोपमाविराजमानराजराजेश्वरमहाराजाधिराजमहाराजाष्टोत्तरशतश्रीयुतश्रीजसवन्तसिंहशासनस्थितेन श्रीशिवराष्ट्राधीशचतुर्ग्रामाधिपतिना रावराजेन श्रीशोभनसिंहेन स्वर्णसिंहोपनाम्ना मया श्रीकाञ्चीपुरीक्रीडापरायणाया निखिलान्तर्विहारिण्याः श्रीकामाक्ष्याः कृपाकटाक्षवशतः केनचिन्मूकेन लब्धकविसार्वभौमपदेन तस्याः परदेवताया एव कृतानां कटाक्षशतकादिशतकपञ्चकानां स्वर्णमालाख्या टीका विरच्यते ॥ तत्रादौ निर्विघ्नतया ग्रन्थपरिसमाप्तिकामेन श्रीस्वेष्टदेवतायाः प्रार्थनापूर्वकमाशीर्वादात्मकं मङ्गलमाचर्यते ॥ तदनु च श्रीनिजेष्टदेवतापरमकृपापात्रमूककविसार्वभौमस्तदनु च श्रीस्वकीयेष्टदेवतागुणगणप्रकाशिनी महागह्वरार्था कविसार्वभौमवाणी नमस्क्रियते स्तूयते च ॥

संसारतापतप्तानां प्रपन्नानां पराम्बिके। पादाब्जशीतलच्छाया संतापं हरतु क्षणात् ॥ १ ॥ तं वन्देऽद्वैतशृङ्गारलीलावत्या मनोहरम् । चित्रं काव्यं कृतं येन कामाक्ष्या मूकसूरिणा ॥२॥ शृङ्गाराद्वैतसंपन्नां रसाद्वैतविधायिनीम् । कामाक्ष्याः स्तुतिरूपां तां वन्दे मूककवेर्गिरम् ॥ ३ ॥ जयन्ति मूकस्य कवेर्गिरः पराप्रसादकन्येकनृपस्य मङ्गलाः । शिरोधृताः कण्ठकृता महात्मभिः सुवर्णमाला इव शोभयन्ति तान् ॥ ४ ॥ मूकस्य मातुः कृतिनो जनस्य सारस्वते तीर्थवरे सुवन्द्ये । मज्जामि तद्वत्स्वशिवाय लोके यथा तथा गाङ्गजले मनुष्यः ॥ ५ ॥ व्याकरणं नाधीतं कोशः काव्यादिशास्त्रं च ॥ वागीश्वरीप्रसादाद्रचयामि श्लोकमनवद्यं ॥ ६ ॥ (अत्राधिकारी) कवितारसज्ञवीरो रसवेत्ता मन्त्रतन्त्रयन्त्राणाम्। मातुः पदाब्जभृङ्गः कविसम्राड्भुक्तिरसमुक्सः॥७॥

मोहान्धकारनिवहं विनिहन्तुमीडे मूकात्मनामपि महाकवितावदान्यान् ॥
श्रीकाञ्चिदेशशिशिरीकृतिजागरूकानेकाम्रनाथतरुणीकरुणावलोकान् ॥ १ ॥

अन्वयः—अहं मूककविर्मूकात्मनामपि महाकवितावदान्यान् श्रीकाञ्चिदेशशिशिरीकृतिजागरूकान्, एकाम्रनाथतरुणीकरुणावलोकान् ईडे. किं कर्तुं, मोहान्धकारनिवहं विनिहन्तुम् ॥ १ ॥

**टीका** ॥ अहं मूककविः श्रीमत्याः कामाक्ष्याः कृपाकटाक्षेण प्राप्तकविसार्वभौमपदः मूकात्मनां मूका वाग्विरहिता आत्मान उपाधिवशाज्जीवाः शरीराणि मनांसि धियो वा येषां ते तथोक्तास्तेषामपि। कवेः कृतिः कविता महती याऽसौ कविता तयोक्ता, तस्यां वदान्यानुदारान्दानशौण्डानित्यर्थः। श्रिया शोभया संपदा वा युक्ता या काञ्चिपुरी सैव देशो निवासभूमिर्येषां तेषां, शिशिरीकृतौ शीतलीकरणे जागरूकान् सावधानान्। एकाम्रनाथनामकः श्रीशिवः श्रीकाञ्चिपुर्यां प्रसिद्धः। यद्वा एको मुख्योऽन्यवृक्षाणां मध्ये श्रेष्ठः पञ्चविधरसवत्त्वेनानेकविधरसवत्त्वेन वाऽम्रवदाम्रः। एकश्चासावाम्रश्चैकाम्रः जगत्। यद्वा अमति गच्छतीतिव्युत्पत्तेराम्रं जगत्। एकमद्वयं च तदाम्रमेकाम्रं तस्य नाथः स्वामी जगदीश्वर इत्यर्थः। यद्वा "एकोऽहं बहुस्यां प्रजायेय" इतिश्रुत्या एकोऽद्वयः सजातीयविजातीयस्वगतभेदशून्य ईश्वर एवाम्रो जगत्तद्रूपेण क्रीडार्थं परिणतः॥ "हरिरेव जगज्जगदेव हरिः" इत्यादिवेदान्तवाक्यप्रतिपादितं वस्तु परं ब्रह्म स एव नाथः तस्य तरुणी महिषी॥ "गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम्। तुरीया कापि त्वं दुरधिगमनिःसीममहिमा महामाये विश्वं भ्रमयसि परब्रह्ममहिषी" इति श्रीमद्भगवत्पूज्यपादश्रीमच्छंकरस्वामिमहावाक्योक्तेः। एकाम्रनाथतरुणी परब्रह्ममहिषी परशिवपट्टराज्ञी कामाक्षी। यद्वा एकाम्रनाथ एव तरुणी आत्मनोर्द्धं पत्नी। यतः "जगत्सृष्टिकेलिवेलायां एकाकी न रमते पतिश्च पत्नी च" इति श्रुतेः परमेश्वर एव दिव्यदम्पतिरूपमभजत्। तेन च तद्रूपिणी निगमागमसिद्धा तस्याः करुणायुतान् अवलोकान्कटाक्षान् ईडे स्तौमि। किं कर्तुम्। मोहोऽज्ञानमेवान्धकारस्तमो वस्तु ज्ञानावरोधकत्वात्, तस्य निवहं समूहं विनिहन्तुं विध्वंसितुमित्यर्थः॥ १ ॥

मातर्जयन्ति ममताग्रहमोक्षणानि माहेन्द्रनीलरुचिशिक्षणदक्षिणानि ॥
कामाक्षि कल्पितजगत्त्रयरक्षणानि त्वद्वीक्षणानि वरदानविचक्षणानि ॥ २॥

अन्वयः ॥ हे मातः कामाक्षि ममताग्रहमोक्षणानि माहेन्द्रनीलरुचिशिक्षणदक्षिणानि कल्पितजगत्त्रयरक्षणानि वरदानविचक्षणानि त्वद्वीक्षणानि जयन्ति ॥ २ ॥

टीका॥ कामो मनोभवः । यद्वा कामाः कामनाः पुरुषार्थचतुष्टयरूपा देयत्वेनाक्ष्णोर्यस्यास्तत्संबुद्धौ, हे कामाक्षि! "कामा यस्याः कटाक्षेण प्राप्यन्ते कृतिभिः क्षणात् । तेनासौ जगति ख्याता कामाक्षी नामतो बुधैः" इति । ममतैव ग्रहो बन्धकत्वात् । यद्वा ममताया अयं आग्रहो ममेदं शरीरं धनमित्यादिस्तस्य मोक्षणं यैस्तानि माहेन्द्रनीलमणीनां रुचिशिक्षणे दक्षिणानि नीलरत्नस्य तेजःपाटवशिक्षायां चतुराणीत्यर्थः । यद्वा माहेन्द्रनीलरुचिरिव रुचिर्यस्य स एतादृशो विष्णुस्तस्य शिक्षणे दुष्टदानवदण्डादिना जगत्पोषणशिक्षणे चतुराणि । अत एव "कल्पितजगत्त्रयरक्षणानि" इति विशेषणम् । कल्पितं जगत्त्रयरक्षणं यैस्तानि । यथा कश्चिद्धस्तचातुर्यादिकार्यं स्वयं कृत्वाऽन्यं दर्शयित्वा तद्धस्तेन कारयति, तथा स्वकल्पितजगत्त्रयरक्षणं स्वयं कृत्वा विष्णुं शिक्षयन्तीत्यर्थः यद्वा कल्पितं जगत्त्रयं येन स ब्रह्मा तस्य रक्षणं यैस्तानि । एतच्चरित्रं मार्कण्डेयादिपुराणेषु प्रसिद्धम् वरदानेषु विशेषनिपुणानि त्वद्वीक्षणानि तव निरीक्षणानि जयन्ति सर्वोत्कृष्टतया वर्तन्ते ॥ २ ॥

आनङ्गतन्त्रविधिदर्शितकौशलानामानन्दमन्दपरिघूर्णनमन्थराणाम् ॥
तारल्यमम्ब तव ताडितकर्णसीम्नां कामाक्षि खेलति कटाक्षनिरीक्षणानाम् ॥३॥

अन्वयः ॥ हे अम्ब हे कामाक्षि आनङ्गतन्त्रविधिदर्शितकौशलानां आनन्दमन्दपरिघूर्णनमन्थराणां ताडितकर्णसीम्नां तव कटाक्षनिरीक्षणानां तारल्यं खेलति ॥ ३ ॥

टीका ॥ हे अम्ब कामाक्षि अनङ्गस्येदमानङ्गं आनङ्गं यत्तन्त्रं शास्त्रं तदुक्तो यो विधिर्विधानं तत्र तेन वा दर्शितं कौशलं चातुर्यम् । यद्वा आनङ्गक्रियाया विधेर्दर्शितं कौशलं यैस्तेषाम् । आनन्दं सुखं तेन मन्दमीषत्परि समन्ताद्यद्घूर्णनं तेन मन्थराणां मन्दगतीनां मनोहराणां वा । ताडिता कर्णसीमा यैस्तेषां कर्णान्तविश्रान्तानामित्यर्थः ॥ तव कटाक्षेण युक्तानि निरीक्षणानि तेषां तारल्यं चापल्यं खेलति क्रीडति ॥ ३ ॥

कल्लोलितेन करुणारसवेल्लितेन कल्माषितेन कमनीयमृदुस्मितेन ॥

मामञ्चितेन तव किञ्चन कुञ्चितेन कामाक्षि तेन शिशिरीकुरु वीक्षितेन ॥ ४ ॥

अन्वयः॥ हे कामाक्षि करुणारसवेल्लितेन कल्लोलितेन कमनीयमृदुस्मितेन कल्माषितेन अञ्चितेन किंचन कुञ्चितेन तेन तव वीक्षितेन मां शिशिरीकुरु ॥ ४ ॥

टीका ॥ हे कामाक्षि करुणारूपो यो रसस्तेन वेल्लितं कम्पितं तेन हेतुना कल्लोलितेन तरङ्गितेन कमनीयं मनोज्ञं यन्मृदु स्मितं तेन । कल्माषितेन शबलेन अञ्चितेन पूजितेन किंचनेषद्वक्रेण तव तेन सुप्रसिद्धमहिम्ना वीक्षितेन मां शिशिरीकुरु । यद्वा मामञ्चितेन मां प्रति गतेन प्राप्तेन शिशिरीकुर्वित्यर्थः । अभूततद्भावे च्विः ॥ ४ ॥

साहाय्यकं गतवती मुहुरर्जुनस्य मन्दस्मितेन परितोषितभीमचेताः ॥
कामाक्षि पाण्डवचमूरिव तावकीना कर्णान्तिकं चलति हन्त कटाक्षलक्ष्मीः॥५॥

अन्वयः॥ हे कामाक्षि तावकीना कटाक्षलक्ष्मीः पाण्डवचमूरिव अर्जुनस्य साहाय्यकं गतवती मन्दस्मितेन परितोषितभीमचेताः हन्त मुहुः कर्णान्तिकं चलति ॥ ५ ॥

टीका ॥ हे कामाक्षि तावकीना त्वदीया कटाक्षशोभा पाण्डवचमूरिव पाण्डवानां सेनेव अर्जुनस्य शुक्लवर्णवतो मन्दहासस्य, चमूपक्षे मध्यमपाण्डवस्य, साहाय्यकं सहायतां गतवती प्राप्तवती । मन्दस्मितमर्जुनं चाति शोभयन्ती रक्षयन्ती च । मन्दस्मितेन शृङ्गाररसावेशेन मन्दहास्येन परितोषितं भीमस्य शिवस्य चेतो मानसं यया । शिवस्याष्टमूर्तिमध्ये भीमनामपठनात् । चमूपक्षे दानमानाभ्यां रणमरणोत्सवाच्च मन्दस्मितेन परितोषितं भीमस्य युधिष्ठिरानुजस्य चेतो यया । हन्तेति हर्षे मुहुः कर्णान्तिकं कर्णस्य श्रवणस्य, चमूपक्षे आधिरथस्याङ्गदेशाधिपस्यान्तिकं समीपं चलति संचरति । वाचकोपमानोपमेयधर्माणामुपादानात्पूर्णोपमालंकारः । तदुक्तम् । " उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः " इति ॥ ५ ॥

अस्तं क्षणान्नयतु मे परितापसूर्यमानन्दचन्द्रमसमानयतां प्रकाशम् ॥
कालान्धकारसुषमां कलयन्दिगन्ते कामाक्षिकोमलकटाक्षनिशागमस्ते ॥ ६ ॥

अन्वयः॥ हे कामाक्षि ते कोमलकटाक्षनिशागमः कालान्धकारसुषमां दिगन्ते कलयन्मे परितापसूर्यं क्षणादस्तं नयतु । आनन्दचन्द्रमसं प्रकाशमानयताम् ॥ ६ ॥

टीका ॥ हे कामाक्षि ते तव कोमलो मृदुलः कटाक्षएव निशागमः श्यामत्वसाधर्म्यात्, कालान्धकारस्य गाढतमसः सुषमां शोभां दिगन्ते दिशां पर्यन्ते कलयन् रचयन् व्यापयन्नित्यर्थः। मे परिताप एव सूर्यस्तं क्षणाच्छीघ्रमेवास्तं प्रापयतु संसारतापं हरत्वित्यर्थः। तापहरणानन्तरमानन्दस्यैवोत्पद्यमानत्वादानन्दरूपं चन्द्रं प्रकाशमानयताम्। निशागमे चन्द्रस्योदय संभवाच्चेत्यर्थः ॥ ६ ॥

ताटङ्कमौक्तिकरुगङ्कुरदन्तकान्तिः कारुण्यहस्तिपशिखामणिनाधिरूढः ॥
उन्मूलयत्वशुभपादपमस्मदीयं कामाक्षि तावककटाक्षमतङ्गजेन्द्रः ॥ ७ ॥

अन्वयः ॥ हे कामाक्षि ताटङ्कमौक्तिकरुगङ्कुरदन्तकान्तिः कारुण्यहस्तिपशिखामणिनाधिरूढः तावककटाक्षमतङ्गजेन्द्रोऽस्मदीयमशुभपादपमुन्मूलयतु ॥ ७ ॥

टीका ॥ हे कामाक्षि ताटङ्कयोर्मुक्ताफलानां या रुद्दीप्तिः तस्या अङ्कुरोमिनवोद्गम एव दन्तकान्तिर्यस्य सः, करुणाया भावः कारुण्यं तदेव हस्तिपशिखामणिर्महामात्रश्रेष्ठस्तेनाधिरूढः त्वदीयकटाक्ष एव मतङ्गजेन्द्रो हस्तीन्द्रोऽस्माकमशुभपादपं पापतरुमुन्मूलयतु मूलत उत्पाटयतु ॥ ७ ॥

छायाभरेण जगतां परितापहारी ताटङ्करत्नमणिपल्लवतल्लजश्रीः ॥
कारुण्यनाम विकिरन्मकरन्दजालं कामाक्षि राजति कटाक्षसुरद्रुमस्ते ॥ ८ ॥

अन्वयः ॥ हे कामाक्षि छायाभरेण जगतां परितापहारी ताटङ्करत्नमणिपल्लवतल्लजश्रीः ते कटाक्षसुरद्रुमः कारुण्यनाम मकरन्दजालं विकिरन् राजति ॥ ८ ॥

टीका ॥ सर्वसेवकमनोभिलषितकामपरिपूरकत्वेन कल्पद्रुमसाम्यं भावयन् श्रीकामाक्ष्याः कटाक्षं स्तौति। हे कामाक्षि ! छायाया आतपाभावस्य कान्तेश्च भरेण पूरेण जगतां परितापहरणशीलः ताटङ्कयोः कर्णाभरणयोर्यानि रत्नानि मणयश्च त एव पल्लवतल्लजाः पल्लवश्रेष्ठास्तेषां मनोहरा श्रीर्यस्य सः ते तव कटाक्ष एव सुरद्रुमः कल्पवृक्षः कारुण्यनाम मकरन्दस्य पुष्परसस्य समूहं विकिरतीति तथासन्राजति शोमते ॥ ८ ॥

सूर्याश्रयप्रणयिनी मणिकुण्डलांशुलौहित्यकोकनदकाननमाननीया ॥
यान्ती तव स्मरहराननकान्तिसिन्धुं कामाक्षि राजति कटाक्षकलिन्दकन्या ॥८॥

अन्वयः ॥ हे कामाक्षि सूर्याश्रयप्रणयिनी मणिकुण्डलांशुलौहित्यकोकनदकाननमाननीया स्मरहराननकान्तिसिन्धुं यान्ती तव कटाक्षकालिन्दकन्या राजति ॥ ९ ॥

टीका ॥ हे कामाक्षि! सूर्यस्याश्रयः सूर्याश्रयः सूर्याधारः परब्रह्म परशिवः। यद्वा सूर्य आश्रयः स्थानं यस्य स सूर्याश्रयः परशिवः। साधकानां परब्रह्मणो रूपस्य ध्यानार्थं सूर्यस्य पीठवत्स्थानत्वेन वर्णनात्तस्मिन्प्रणयः स्नेहोऽस्या अस्तीति सा। कलिन्दकन्यापक्षे तु सूर्याश्रये सूर्यगृहे प्रणयो यस्याः। पितृगृहे हि कन्यानां स्नेहो भवत्येव। माणिक्यमणिकुण्डलानां येंऽशवो रश्मयस्तेषां यल्लौहित्यं तदेव कोकनदानां रक्तपङ्कजजातिविशेषाणां यत्काननं वनं समूह इत्यर्थः। तेन तत्र वा माननीया अधिकशोभावतीत्वान्मानार्हा भवति। स्मरं कामं हरतीति स्मरहरः शिवः तस्याननकान्तिरेव सिन्धुस्तं यान्ती प्राप्नुवन्ती तव कटाक्ष एव कलिन्दकन्या यमुना राजति शोभते। वर्णशीलसाम्यात्कटाक्षयमुनयो रूपकम् ॥ ९ ॥

प्राप्नोति यं सुकृतिनं तव पक्षपातात्कामाक्षि वीक्षणविलासकलापुरन्ध्री ॥
सद्यस्तमेव किल मुक्तिवधूर्वृणीते तस्मान्नितान्तमनयोरिदमैकमत्यम् ॥ १० ॥

अन्वयः ॥ हे कामाक्षि तव पक्षपाताद्वीक्षणविलासकलापुरन्ध्री यं सुकृतिनं प्राप्नोति मुक्तिवधूः सद्यस्तमेव वृणीते तस्मादनयोरिदं नितान्तमैकमत्यं किल ॥ १० ॥

टीका ॥ हे कामाक्षि तव पक्षपातात्त्वत्पादाब्जसंश्रयणात् विशेषेण अतिशयकारुण्येन यदीक्षणं तस्य यो विलासः क्रीडा तस्य कला सैव पुरन्ध्री यं सुकृतिनं सुकर्मकारिणं सर्वात्मना त्वत्सेवकं जनं प्राप्नोति। सद्यस्तस्मिन्नेव समये तमेव जनं निश्चयेन मुक्तिरूपा वधूः कान्ता वृणीते स्वीकुरुते भजते इति यावत्। तस्मादेतयोरनयोस्तव वीक्षणविलासकलापुरन्ध्रीमुक्तिवध्वोरिदं यत्त्वद्भक्तजनवरणं तन्नितान्तमत्यर्थमैकमत्यम्। एक एवाध्यवसायः किलेति सत्यमित्यर्थः ॥ १० ॥

यान्ती सदैव मरुतामनुकूलभावं भ्रूवल्लिशक्रधनुरुल्लसिता रसार्द्रा ॥
कामाक्षि कौतुकतरङ्गितनीलकण्ठा कादम्बिनीव तव भाति कटाक्षमाला ॥ ११ ॥

अन्वयः ॥ हे कामाक्षि सदैव मरुतामनुकूलभावं यान्ती भ्रूवल्लिशक्रधनुरुल्लसिता रसार्द्रा कौतुकतरङ्गितनीलकण्ठा तव कटाक्षमाला कादम्बिनीव भाति ॥ ११ ॥

टीका ॥ हे कामाक्षि सदैव सर्वकालं मरुतां मरुद्गणदेवानामनुकूलभावं इष्टाचरणत्वं

यान्ती । कादम्बिन्यपि मरुतां वायूनामनुकूलं यान्ती । भ्रूवल्लिरैवेन्द्रधनुस्तेनोल्लसिता उत्कृष्टतया शोभिता । सापि भ्रूवल्लीवेन्द्रधनुस्तेनोल्लसिता । रसेन श्रृङ्गारेणार्द्रा स्निग्धा । सापि रसेन जलेनार्द्रा । कौतुकेन क्रीडया तरङ्गितो हर्षितो नीलकण्ठः कालकण्ठः शिवो यया कटाक्षमालया । कादम्बिनीपक्षे नीलकण्ठो मयूरः । ईदृशी तव कटाक्षमाला कटाक्षपरंपरा कादम्बिनीव मेघमालेव विशेषेण शोभत इत्यर्थः ॥ ११ ॥

गङ्गाम्भसि स्मितमये तपनात्मजेव गङ्गाधरोरसि नवोत्पलमालिकेव ॥
वक्त्रप्रभासरसि शैवलमण्डलीव कामाक्षि राजति कटाक्षरुचिच्छटा ते ॥१२॥

अन्वयः ॥ हे कामाक्षि ते कटाक्षरुचिच्छटा स्मितमये गङ्गाम्भसि तपनात्मजेव गङ्गाधरोरसि नवोत्पलमालिकेव वक्त्रप्रभासरसि शैवलमण्डलीव राजति ॥ १२ ॥

टीका ॥ हे कामाक्षि! ते तव कटाक्षस्य शोभायाश्छटा परंपरा स्मितमये श्वेतत्वशीतलत्वसाधर्म्यात्स्मितरूपे गङ्गाजले कटाक्षरुचिच्छटायाः कृष्णत्वसाम्यात्तपनस्य भानोरात्मजा कालिन्दीव गङ्गाधरस्योरसि वक्षःस्थले नवोत्पलानां नूतनश्यामसरोजानां मालेव वक्त्रस्य मुखस्य प्रभायाः कान्तेः सरसि सरोवरे शैवलमण्डलीव शैवलस्य शैवालस्य समूह इव राजति शोभते ॥ १२ ॥

संस्कारतः किमपि कन्दलितान्रसज्ञकेदारसीम्नि सुधियामुपभोग्यभाग्यान् ॥
कल्याणसूक्तिलहरीकलमाङ्कुराज्ञः कामाक्षि कन्दलयतु त्वदपाङ्गमेघः ॥ १३ ॥

अन्वयः ॥ हे कामाक्षि त्वदपाङ्गमेघः किमपि संस्कारतः रसज्ञकेदारसीम्नि कन्दलितान्सुधियामुपभोग्यभाग्यान् कल्याणसूक्तिलहरीकलमाङ्कुराज्ञः कन्दलयतु ॥ १३ ॥

टीका ॥ हे कामाक्षि! तव कटाक्षमेघः संस्कारतः यमनियमादिना तव चरणाराधनरूपतः रसो भक्तिरसस्तज्ज्ञो यो जनस्तद्रूपे केदारसीम्नि धान्यवपनक्षेत्रप्रान्ते किमपि कन्दलितान्किंचिदेवोद्गतान्सुधियामुपासनामार्गतत्पराणामुपभोग्यभागधेयरूपान्नोस्माकं श्रीकामाक्षीचरणशरणापन्नानां कल्याणरूपसूक्तीनां लहर्यः परंपरास्ता एव कलमस्य धान्यविशेषस्याङ्कुरास्तान् बीजादभिनवोत्पन्नान् कन्दलयतु अङ्कुरयत्वित्यर्थः ॥ १३ ॥

चाञ्चल्यमेव नियतं कलयन्प्रकृत्या मालिन्यभूः श्रुतिपथाक्रमजागरूकः ॥
कैवल्यमेव किमु कल्पयते नतानां कामाक्षि चित्रमपि ते करुणाकटाक्षः ॥ १४ ॥

अन्वयः ॥ हे कामाक्षि प्रकृत्या मालिन्यभूः प्रकृत्या श्रुतिपथाक्रमजागरूकस्ते करुणा कटाक्षः प्रकृत्या चाञ्चल्यमेव नियतं कलयन्नपि नतानां कैवल्यमेव किमु कल्पयत इति चित्रम् ॥ १४ ॥

टीका ॥ हे कामाक्षि! स्वभावेन मालिन्यस्य मलिनतायाः कालिमाया भूर्भूमिः श्यामवर्णत्वात्। स्वभावेन श्रुतिपथस्य कर्णमार्गस्य वेदमार्गस्य चाक्रमे गमने पीडने च जागरूकः सावधानः ते तव करुणायुक्तः कटाक्षः प्रकृत्या स्वभावेन चाञ्चल्यं-चपलतामेव नियतं नित्यं कलयन्नपि नतानां तव पादाब्जयोर्नम्रीभूतानां कैवल्यं मोक्षमेव किमु इति वितर्के कल्पयते रचयाति इति महदाश्चर्यम् ॥ १४ ॥

संजीवने जननि चूतशिलीमुखस्य संमोहने शशिकिशोरकशेखरस्य ॥
संस्तम्भने च ममताग्रहचेष्टितस्य कामाक्षि वीक्षणकला परमौषधं ते ॥ १५ ॥

अन्वयः ॥ हे जननि! हे कामाक्षि! चूतशिलीमुखस्य संजीवने शशिकिशोरकशेखरस्य संमोहने ममताग्रहचेष्टितस्य संस्तम्भने च ते वीक्षणकला परमौषधमस्तीति शेषः ॥ १५ ॥

टीका ॥ हे मातः कामाक्षि चूतशिलीमुखस्याम्रमञ्जरीबाणस्य कामदेवस्य गतासोः पुनरुज्जीवने संजीवननिमित्तं शशिकिशोरकशेखरस्यार्द्धचन्द्रशेखरस्य संमोहने वशीकरणनिमित्तं च पुनः ममतारूपो यो ग्रहो भूतप्रेतादिरूपस्तच्चेष्टितस्य जनस्य संस्तम्भने सम्यग्रोधननिमित्तं ते तव वीक्षणकला निरीक्षणलेशः परमौषधं परमभेषजमस्तीति शेषः ॥ १५ ॥

नीलोपि रागमधिकं जनयन्पुरारेर्लोलोपि भक्तिमधिकां दृढयन्नराणाम् ॥
वक्रोपि देवि नमतां समतां वितन्वन्कामाक्षि नृत्यतु मयि त्वदपाङ्गपातः॥ १६॥

अन्वयः ॥ हे देवि! हे कामाक्षि! नीलोपि पुरारेरधिकं रागं जनयन् लोलोपि नमतां नराणामधिकां भक्तिं दृढयन् वक्रोपि समतां वितन्वन् त्वदपाङ्गपातो मयि नृत्यतु॥१६॥

टीका ॥ हे देवि! हे कामाक्षि! नीलोपि श्यामोपि पुरारेः श्रीशिवस्याधिकं पूर्णं रागमनुरागं रक्तवर्णं च जनयन् प्रकटयन् लोलोपि चपलोऽपि नमतां प्रणतिं कुर्वतां जनानामधिकां भक्तिं प्रेमलक्षणां दृढयन्दृढीकुर्वन् वक्रोऽपि कुटिलोपि तेषामेव समतां सर्वत्राद्वैतभावं वितन्वन्विस्तारयंस्तव दृगन्तपातः मयि नृत्यतु दयया नृत्यतामित्यर्थः । नीलोपि रागं जनयन् लोलोपि भक्तिं दृढयन्वक्रोपि समतां वितन्वन् इति विरोधालंकारः ॥

कामद्रुहो हृदययन्त्रणजागरूका कामाक्षि चञ्चलदृगञ्चलमेखला ते ॥
आश्चर्यमम्ब भजतां झटिति स्वकीयसंपर्क एव विधुनोति समस्तबन्धान् ॥ १७॥

अन्वयः॥ हे अम्ब! हे कामाक्षि! कामद्रुहो हृदययन्त्रणजागरूका ते चञ्चलदृगञ्चलमेखला स्वकीयसंपर्के एव भजतां झटिति समस्तबन्धान्विधुनोति आश्चर्यमेतत्॥ १७॥

टीका॥ हे मातः हे कामाक्षि! कामद्रुहः कामारेः श्रीशिवस्य हृदययन्त्रणे मानसबन्धने जागरूका सावधाना ते तव चञ्चला या दृगञ्चलमेखला कटाक्षरज्जुः सा भजतां सेवमानानां स्वकीयसंपर्के निजसंसर्गे एव झटिति तत्क्षणं समस्तान्देहादिषु स्नेहपाशबन्धान् विधुनोति त्रोटयति मुक्तिं कुरुत इति भावः। अहो चित्रमेतत् मेखलातो हि बन्धनं भवति, तद्विपरीतं चैतत्समस्तबन्धनानि विधुनोतीति। अत्रापि विरोधालंकार एव॥ १७॥

कुण्ठीकरोतु विपदं मम कुञ्चितभ्रूचापाञ्चितः श्रितविदेहभवानुरागः॥
रक्षोपकारमनिशं जनयञ्जगत्यां कामाक्षि राम इव ते करुणाकटाक्षः॥ १८॥

अन्वयः॥ हे कामाक्षि! ते करुणाकटाक्षो राम इव कुञ्चितभ्रूचापाञ्चितः श्रितविदेहभवानुरागोऽनिशं जगत्यां रक्षोपकारं जनयन्मम विपदं कुण्ठीकरोतु॥ १८॥

टीका॥ हे कामाक्षि! ते तव करुणाकटाक्षो रामो दाशरथिरिव कुञ्चितभ्रूचापाञ्चितः कुञ्चिताः कुटिलिता भ्रुवौ च चापश्च तैर्युक्तः श्लाघितो वा। कटाक्षोपि कुञ्चितौ रसावेशादविकचक्रितौ भ्रूरूपौ चापौ ताभ्यामञ्चितः। अधिकसौन्दर्यबलविराजित इत्यर्थः। पक्षे श्रितो विदेहभवायां जनकजायामनुरागः स्नेहो येन सः। कटाक्षपक्षे श्रित आश्रितो विदेहादनङ्गाद्भवो जातोऽनुरागः स्नेहो येन सः। पक्षे रक्षसामपकारमुत्पादयन्। कटाक्षपक्षे अनिशं निरन्तरं जगतीतले रक्षया उपकारं जनयन्, मम विपदमापदं कुण्ठीकरोतु संस्तम्भयतु। आपत्कृतं दुःखं नाशयत्वित्यर्थः॥ अत्र पूर्णोपमालंकारः॥ १८॥

श्रीकामकोटिशिवलोचनशोषितस्य शृङ्गारबीजविभवस्य पुनःप्ररोहे॥
प्रेमाम्भसार्द्रमचिरात्प्रचुरेण शङ्के केदारमम्ब तव केवलदृष्टिपातम्॥ १९॥

अन्वयः॥ हे अम्ब! हे श्रीकामकोटि! शिवलोचनशोषितस्य शृङ्गारबीजविभवस्य अचिरात्पुनः प्ररोहे प्रचुरेण प्रेमाम्भसार्द्रं तव केवलदृष्टिपातं केदारं शङ्के॥ १९॥

टीका॥ हे अम्ब! श्रिया शोभया युक्तः कामः कोट्यामग्रभागे शिवं जेतुं यस्याः सा हे तादृशि। यद्वा श्रिया लक्ष्म्या युक्तानां कामानां कामनानां कार्याणामिति वा कोट्यो यस्याः सकाशात्सा तत्संबुद्धौ हे श्रीकामकोटि! असंख्यकामपूरिणि! शिवस्य तृतीयलोचनेन

शोषितस्य दग्धस्य शृङ्गाररसस्य यो बीजः कारणं कामस्तस्य यो विभवो विशेषेण जन्म वैभवो वा तस्याऽचिरादाशु पुनःप्ररोहे पुनरुद्गमे प्रचुरेण बहुलेन प्रेमाम्भसा स्नेहजलेनार्द्रं सिक्तं तव केवलं दृष्टिपातमेव केदारमालवालमहं शङ्के । तर्कयामि अत्रोत्प्रेक्षालंकारः ॥ १९ ॥

माहात्म्यशेवधिरसौ तव दुर्विलङ्घ्यसंसारविन्ध्यगिरिकुण्ठनकेलिचञ्चुः ॥
धैर्याम्बुधिं पशुपतेश्चुलकीकरोति कामाक्षि वीक्षणविजृम्भणकुम्भजन्मा ॥२०॥

अन्वयः ॥ हे कामाक्षि ! दुर्विलङ्घ्यसंसारविन्ध्यगिरिकुण्ठनकेलिचञ्चुर्माहात्म्यशेवधिरसौ तव वीक्षणविजृम्भणकुम्भजन्मा पशुपतेर्धैर्याम्बुधिं चुलकीकरोति ॥ २० ॥

टीका ॥ हे कामाक्षि ! दुःखेन विलङ्घितुं योग्यो यः संसारः स एव विन्ध्यगिरिस्तस्य कुण्ठने स्तम्भने या केलिः क्रीडा तया वित्तं क्रीडाचञ्चुः, अत एव माहात्म्यशेवधिः प्रभावनिधिरसौ सन्निकृष्टवर्ती तव वीक्षणस्य विजृम्भणं विकाश एव कुम्भजन्मा श्रीअगस्त्यः पशुपतेः श्रीशिवस्य धैर्यं धीरता ज्ञानवैराग्येण या स्वभावस्थितिस्तद्रूपमम्बुधिं जलधिं चुलकीकरोति आचामति ॥ २० ॥

पीयूषवर्षशिशिरा स्फुरदुल्लसच्छ्रीमैत्रीनिसर्गमधुरा कृततारकाप्तिः ॥
कामाक्षि संश्रितवती वपुरष्टमूर्तेर्ज्योत्स्नायते भगवति त्वदपाङ्गमाला ॥ २१ ॥

अन्वयः ॥ हे भगवति ! हे कामाक्षि ! पीयूषवर्षशिशिरा स्फुरदुल्लसच्छ्रीमैत्रीनिसर्गमधुरा कृततारकाप्तिः अष्टमूर्तेर्वपुः संश्रितवती त्वदपाङ्गमाला ज्योत्स्नायते ॥ २१ ॥

टीका ॥ हे भगवति ! भगोऽस्या अस्तीति सा तत्संबुद्धौ हे तथोक्ते ! "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति स्मरणात् । हे षड्विधैश्वर्यसंपन्ने ! यद्वा "उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" हे एतदुक्तलक्षणवति ! हे कामाक्षि ! पीयूषोऽमृतं तस्य वर्षं वृष्टिस्तेन शिशिरा शीतला संसारधर्मपरिहारकत्वात् । ज्योत्स्नापक्षेऽपि तथैवार्थः । स्फुरन्ती प्रकाशमाना उल्लसन्ती शोभमाना या श्रीः शोभा लक्ष्मीश्च तया मैत्री मित्रता प्रीतिर्यस्याः सा । ज्योत्स्नापक्षे श्रीः शोभैव अन्यत्समानम् । अत एव निसर्गमधुरा स्वभावमधुरा । पक्षेपि तथैवार्थः । कृता तारकयोः कनीनिकयोः । यद्वा तारकस्य परमेश्वरस्य तारकाणां पञ्चप्रणवानां

चाऽप्तिः प्राप्तिर्यया सा । पक्षे कृता तारकाणां नक्षत्राणामाप्तिर्ययेति । अष्टमूर्तेः पञ्चभूतसूर्य-चन्द्रयजमानस्वरूपकस्य श्रीशिवस्य वपुर्देहमाश्रितवती । पक्षेऽपि शिवललाटे चन्द्रस्य स्थितत्वेन चन्द्रिकायास्तद्वपुराश्रयणं भवत्येवेति । ईदृशी त्वदपाङ्गमाला तव कटाक्षसरणिर्ज्योत्स्नायते चन्द्रिकेवाचरतीत्यर्थः ॥ २१ ॥

अम्ब स्मरप्रतिभटस्य वपुर्मनोज्ञमम्भोजकाननमिवाञ्चितकण्टकाभम् ।
भृङ्गीव चुम्बति सदैव सपक्षपातात्कामाक्षि कोमलरुचिस्त्वदपाङ्गमाला ॥२२॥

अन्वयः ॥ हे अम्ब ! हे कामाक्षि त्वदपाङ्गमाला कोमलरुचिः सपक्षपाताद्भृङ्गीव अञ्चितकण्टकाभं अम्भोजकाननमिव स्मरप्रतिभटस्य मनोज्ञं वपुः सदैव चुम्बति ॥ २२ ॥

टीका ॥ हे अम्ब ! हे कामाक्षि ! तव कटाक्षमाला कोमला रुचिः कान्तिर्यस्याः सा । शिवस्य सपक्षपातात्पक्षाश्रयणाद्धेतोः।भृङ्ग्या अपि पक्षाभ्यां पुष्पेषु पातः पतनं पक्षपातः। पक्ष-पातेन सह वर्त्तमानं कर्म सपक्षपातं तस्मात् भ्रमरीव अञ्चितकण्टकानां शोभितकण्टकानामाभा कान्तिर्यस्मिंस्तत् अम्भोजानां कमलानां वनमिव स्मरस्य प्रतिभटो योद्धा तस्य मनोज्ञं मनोहरं वपुः शरीरं सदैव सर्वकालं चुम्बति आस्वादत इत्यर्थः । निरन्तरनिरीक्षणमेवात्र चुम्बनम् । शिवशरीरेऽञ्चितकण्टकाभकमलवनस्योपमा तु शंभोः श्रीमत्या दर्शनेन जातमनोभवाद्धेतोरुत्प-न्नसात्त्विकभावाद्रोमाञ्चोद्गमात्, मुखनेत्रहस्तपादानां कमलसादृश्याच्च ॥ २२ ॥

केशप्रभापटलनीलवितानजाले कामाक्षि कुण्डलमणिच्छविदीपशोभे ॥
कम्रे कटाक्षरुचिरङ्गतले कृपाख्या शैलूषकी नटति शंकरवल्लभे ते ॥ २३ ॥

अन्वयः ॥ हे कामाक्षि ! हे शंकरवल्लभे ! केशप्रभापटलनीलवितानजाले कुण्डलमणिच्छ-विदीपशोभे कम्रे कटाक्षरुचिरङ्गतले ते कृपाख्या शैलूषकी नटति ॥ २३ ॥

टीका ॥ हे शंकरस्य वल्लभे प्रिये ! शंकरो वल्लभो यस्या वा । हे कामाक्षि ! केशानां प्रभा कान्तिस्तस्याः पटलं तदेव नीलवितानं तस्य जालं समूहो यस्मिन् तस्मिन् । कुण्डलयो-र्मणीनां छविरेव दीपशोभा यस्मिन् तस्मिन् कम्रे मनोहरे कटाक्षस्य रुचिरेव रङ्गतलं तस्मिन् नटखेलभूमौ ते तव कृपाख्या शैलूषकी कृपानाम्नी नटी नटति नृत्यति खेलतीत्यर्थः ॥ २३ ॥

अत्यन्तशीतलमतन्द्रयतु क्षणार्द्धमस्तोकविभ्रममनङ्गविलासकन्दम् ॥
अल्पस्मितादृतमपारकृपाप्रवाहमक्षिप्ररोहमचिरान्मयि कामकोटि ॥ २४ ॥

अन्वयः॥ हे कामकोटि! अत्यन्तशीतलं अस्तोकविभ्रमं अनङ्गविलासकन्दं अल्पस्मितादृतं अपारकृपाप्रवाहं अक्षिप्ररोहं अचिरात्क्षणार्द्धं मयि अतन्द्रयतु ॥ २४ ॥

टीका ॥ हे कामकोटि! संसारतापापहारकत्वादत्यन्तशीतलम्, न विद्यते स्तोकोऽल्पो विभ्रमो विलासो यस्यतम्, अनङ्गस्य कामदेवस्य यो विलासस्तस्य कन्दं मूलम्, अल्पमीषत्स्मितं मन्दहास्यमादृतमङ्गीकृतं येन तम्, अपारा या कृपा तस्याः प्रवाहो यस्मिन् तम्, एतादृशमक्षिप्ररोहं अक्षिणी प्रकर्षेण रोहते आरूढो भवति यस्तं कटाक्षं अचिरादाशु क्षणार्द्धमत्यन्ताल्पकालमपि मयि अतन्द्रयतु विलसितं करोतु। एतावताप्यहं कृतार्थो भवेयमिति कवेराशयः ॥ २४ ॥

मन्दाक्षरागतरलीकृतिपारतन्त्र्यात्कामाक्षि मन्थरतरां त्वदपाङ्गदोलाम्॥
आरुह्य मन्दमतिकौतुकशालि चक्षुरानन्दमेति मुहुरर्द्धशशाङ्कमौलेः ॥२५॥

अन्वयः ॥ हे कामाक्षि अर्द्धशशाङ्कमौलेरतिकौतुकशालि चक्षुः मन्दाक्षरागतरलीकृतिपारतन्त्र्यान्मन्थरतरां त्वदपाङ्गदोलां मन्दं मुहुरारुह्यानन्दमेति ॥ २५ ॥

टीका ॥ हे कामाक्षि अर्द्धशशाङ्कमौलेरर्द्धचन्द्रशेखरस्य श्रीशिवस्य अतिकौतुकशालि बहुलकौतुकशोभाशालि चक्षुर्लोचनं मन्दाक्षेण लज्जया युक्तो यो रागस्तेन रागेण या तरलीकृतिः चपलीकरणं तत्पारतन्त्र्यात्तत्पारवश्यान्मन्थरतरां अतिशयमन्दगतिं रमणीयगतिं त्वदपाङ्गदोलां तवकटाक्षदोलां मन्दं शनकैर्मुहुर्वारंवारमारुह्य आरूढीभूयानन्दं सुखमेति प्राप्नोतीत्यर्थः ॥ २५ ॥

त्रैयम्बकं त्रिपुरसुन्दरि हर्म्यभूमिरङ्गं विहारसरसी करुणाप्रवाहः ॥
दासाश्च वासवमुखाः परिपालनीयं कामाक्षि विश्वमपि वीक्षणभूभृतस्ते ॥२६॥

अन्वयः ॥ हे कामाक्षि हे त्रिपुरसुन्दरि ते तव वीक्षणभूभृतः त्रैयम्बकमङ्गं हर्म्यभूमिः करुणाप्रवाहो विहारसरसी वासवमुखाश्च दासा विश्वमपि परिपालनीयमित्यन्वयः ॥ २६ ॥

टीका ॥ हे कामाक्षि! हे त्रिपुरसुन्दरि! ब्रह्मादिदेवत्रयं ब्राह्म्यादिदेवीत्रयं चाग्न्यादिधामत्रयं जगति अन्यदपि यद्यत्पदार्थत्रिकं तस्मात्पुराऽग्रे वर्त्तमाना त्रिपुरा। यद्वा त्रीणि वाग्भ-

वादिपुराणि शरीराणि मुखमध्यकत्वधोभागत्वेन यस्याः सा । त्रयो लोकाः पुराणि शरीराणि नगरीरूपाणि वा यस्याः। यद्वा त्रयो ब्रह्मादयः तिस्रो ब्रह्माण्याद्या वा पुराणि शरीराणि यस्याः सा त्रिपुरा सा चासौ सुन्दरी च त्रिपुरसुन्दरी सर्वस्पृहणीया सर्वेषां स्वात्मरूपत्वात् । उक्तं च श्रीतन्त्रराजे "स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा" इति । हे तुरीयब्रह्मरूपसमस्तरूपिणि ते तव वीक्षणभूभृतः कटाक्षरूपस्य राज्ञः त्रैयम्बकमङ्कं शिवशरीरं हर्म्यभूमिः प्रासादतलम् । करुणाप्रवाहः विहारसरसी क्रीडासरोवरः । इन्द्रप्रमुखा देवाश्च दासाः । अतः सर्वमपि जगत्परिपालयितुं योग्यम् । अनेन कटाक्षराज्ञ ऐश्वर्यं वर्णितं वेद्यम् ॥ २६ ॥

वागीश्वरी सहचरी नियमेन लक्ष्मीर्भ्रूवल्लरी वशकरी भुवनानि गेहम् ॥
रूपं त्रिलोकनयनामृतमम्ब तेषां कामाक्षि येषु तव वीक्षणपारतन्त्री ॥ २७ ॥

अन्वयः ॥ हे अम्ब ! हे कामाक्षि ! येषु तव वीक्षणपारतन्त्री तेषां भ्रूवल्लरी वशकरी वागीश्वरी लक्ष्मीश्च नियमेन सहचरी गेहं भुवनानि रूपं त्रिलोकनयनामृतं भवतीति शेषः ॥ २७ ॥

टीका ॥ हे अम्ब ! कामाक्षि ! येषु जनेषु तव वीक्षणपारतन्त्री विक्षणेन कटाक्षेण युक्ता कृपा भवति तेषां भ्रूवल्लरी वशकरी जगत्त्रयवशकरी। वागीश्वरी लक्ष्मीश्च नियमेन सर्वकालसंयोगरूपेण तेषां सहचरी । चतुर्दश भुवनानि तेषां गृहम् । त्रिलोकस्थजनानां नयनामृतं नेत्रलेह्यं तेषां रूपं भवतीति शेषः । तव भक्ताः स्वस्वेच्छापूर्वकं ब्रह्मविष्णुरुद्ररूपा भवन्ति, अतस्तेषां चतुर्दश भुवनानि गेहं भवति । पादारविन्दशतकेऽपि "महाभाष्यव्याख्यापटुशयनमारोपयति वा" इत्याद्युक्तत्वात् । यद्वा तव सारूप्यस्य सायुज्यस्य वा प्राप्त्या भुवनानि गेहं भवति । अथवा तव निर्गुणरूपब्रह्मज्ञानेन तव भक्ता ब्रह्मरूपाः सन्तः सर्वत्र व्यापका भवन्तीति भावः ॥ २७ ॥

माहेश्वरं झटिति मानसमीनमम्ब कामाक्षि धैर्यजलधौ नितरां निमग्नम् ॥
जालेन शृङ्खलयति त्वदपाङ्गनाम्ना विस्तारितेन विषमायुधदासकोसौ ॥ २८ ॥

अन्वयः ॥ हे अम्ब ! हे कामाक्षि ! असौ विषमायुधदासकस्त्वदपाङ्गनाम्ना विस्तारितेन जालेन धैर्यजलधौ नितरां निमग्नं माहेश्वरं मानसमीनं झटिति शृङ्खलयतीत्यन्वयः ॥ २८ ॥

टीका ॥ हे अम्ब ! हे कामाक्षि ! असौ विषमायुधो विषमेपुरेव दासको धीवरस्त्वदपाङ्गनाम्ना तव कटाक्षाख्येन विस्तारितेन जालेन धैर्यं विषयाचाञ्चल्यं तदेव जलधिः तस्मिन्नितरां निमग्नं महेश्वरसंबन्धि मानसमीनं मनोमत्स्यं शृङ्खलयति बध्नाति ॥ २८ ॥

उन्मथ्य बोधकमलाकरमम्ब जाड्यस्तम्बेरमं मम मनोविपिने भ्रमन्तम् ॥
कुण्ठीकुरुष्व तरसा कुटिलाग्रसीम्ना कामाक्षि तावककटाक्षमहाङ्कुशेन ॥२९॥

अन्वयः ॥ हे अम्ब ! हे कामाक्षि ! बोधकमलाकरमुन्मथ्य मनोविपिने भ्रमन्तं मम जाड्यस्तम्बेरमं कुटिलाग्रसीम्ना तावककटाक्षमहाङ्कुशेन तरसा कुण्ठीकुरुष्व त्वमिति शेषः ॥ २९ ॥

टीका ॥ हे अम्ब ! हे कामाक्षि ! । बोधकमलाकरं ज्ञानरूपसरोवरमुन्मथ्य विलोड्य मनोविपिने मानसवने भ्रमन्तं मम जडतारूपं स्तम्बेरमं करिणं कुटिला वक्राऽग्रसीमाभागो यस्य तेन तावकश्चासौ कटाक्षश्च तादृशः स एव महाङ्कुशस्तेन तरसा त्वरितं कुण्ठीकुरुष्व स्तम्भितं कुर्वित्यर्थः ॥ २९ ॥

उद्वेल्लितस्तबकितैर्ललितैर्विलासैरुत्थाय देवि तव गाढकटाक्षकुञ्जात् ॥
दूरं पलाययतु मोहमृगीकुलं मे कामाक्षि सत्वरमनुग्रहकेसरीन्द्रः ॥ ३० ॥

अन्वयः ॥ हे देवि ! हे कामाक्षि ! तवानुग्रहकेसरीन्द्रः गाढकटाक्षकुञ्जादुत्थाय उद्वेल्लितस्तबकितैर्ललितैर्विलासैर्मे मोहमृगीकुलं सत्वरं पलाययतु ॥ ३० ॥

टीका ॥ हे देवि ! द्योतनशीले स्वयं प्रकाशरूपे इति यावत् । हे कामाक्षि ! तवानुग्रहकेसरीन्द्रः प्रसादसिंहश्रेष्ठः गाढं निबिडं यत्कटाक्षरूपं कुञ्जं लतागृहं तस्मादुत्थाय उद्वेल्लिता ऊर्द्ध्ववर्द्धिताश्च ते स्तबकिता गुच्छिताश्च तथाविधास्तैः ललितैर्मनोहरैः विलासैः खेलैर्मे मम मोहोऽज्ञानमेव मृगीकुलं तत् सत्वरं दूरं पलाययतु पलायमानं कारयत्वित्यर्थः ॥३० ॥

स्नेहाद्दृतां विदलितोत्पलकान्तिचोरां जेतारमेव जगदीश्वरि जेतुकामः ॥
मानोद्धतो मकरकेतुरसौ धुनीते कामाक्षि तावककटाक्षकृपाणवल्लीम् ॥ ३१ ॥

अन्वयः॥ हे कामाक्षि ! हे जगदीश्वरि ! मानोद्धतोऽसौ मकरकेतुर्जेतारमेव जेतुकामः स्नेहाद्दृतां विदलितोत्पलकान्तिचोरां तावककटाक्षकृपाणवल्लीं धुनीते ॥ ३१ ॥

टीका ॥ हे कामाक्षि ! हे जगदीश्वरि !. मानोद्धतः मानेनाभिमानेनोद्धतोऽविनीत उल्लङ्घितमर्याद इति यावत् । पूर्वमहं शिवेन जितस्तदा मम हस्ते सच्छस्त्रं नागतमभूत्, इदानीं

श्रीकामाक्ष्याः कटाक्षकृपाणवल्ली मम हस्ते तिष्ठति, अतस्तस्य भिक्षोर्जये मम कोऽतिभार इत्यादि मानसविचारगर्वी, अत एव जेतारं शिवमेव जेतुमिच्छुः असौ मकरकेतुः कामः स्नेहानुरागेण तैलेन चाहतां पूजिताम्। खड्गोपि तैलेनाहतोऽमलस्तिष्ठतीति। विदलितानां विकसितानामुत्पलानां या कान्तिस्तस्याश्चोरां स्वसौन्दर्यातिशयेन कैरवशोभाहारिणीम्। खड्गोपि श्यामवर्णो भवति। एतादृशी तावककटाक्ष एव कृपाणवल्ली तां धुनीते कम्पयतीत्यर्थः ॥ ३१ ॥

श्रौतीं व्रजन्नपि सदा सरणिं मुनीनां कामाक्षि संततमपि स्मृतिमार्गगामी ॥
कौटिल्यमम्ब कथमस्थिरतां च धत्ते चौर्यं च पङ्कजरुचां त्वदपाङ्गपातः॥३२॥

अन्वयः ॥ हे कामाक्षि! हे अम्ब! मुनीनां श्रौतीं सरणिं सदा व्रजन्नपि सततं स्मृतिमार्गगाम्यपि त्वदपाङ्गपातः कौटिल्यमस्थिरतां च पङ्कजरुचां चौर्यं च कथं धत्ते ॥ ३२ ॥

टीका ॥ हे कामाक्षि! हे अम्ब! मुनीनां मननशीलानां श्रौतीं सरणिम्। श्रुतिशब्दो वेदपरः कर्णपरश्च, अतःश्रौतीं सरणिं कर्णमार्गं वेदोक्तमार्गं च सदा व्रजन् गच्छन्नपि संततम्। स्मृतिमार्गगाम्यपीत्यत्र स्मृतिशब्दः स्मरणपरो मन्वादिस्मृतिपरश्च। अतः स्मरणमार्गेण गम्यते प्राप्यते यः स धर्मशास्त्रोक्तमार्गेण गच्छतीत्येवंशीलश्च तथोक्तोपि त्वदपाङ्गपातः तव कटाक्षपातः कौटिल्यं वक्रतां अस्थिरतां चञ्चलतां च पुनः पङ्कजरुचां कमलकान्तीनां चौर्यं चोरकर्म च कथं धत्ते दधातीत्यर्थः ॥ ३२ ॥

नित्यं श्रुतेः परिचितौ यतमानमेव नीलोत्पलं निजसमीपनिवासलोलम्॥
प्रीत्यैव पाठयति वीक्षणदेशिकेन्द्रः कामाक्षि किं नु तव कालिमसंप्रदायम्॥३३॥

अन्वयः—हे कामाक्षि! तव वीक्षणदेशिकेन्द्रः श्रुतेः परिचितौ नित्यं यतमानं निजसमीपनिवासलोलं नीलोत्पलं कालिमसंप्रदायं प्रीत्यैव किं नु पाठयति ॥ ३३॥

टीका ॥ हे कामाक्षि! तव वीक्षणदेशिकेन्द्रः कृपादृष्टिपातरूपोयं गुरूत्तमः श्रुतेः कर्णस्य वेदस्य च परिचितौ प्राप्तौ पूजायां च नित्यं यतमानं यत्नं कुर्वन्तं निजस्य स्वस्य समीपे निवासकरणार्थं लोलं चपलं नीलोत्पलं श्यामसरोजं प्रति कालिमसंप्रदायं प्रीत्यैव स्नेहवात्सल्येनैव किं नु पाठयति किमिति प्रश्ने नु इति वितर्के शिक्षयतीत्यर्थः ॥ ३३ ॥

भ्रान्त्वा मुहुः स्तबकितस्मितफेनराशौ कामाक्षि वक्त्ररुचिसंचयवारिराशौ ॥
आनन्दति त्रिपुरमर्दननेत्रलक्ष्मीरालम्ब्य देवि तव मन्दमपाङ्गसेतुम् ॥३४॥

अन्वयः ॥ हे देवि! हे कामाक्षि! त्रिपुरमर्दननेत्रलक्ष्मीस्तव स्तबकितस्मितफेनराशौ वक्त्ररुचिसंचयवारिराशौ मुहुर्भ्रान्त्वाऽपाङ्गसेतुं मन्दमालम्ब्य आन्दति ॥ ३४ ॥

टीका ॥ हे देवि ! हे कामाक्षि ! त्रिपुरमर्दनः श्रीशिवस्तस्य नेत्रलक्ष्मीर्नेत्रशोभा तव स्तबकितं मालतीपुष्पगुच्छसदृशं यत्स्मितं मन्दहासस्तद्रूपो यः फेनस्तस्य राशिर्यस्मिन् तादृशे वक्त्ररुचिसंचयवारिराशौ वक्त्रस्य मुखस्य या रुचिः शोभा तस्या यः संचयः संग्रहः स एव वारिराशिः समुद्रस्तस्मिन् । मुहुः पुनः पुनर्भ्रान्त्वा इतस्ततोऽटित्वा तवापाङ्गसेतुं कटाक्षतटं मन्दं यथा स्यात्तथा आलम्ब्याश्रित्यानन्दमेति सुखं प्राप्नोतीत्यर्थः । लोके हि सरोवरे क्रीडार्थं जनो भ्रान्त्वा भ्रमणेन श्रमितस्तटे स्थित्वा स्वस्थः सन्मुखमेतीति वत् ॥ ३४ ॥

श्यामा तव त्रिपुरसुन्दरि लोचनश्रीः कामाक्षि कन्दलितमेदुरतारकान्तिः ।
ज्योत्स्नावती स्मितरुचापि कथं तनोति स्पर्धामहो कुवलयैश्च तथा चकोरैः॥३५॥

अन्वयः ॥ हे त्रिपुरसुन्दरि! हे कामाक्षि! कन्दलितमेदुरतारकान्तिः श्यामा तव लोचनश्रीः स्मितरुचा ज्योत्स्नावत्यपि कुवलयैस्तथा चकोरैश्च स्पर्द्धां कथं तनोति अहो ॥ ३५ ॥

टीका ॥ हे त्रिपुरसुंदरि । हे कामाक्षि ! कन्दलिता उद्गमिता मेदुरा मनोहरा स्निग्धा वा तारस्य तारायाः कनीनिकायाश्च कान्तिर्यस्याः यस्यां वा सा तथोक्ता ॥ श्यामा कृष्णापि तव लोचनयोः श्रीः शोभा स्मितरुचा मन्दहासकान्त्या ज्योत्स्नावती चन्द्रिकावत्यपि चकोरैश्चन्द्रानुरागिपक्षिविशेषैः, तथा कुवलयैः श्यामसरोजैः सह स्पर्द्धामीर्षां कथं किमर्थं तनोति विस्तारयतीत्यर्थः । स्वस्य कार्ष्ण्येन सौन्दर्येण च कैरवैः स्पर्द्धा श्रीमत्कामेश्वरमुखारविन्ददर्शने एकाग्रसंलग्नत्वेन चकोरैरीर्षालुत्वं नेत्रलक्ष्म्या इति विवेकः ॥ ३५ ॥

कालाञ्जनं च तव देवि निरीक्षणं च कामाक्षि साम्यसरणिं समुपैति कान्त्या ॥
निःशेषनेत्रसुलभं जगतीषु पूर्वमन्यत्रिनेत्रसुलभं तुहिनाद्रिकन्ये ॥ ३६ ॥

अन्वयः ॥ हे देवि! हे कामाक्षि! हे तुहिनाद्रिकन्ये! कालाञ्जनं तव निरीक्षणं च कान्त्या साम्यसरणिं समुपैति। पूर्वं जगतोऽस्तु निःशेषनेत्रसुलभम्। अन्यत्त्रिनेत्रसुलभमस्तीतिशेषः ॥ ३६॥

टीका ॥ हे देवि! हे कामाक्षि! हे तुहिनाद्रिकन्ये! हे हिमाचलसुते! कालं च तदञ्जनं चेति कर्मधारयः कज्जलं, च पुनः तव निरीक्षणं दृष्टिः कान्त्या श्रिया समस्य भावः साम्यं तस्य सरणिं पद्धतिं समुपैति प्राप्नोति। परंतु तत्र पूर्वं कज्जलं लोकेषु निःशेषाणि सर्वाणि च यानि नेत्राणि तथोक्तानि तेषां निःशेषाणां सर्वेषां जनानां नेत्रार्थे वा, सुलभम्, अतः सामान्यमेतत्। अन्यत्तव निरीक्षणं तु त्रिनेत्रस्य श्रीशिवस्य सुलभम्। यद्वा त्रीणि च यानि नेत्राणि तादृशानि तेषां श्रीशिवसंबन्धिनां सुलभमस्त्यतोऽस्य महदाधिक्यमिति भावः ॥ ३६ ॥

धूमाङ्कुरो मकरकेतनपावकस्य कामाक्षि नेत्ररुचिनीलिमचातुरी ते ॥
अत्यन्तमद्भुतमिदं नयनत्रयस्य हर्षोदयं जनयते हरिणाङ्कमौलेः ॥ ३७ ॥

अन्वयः ॥ हे कामाक्षि! ते नेत्ररुचिनीलिमचातुरी मकरकेतनपावकस्य धूमाङ्कुरः हरिणाङ्कमौलेः नयनत्रयस्य हर्षोदयं जनयते इदमत्यन्तमद्भुतम् ॥ ३७ ॥

टीका ॥ हे कामाक्षि! ते तव नेत्रयोर्या रुचिस्तस्यां या नीलिमा श्यामत्वं तस्या या चातुरी सा, मकरकेतनपावकस्य धूमाङ्कुरः मकरो मत्स्यः केतने ध्वजे यस्य स कामः स एव पावकोऽनलः। वियोगे तापप्रदत्वात्। तस्य धूमाङ्कुरो धूमरूपोऽङ्कुरोऽस्ति स एव हरिणाङ्कमौलेश्चन्द्रशेखरस्य नेत्रत्रिकस्य हर्षोदयमानन्दस्योदयं जनयते प्रकटयते। इदमत्यन्तमद्भुतं महदाश्चर्यमित्यर्थः ॥ ३७ ॥

आरम्भलेशसमये तव वीक्षणस्य कामाक्षि मूकमपि वीक्षणमात्रनम्रम् ॥
सर्वज्ञता सकललोकसमक्षमेव कीर्तिस्त्रयंवरणमाल्यवती वृणीते ॥ ३८ ॥

अन्वयः ॥ हे कामाक्षि! तव वीक्षणस्य आरम्भलेशसमये वीक्षणमात्रनम्रं मूकमपि सकललोकसमक्षमेव कीर्तिस्वयंवरणमाल्यवती सर्वज्ञता वृणीते ॥ ३८ ॥

टीका ॥ हे कामाक्षि! तव वीक्षणस्य विलोकनस्य आरम्भस्तस्य यो लेशस्तस्य समये

काले वीक्षणमात्रेण बहिरेव लोकदृष्ट्या, न तु भक्तियुक्तान्तःकरणेन नम्रं मूकं वाग्घीनमपि कीर्त्तिरेव स्वयंवरणमाल्यं स्वयंवरणमाला तद्वती सर्वज्ञता वृणीते स्वीकुरुत इत्यर्थः ॥ ३८ ॥

कालाम्बुवाह इव ते परितापहारी कामाक्षि पुष्करमधःकुरुते कटाक्षः ॥
पूर्वः परं क्षणरुचा समुपैति मैत्रीमन्यस्तु सन्ततरुचिं प्रकटीकरोति ॥ ३९ ॥

अन्वयः ॥ हे कामाक्षि ! कालाम्बुवाह इव परितापहारी ते कटाक्षः पुष्करमधःकुरुते । पूर्वः क्षणरुचा मैत्रीं समुपैति; परमन्यस्तु सन्ततरुचिं प्रकटीकरोति ॥ ३९ ॥

टीका ॥ हे कामाक्षि ! कालः श्यामश्चासावम्बु जलं वहतीत्यम्बुवाहस्तथोक्तः सजलजलद इत्यर्थः ॥ स इव परितापहारी जलदानात्परितस्तापहारको मेघः । भोगमोक्षदानाच्च ते तव कटाक्षः । पुष्करं जलं कमलं च । " कदम्बमुदकं पाथः पुष्करं सर्वतोमुखम् । पुष्कराम्भोरुहाणि च " इत्यमरसिंहः । अधः कुरुते । मेघो जलं वर्षणसमये नीचैः करोति । कटाक्षस्तु कमलं स्वसौन्दर्याधिक्यात्सदैव नीचैः करोति । तत्र पूर्वो मेघः क्षणरुचा क्षणमत्यल्पकालं रुक् कान्तिः प्रीतिर्वा यस्याः सा तया विद्युता क्षणे वर्षर्तुसमये या रुक्कान्तिः सा क्षणरुक् तया च सह मैत्रीं समुपैति । परं अन्यः कटाक्षस्तु सन्ततरुचिं सदैव कान्तिं कुरुते । यद्वा भक्तमनसि निर्गुणसगुणपरमेश्वरीस्वरूपावभासनेन साधकस्य सन्ततरुचिं सदा प्रकाशं । यद्वा सन्तते नित्ये पराशिवे रुचिं प्रीतिं प्रकटीकरोतीत्यर्थः ॥ ३९ ॥

सूक्ष्मेऽपि दुर्गमतरेऽपि गुरुप्रसादसाहाय्यकेन विचरन्नपवर्गमार्गे ॥
संसारपङ्कनिचये न पतत्यमूं ते कामाक्षि गाढमवलम्ब्यकटाक्षयष्टिम् ॥४०॥

अन्वयः ॥ हे कामाक्षि ! गुरुप्रसादसाहाय्यकेन ते गाढं अमूं कटाक्षयष्टिमवलम्ब्य सूक्ष्मेऽपि दुर्गमतरेऽपि अपवर्गमार्गे विचरन्संसारपङ्कनिचये न पतति । नर इति शेषः ॥ ४० ॥

टीका ॥ गुरोर्यः प्रसादः स एव सहायस्य भावः साहाय्यं साहाय्यमेव साहाय्यकं तेन ते तव गाढं दृढं अमूं कटाक्षलगुडमवलम्ब्याश्रित्य सूक्ष्मे दुर्बोध्येऽपि दुर्गमतरेऽतिकठिनेपि अपवर्गमार्गे कैवल्यमार्गे श्रीशिवोदिते विचरन् गच्छन् सन् संसारोऽज्ञानमेव पङ्कः कर्दमस्तस्य निचये समूहे न पतति । लोकेपि सहायवान् दण्डहस्तः पुमान् सूक्ष्मे कठिनतरे चौरादिभीतिमतिमार्गे यथा विचरन् सन्कुशलीभवति तथा ते कटाक्षयष्ट्यवलम्बी गुरुप्रसादसाहाय्यकेन सुकठिने मुक्तिमार्गे विचरन्नपि मार्गच्युतो न भवति, न चाधः पतति संप्राप्तपदश्च नरो भवतीति भावः ॥४०॥

कामाक्षि सन्ततमसौ हरिनीलरत्नस्तम्भे कटाक्षरुचिपुञ्जमये भवत्याः ॥
बद्धोपि भक्तिनिगडैर्मम चित्तहस्ती स्तम्भं च बन्धमपि मुञ्चति हन्त चित्रम् ॥ ४१ ॥

अन्वयः ॥ हे कामाक्षि ! मम असौ चित्तहस्ती भवत्याः कटाक्षरुचिपुञ्जमये हरिनीलरत्नस्तम्भे सन्ततं भक्तिनिगडैर्बद्धोपि स्तम्भं च बन्धमपि मुञ्चति हन्त चित्रम् ॥ ४१ ॥

टीका ॥ हे कामाक्षि ! मम असौ चित्तमेव हस्ती भवत्याः कटाक्षस्य रुचेः शोभायाः पुञ्जमये समूहमये । इन्द्रनीलमणिस्तम्भे सन्ततमनारतं भक्तिरूपैर्निगडैः शृङ्खलाभिर्बद्धोऽपि स्तम्भं बन्धमपि च मुञ्चति त्यजति हन्त इति हर्षे चित्रमाश्चर्यमेतत् ॥ अन्यपुरुषो वा हस्ती वा शृङ्खलितः स्तम्भे बन्धनं स्तम्भं च कथं मुञ्चति ॥ तव भक्तिशृङ्खलितः कटाक्षस्तम्भबद्धः । स तु चित्तहस्ती बन्धं कर्मरूपं स्तम्भमज्ञानरूपं च मुञ्चति महदाश्चर्यमहिमा तव भक्तिकटाक्षयोरिति भावः ॥ ४१ ॥

कामाक्षि कार्ष्ण्यमपि सन्ततमञ्जनं च बिभ्रन्निसर्गतरलोपि भवत्कटाक्षः ॥
वैमल्यमन्वहमनञ्जनतां च भूयः स्थैर्यं च भक्तहृदयाय कथं ददाति ॥ ४२ ॥

अन्वयः ॥ हे कामाक्षि ! सन्ततं कार्ष्ण्यं अञ्जनं च बिभ्रदपि निसर्गतरलोपि भवत्कटाक्षः अन्वहं वैमल्यं भूयः अनञ्जनतां च भक्तहृदयाय स्थैर्यं च कथं ददाति ॥ ४२ ॥

टीका ॥ हे कामाक्षि ! सन्ततमविरतं कृष्णस्य भावः कार्ष्ण्यं स्वाभाविकश्यामत्वं अञ्जनं कज्जलं च बिभ्रद्धदपि निसर्गतरलोपि स्वभावचपलोपि भवत्याः कटाक्षः अन्वहं प्रतिदिनं वैमल्यं नैर्मल्यं वासनामलराहित्यं अनञ्जनतामञ्जनाभावत्वं निरञ्जनत्वमित्यर्थः । भूयः पौनःपुन्येन भक्तहृदयाय स्थैर्यं स्थिरतां विषयाचाञ्चल्यं च कथं ददातीत्यहो आश्चर्यमित्यर्थः ॥ ४२ ॥

मन्दस्मितस्तबकितं मणिकुण्डलांशुस्तोमप्रवालरुचिरं शिशिरीकृताशम् ॥
कामाक्षि राजति कटाक्षरुचेः कदम्बमुद्यानमम्ब करुणाहरिणेक्षणायाः ॥ ४३ ॥

अन्वयः ॥ हे कामाक्षि ! अम्ब ! मन्दस्मितस्तबकितं मणिकुण्डलांशुस्तोमप्रवालरुचिरं शिशिरीकृताशं करुणाहरिणेक्षणायाः उद्यानं तव कटाक्षरुचेः कदम्बं राजति ॥ ४३ ॥

टीका ॥ हे कामाक्षि ! मातः ! मन्दस्मितेन स्तबकितं गुच्छितम् । मणिकुण्डलयोर्यें शवः किरणास्तेषां ये स्तोमाः पटलानि त एव प्रवालानि पल्लवानि तै रुचिरं मनोहरम् । शिशिरीकृता शीतलीकृता आशा दिशा, कामप्राप्तिकरणेन शिशिरीकृता भक्तानां आशा अप्राप्तवस्तुनि चिरं

निबद्धेच्छा च येन तत्॥ करुणैव हरिणेक्षणा तरुणी तस्या उद्यानं विहारवनं तव कटाक्षकान्तेः कदम्बं समूहो राजति शोभत इत्यर्थः ॥ ४३ ॥

कामाक्षि तावककटाक्षमहेन्द्रनीलसिंहासनं श्रितवतो मकरध्वजस्य ॥
साम्राज्यमङ्गलविधौमणिकुण्डलश्रीर्नीराजनोत्सवतरङ्गितदीपमाला ॥ ४४ ॥

अन्वयः ॥ हे कामाक्षि ! तावककटाक्षमहेन्द्रनीलसिंहासनं श्रितवतो मकरध्वजस्य साम्राज्यमङ्गलविधौ नीराजनोत्सवतरङ्गितदीपमाला मणिकुण्डलश्री राजति ॥ ४४ ॥

टीका ॥ हे कामाक्षि ! तावककटाक्ष एव इन्द्रनीलमणिस्तद्रूपं सिंहासनं श्रितवतः आश्रितवतो मकरध्वजस्य मदनस्यैकातपत्रराज्यप्राप्तिमङ्गलविधाने नीराजनोत्सवं तरङ्गितोद्दीपिता दीपमाला यया सा तथोक्ता। मणिभिः खचितयोः कुण्डलयोः श्रीः शोभा राजति शोभत इत्यर्थः ॥ ४४ ॥

मातः क्षणं स्नपयतां तव वीक्षितेन मन्दाक्षितेन सुजनैरपरोक्षितेन ॥
कामाक्षि कर्मतिमिरोत्करभास्करेण श्रेयस्करेण मधुपद्युतितस्करेण ॥ ४५ ॥

अन्वयः ॥ हे मातः हे कामाक्षि ! सुजनैरपरोक्षितेन कर्मतिमिरोत्करभास्करेण श्रेयस्करेण मधुपद्युतितस्करेण मन्दाक्षितेन तव वीक्षितेन क्षणं मां स्नपयताम् ॥ ४५ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! मन्दाक्षितेन लज्जितेन सुजनैः सद्भिः प्रत्यक्षीकृतेन कर्म रूपं यत्तिमिरं तस्य य उत्करः समूहस्तन्नाशे भास्करः प्रकाशकारी सूर्यस्तेन मधुपद्युतितस्करेण भृङ्गकान्तिचौरेण एतादृशेन तव वीक्षितेन कटाक्षेण क्षणं किञ्चित्कालं मां स्नपयतामाप्लावयताम्। तेनाहं तापत्रयरहित उज्ज्वलश्च स्यामिति भावः ॥ ४५ ॥

प्रेमापगापयसि मज्जनमारचय्य युक्तः स्मितांशुकृतभस्मविलेपनेन ॥
कामाक्षि कुण्डलमणिद्युतिभिर्जटालः श्रीकण्ठमेव भजते तव दृष्टिपातः ॥४६॥

अन्वयः ॥ हे कामाक्षि ! तव दृष्टिपातः प्रेमापगापयसि मज्जनमारचय्य कुण्डलमणिद्युतिभिर्जटालः स्मितांशुकृतभस्मविलेपनेन युक्तः सन् श्रीकण्ठमेव भजते ॥ ४६ ॥

टीका ॥ हे कामाक्षि ! तव दृष्टिपातः प्रेमैवापगा नदी तस्याः पयसि प्रेमरूपे जले स्नानमारचय्य कृत्वा कुण्डलयोर्ये मणयस्तेषां या द्युतयः कान्तयस्ताभिर्जटालः सन् कुण्डलमणिकान्ति-

जटाधारक इत्यर्थः । स्मितस्यांशुभिः । किरणैः कृतं यद्भस्मविलेपनं तेन युक्तः श्रीकण्ठमेव श्रीशिवमेव भजते सेवते युक्तमेतदितिभावः ॥ ४६ ॥

कैवल्यदाय करुणारसकिंकराय कामाक्षि कन्दलितविभ्रमशंकराय ॥
आलोकनाय तव भक्तशिवंकराय मातर्नमोस्तु परतन्त्रितशंकराय ॥ ४७ ॥

अन्वयः ॥ हे मातः ! हे कामाक्षि ! कैवल्यदाय करुणारसकिंकराय कन्दलितविभ्रमशंकराय भक्तशिवंकराय परतन्त्रितशंकराय तव आलोकनाय नमोऽस्तु ॥ ४७ ॥

टीका ॥ हे मातः ! हे कामाक्षि ! केवलस्याद्वैतस्य सर्वमायाप्रपञ्चाभावस्य भावः कैवल्यं तस्य दात्रे करुणारस एव किंकरो दासो यस्य तस्मै करुणारसकिंकराय । यद्वा करुणारसेन किंकराय भक्तभक्ताय। कन्दलितः प्रकटीकृतो विभ्रम उत्सवः शृङ्गारचेष्टा वा घूर्णनं वा शंकरे येन स तथोक्तस्तस्मै भक्तानां शिवं कल्याणं करोतीति भक्तशिवंकरस्तस्मै परतन्त्रितो वशीकृतः शंकरो येन तस्मै तवालोकनाय नमोऽस्तु । ममेति शेषः ॥ ४७ ॥

साम्राज्यमङ्गलविधौ मकरध्वजस्य लोलालकालिकृततोरणमाल्यशोभे ॥
कामेश्वरि प्रचलदुत्पलवजयन्तीचातुर्यमेति तव चञ्चलदृष्टिपातः ॥ ४८ ॥

अन्वयः ॥ हे कामेश्वरि ! लोलालकालिकृततोरणमाल्यशोभे ! मकरध्वजस्य साम्राज्यमङ्गलविधौ तव चञ्चलदृष्टिपातः प्रचलदुत्पलवैजयन्तीचातुर्यमेति ॥ ४८ ॥

टीका ॥ हे कामेश्वरि ! कामानामीश्वरि ! । यद्वा कामस्य कामदेवस्येश्वरी कामेश्वरस्य शिवस्य स्वेच्छाश्रीरूपिणी वा तत्संबुद्धौ हे तथोक्ते! लोलाश्चपला या अलकालयस्ताभिः कृता तोरणमाल्यशोभा यस्मिन् तस्मिन् । मकरध्वजस्य कामस्य साम्राज्यमङ्गलविधौ एकातपत्रराज्यस्य मङ्गलविधाने तव चपलो दृगन्तपातः प्रचलन्ती उत्पलानां श्यामसरोजानां वैजयन्ती माला तस्या ध्वजस्य वा चातुर्यं निपुणतामेति प्राप्नोति॥ ४८ ॥

मार्गेण मञ्जुकचकान्तितमोवृतेन मन्दायमानगमना मदनातुरासौ ॥
कामाक्षि ! दृष्टिरयते तव शंकराय संकेतभूमिमचिरादभिसारिकेव ॥ ४९ ॥

अन्वयः ॥ हे कामाक्षि ! मञ्जुकचकान्तितमोवृतेन मार्गेण मन्दायमानगमना असौ तव दृष्टिः अचिरात्संकेतभूमिं मदनातुरा अभिसारिकेव शंकराय अयते ॥ ४९ ॥

टीका ॥ हे कामाक्षि ! मञ्जूनां मनोहराणां कचानां याः कान्तयस्ता एव तमांसि तैरावृतेन

मार्गेण मन्दायमानं गमनं यस्याः सा असौ तव दृष्टिः अचिरादाशु संकेतभूमिं दंपत्योरहोरमणस्थानम् । मदनेन कामेनातुरा अभिसारिका समयानुकूलं शृङ्गारं कृत्वाऽनुरागवशात्स्वयं रमणाय अभिसरति या साभिसारिकेत्युच्यते । ताश्च तिस्रः सुप्रसिद्धाः । दिवाभिसारिका, शुक्लाभिसारिका, कृष्णाभिसारिका चेति । अत्र कृष्णाभिसारिका इव शंकराय शं सुखं निरातिशयानन्दं करोतीति तथोक्तः श्रीशिवस्तस्मै अयते प्राप्नोति ॥ ४९ ॥

व्रीडानुवृत्तिरमणीकृतिसाहचर्या शैवालितां गलरुचा शशिशेखरस्य ॥
कामाक्षि कान्तिसरसीं त्वदपाङ्गलक्ष्मीर्मन्दं समाश्रयति मज्जनखेलनाय॥५०॥

अन्वयः ॥ हे कामाक्षि ! व्रीडानुवृत्तिरमणीकृतिसाहचर्या त्वदपाङ्गलक्ष्मीः शशिशेखरस्य गलरुचा शैवालितां कान्तिसरसीं मज्जनखेलनाय मन्दं समाश्रयति॥५०॥

टीका ॥ हे कामाक्षि ! व्रीडाया अनुवृत्तिः प्रवाहरूपेणानुगतिरेव रमणी रमणशीलत्वा त्तस्या या कृतिः प्रयत्नस्तस्याः साहचर्यं यस्याः सा तव कटाक्षलक्ष्मीः शशिशेखरस्य चन्द्रमौलेः कण्ठरुचा शैवालितां शैवाला जाता यस्याः सा तां जलजातपदार्थविशेषितां श्यामीभूतामित्यर्थः । कान्तिसरसीं छविसरोवरीं मज्जनखेलनाय मज्जनेन युक्तं यत्खेलनं तस्मै जलक्रीडार्थं मन्दं शनैः समाश्रयति । सम्यगासमन्तादाश्रयतीत्यर्थः ॥ ५० ॥

काषायमंशुकमिव प्रकटं दधानो माणिक्यकुण्डलरुचिं ममताविरोधी ॥
श्रुत्यन्तसीमनिरतः सुतरां चकास्ति कामाक्षि तावककटाक्षयतीश्वरोऽसौ॥५१॥

अन्वयः ॥ हे कामाक्षि ! माणिक्यकुण्डलरुचिं काषायमंशुकमिवप्रकटं दधानः ममताविरोधी श्रुत्यन्तसीमनिरतोसौ तावककटाक्षयतीश्वरः सुतरां चकास्ति॥५१॥

टीका ॥ हे कामाक्षि ! माणिक्यैः खचिते । यद्वा माणिक्यस्यैव कुण्डले तयो रुचिं द्युतिं काषायं गैरिकरञ्जितमंशुकं वस्त्रमिव प्रकटं स्फुटं दधानः ममताया विरोधी ममत्वनाशकः श्रुत्यन्त एव सीमा कर्णान्तावधिः वेदान्तावधिश्च तस्यां निरत आसक्तः असौ तावकः कटाक्ष एव यतीश्वरो योगीन्द्रः नितरां निरन्तरं चकास्ति दीप्यते । धन्याः कविसार्वभौमगिरो याभिः श्रीकामाक्ष्यद्वैतशृङ्गारः प्रतिपाद्यते ॥ ५१ ॥

पाषाण एव हरिनीलमणिर्दिनेषु प्रम्लानतां कुवलयं प्रकटीकरोति ।
नैमित्तिको जलदमेचकिमा ततस्ते । कामाक्षि शून्यमुपमानमपाङ्गलक्ष्म्याः॥५२॥

अन्वयः ॥ हे कामाक्षि ! हरिनीलमणिः पाषाण एव कुवलयं दिनेषु प्रम्लानतां प्रकटीकरोति जलदमेचकिमा नैमित्तिकः । ततस्ते अपाङ्गलक्ष्म्या उपमानं शून्यम् ॥ ५२ ॥

टीका ॥ हे कामाक्षि ! ते अपाङ्गलक्ष्म्या हरिनीलमणिरुपमानं क्रियते चेत्स तु पाषाण एव कठोर इत्यर्थः। इयं त्वतिकोमला। तर्हि कोमलं कुवलयं क्रियतामिति चेत्कुवलयं दिनेषु प्रम्लानतां प्रमलिनतां प्रकटीकरोति । इयं त्वहोरात्रमतिशोभावती । तर्हि तापनिवृत्तिपूर्वकशिशिरीकरणसाम्याज्जलदेन उपमीयतामिति चेज्जलदस्य मेघस्य मेचकिमा श्यामत्वं नैमित्तिकः निमित्तजातः वर्षाकाल एव जलधारेण जलदमेचकिमा; न तु सर्वकालीनः। इयं त्वतिकोमला सर्वकालसौभाग्यवती सदा विश्वतापहारिणी ततस्ते तवापाङ्गलक्ष्म्या उपमानं शून्यम्। न किमप्युपलभ्यते जगति येनोपमातुं शक्यत इयमिति भावः ॥ ५२ ॥

शृङ्गारविभ्रमवती सुतरां सलज्जा नासाग्रमौक्तिकरुचा कृतमन्दहासा ॥
श्यामा कटाक्षसुषमा तव युक्तमेतत्कामाक्षि चुम्बति दिगम्बरवक्त्रबिम्बम् ॥ ५३ ॥

अन्वयः ॥ हे कामाक्षि ! शृङ्गारविभ्रमवती सुतरां सलज्जा नासाग्रमौक्तिकरुचा कृतमन्दहासा श्यामा तव कटाक्षसुषमा दिगम्बरवक्त्रबिम्बं चुम्बति युक्तमेतत् ॥ ५३ ॥

टीका ॥ हे कामाक्षि शृङ्गारेण शृङ्गाररसेन शृङ्गाररसे वा यो विभ्रमो हर्षो भ्रमणं च विलासश्चातिशयप्रेम्णा पतिमिलनत्वरया वस्त्रभूषणादीनां अन्यथा न्यसनरूपश्च यो हावविशेषस्तद्वती । सुतरामिति पदं सर्वत्र कटाक्षसुषमाविशेषणैः क्रियापदेन च सम्बध्यते । लज्जया सह वर्तमाना सलज्जा नासाया अग्रे यन्मौक्तिकं तस्य या रुक्कान्तिस्तया कृतो मन्दहासो यस्याः सा तथोक्ता श्यामा स्वभावाच्छ्यामवर्णा षोडशवार्षिकी च । यद्वा श्रीकाली । तव कटाक्षसुषमा दिगम्बरस्य वसनविहीनस्य श्रीशिवस्य वक्त्रबिम्बं वक्त्रस्य बिम्बं मण्डलं चुम्बति युक्तमेवैतत्। शृङ्गारे दंपतिप्रीतिविशेषे रसे हर्षो हावश्च तद्वती । यद्वा विगतो द्वैतरूपो भ्रमो विभ्रमः। यद्वा विगतो भ्रमो यस्मात् स तादृशः शृङ्गारश्चासौ विभ्रमश्च शृङ्गारविभ्रमः । यद्वा शृङ्गारे विगतो भ्रमो यस्य स तथोक्तः शिवः । तद्वत्याः श्रीश्यामाया दिगम्बराशिवमुखचुम्बनं। युक्तमेव । तस्या ध्याने इद्दक्तया प्रतिपादनात् ॥ ५३ ॥

नीलोत्पलेन मधुपेन च दृष्टिपातः कामाक्षि तुल्य इतिते कथमामनन्ति ॥
शैत्येन निन्दति यदन्वहमिन्दुपादान्पाथोरुहेण यदसौ कलहायते च ॥ ५४ ॥

अन्वयः ॥ हे कामाक्षि ! ते दृष्टिपातः नीलोत्पलेन मधुपेन च तुल्य इति कथमामनन्ति, यदसौ शैत्येनान्वहमिन्दुपादान्निन्दति, यदसौ पाथोरुहेण कलहायते च ॥ ५४ ॥

टीका ॥ हे कामाक्षि ! ते तव दृष्टिपातः नीलोत्पलेन श्यामसरोजेन मधुपेन भ्रमरेण च तुल्यः सदृश इति कथमामनन्ति कथयन्ति संतो जना इति शेषः । यद्यस्मादसौ दृष्टिपातः शैत्येन शीतलत्वेनान्वहं प्रतिदिनमिन्दुपादान् चन्द्रकिरणान् स्वस्याधिकशैत्याद्भक्तानामन्तःस्थबहिःस्थतापस्य सदैव निवर्त्तकत्वान्निन्दति तिरस्करोतीत्यर्थः । कुवलयं तु इन्दुपादाञ्शिरासि दधाति, तत्स्पर्शहर्षवशात्प्रफुल्लितं च भवति, अत एव न साम्यमेतयोः कुवलयकटाक्षयोः । कटाक्षस्य सदैवाधिक्यात् वर्णयन्ति साम्यं तेऽज्ञा एवेति भावः । यदसौ कटाक्षः पाथोरुहेण कुवलयेन च पुनः कलहायते विरोधाचरणं करोति स्वश्रिया तस्य श्रीहाको भवति । मधुपो भ्रमरस्तु तस्मिन् वासकरणेन मैत्रीं करोति । अतो नैतयोः मधुपकटाक्षयोः साम्यमित्यर्थः ॥५४॥

ओष्ठप्रभापटलविद्रुममुद्रिते ते भ्रूवल्लिवीचिसुभगे मुखकान्तिसिन्धौ ॥
कामाक्षि वारिभरपूरणलम्बमानकालाम्बुवाहसरणिं लभते कटाक्षः ॥ ५५ ॥

अन्वयः ॥ हे कामाक्षि ! ते कटाक्षः ओष्ठप्रभापटलविद्रुममुद्रिते भ्रूवल्लिवीचिसुभगे ते मुखकान्तिसिन्धौ वारिभरपूरणलम्बमानकालाम्बुवाहसरणिं लभते ॥ ५५ ॥

टीका ॥ हे कामाक्षि ! ते तव ओष्ठयोर्या प्रभा दीप्तिस्तस्याः पटलाः समूहास्त एव विद्रुमाः प्रवालानि तैर्मुद्रिते अङ्किते आच्छादिते वा । भ्रूवल्लिरेव पुनः पुनर्नर्त्तनेन कुटिलाकारत्वाच्च वीचिस्तरङ्गस्तया सुभगे सुन्दरे मुखस्य कान्तेश्छव्याः सिन्धुस्तस्मिन्मुखकान्तिसिन्धौ वारिणां यो भरोऽतिशयस्तस्य पूरणं पूरीकरणं तेन लम्बमानो विस्तीर्यमाणो यः कालः श्यामवर्णोऽम्बुवाहः जलधरस्तस्य सरणिं पद्धतिं लभते प्राप्नोतीत्यर्थः ॥ ५५ ॥

मन्दस्मितैर्धवलिता मणिकुण्डलांशुसंपर्कलोहितरुचिस्त्वदपाङ्गधारा ॥
कामाक्षि मल्लिकुसुमैर्नवपल्लवैश्च नीलोत्पलैश्च रचितेव विभाति माला ॥ ५६ ॥

अन्वयः ॥ हे कामाक्षि ॥ मन्दस्मितैर्धवलितामणिकुण्डलांशुसंपर्कलोहितरुचिस्त्वदपाङ्गधारा मल्लिकुसुमैर्नवपल्लवैश्च रचिता मालेव विभाति ॥ ५६ ॥

टीका ॥ हे कामाक्षि ! मन्दस्मितैर्धवलिता शुभ्रामाणिक्यमणिभिः खचितयोः कुण्डलयोर्येंऽशवस्तेषां संपर्केण संबन्धेन लोहिताऽरुणा रुचिर्यस्याः सा तथोक्ता त्वदपाङ्गधारा तव कटाक्षपरंपरा मल्लयाः कुसुमैः सुमनोभिर्नवैर्नूतनैः पल्लवैर्नीलोत्पलैः कुवलयैश्च रचिता निर्मिता मालेव विभाति विशेषेण दीप्यते ॥ ५६ ॥

कामाक्षि शीतलकृपारसनिर्भराम्भःसंपर्कपक्ष्मलरुचिस्त्वदपाङ्गमाला ॥

गोभिः सदा पुररिपोरभिलष्यमाणा दूर्वाकदम्बकविडम्बनमातनोति ॥ ५७ ॥

अन्वयः ॥ हे कामाक्षि ! शीतलकृपारसनिर्भराम्भःसंपर्कपक्ष्मलरुचिः पुररिपोर्गोभिः सदाऽभिलष्यमाणा त्वदपाङ्गमाला दूर्वाकदम्बकविडम्बनमातनोति ॥ ५७ ॥

टीका ॥ हे कामाक्षि ! शीतलो यः कृपारसः स एव निर्भराम्भः निश्चयेन पूर्णाम्भः "निर्झराम्भः" इति पाठे निर्झरस्य जलं तस्य यः संपर्कः संबन्धस्तेन पक्ष्मला कन्दलिता रुचिः शोभा यस्याः सा तथोक्ता पुररिपोः शिवस्य गोभिर्नेत्रैर्धेनुभिश्च सदा सर्वकालेऽभिलष्यमाणा वांछ्यमाना तवापाङ्गमाला दूर्वायाः कदम्बकः समूहस्तस्य विडम्बनमनुकरणमासमंतात्तनोति विस्तारयति । स्निग्धसघनश्यामत्वात् दूर्वाकदम्बकोपमा कटाक्षस्य ॥ ५७ ॥

हृत्पङ्कजं मम विकासयतु प्रमुष्णन्नुल्लासमुत्पलरुचेस्तमसां निरोद्धा ॥
दोषानुषङ्गजडतां जगतां धुनानः कामाक्षि वीक्षणविलासदिनोदयस्ते ॥ ५८ ॥

अन्वयः ॥ हे कामाक्षि ! तमसां निरोद्धा ते वीक्षणविलासदिनोदयः जगतां दोषानुषङ्गजडतां धुनानः उत्पलरुचेरुल्लासं प्रमुष्णन्ममहृत्पङ्कजं विकासयतु ॥ ५८ ॥

टीका ॥ हे कामाक्षि ! तमसां निरोद्धा तमोनाशकृत् ते तव वीक्षणविलास आलोकनशृङ्गारचेष्टाकान्तिरेव दिनस्योदयः प्रारंभः जगतां दोषानुषङ्गः दोषाणां रात्रीणां अनुषङ्गः संयोगः दोषेषु पापेषु चानुषङ्गः आसक्तिः तेन हेतुना वा जडता जाड्यं तां धुनानः उत्पलरुचेः श्यामसरोजकान्तेरुल्लासं विकासं प्रकर्षेण मुष्णन् चोरयन् मम हृत्पङ्कजं मानससरोजं विकासयतु प्रफुल्लयतु ॥ ५८ ॥

चक्षुर्विमोहयति चन्द्रविभूषणस्य कामाक्षि तावककटाक्षतमःप्ररोहः ॥
प्रत्यङ्मुखं तु नयनं स्तिमितं मुनीनां प्राकाश्यमेव नयतीति परं विचित्रम् ॥ ५९ ॥

अन्वयः ॥ हे कामाक्षि ! तावककटाक्षतमःप्ररोहः चन्द्रविभूषणस्य चक्षुर्विमोहयति मुनीनां तु स्तिमितं प्रत्यङ्मुखं नयनं प्राकाश्यमेव नयतीति परं विचित्रम् ॥ ५९ ॥

टीका ॥ हे कामाक्षि ! तावककटाक्षरूपतमसां प्ररोह उद्गमश्चन्द्रविभूषणस्य शिवस्य चक्षुर्नयनं विशेषेण मोहयति मोहितं करोति मुनीनां मननशीलानां तु स्तिमितं पिहितं प्रत्यङ्मुखं अन्तर्मुखं नयनं प्रकाशस्य भावः प्राकाश्यं नयति प्रापयति इति परमुत्कटं विचित्रमाश्चर्यमित्यर्थः ॥ ५९ ॥

कामाक्षि वीक्षणरुचा युधि निर्जितं ते नीलोत्पलं निरवशेषगताभिमानम् ॥
आगत्य तत्परिसरं श्रवणावतंसव्याजेन नूनमभयार्थनमातनोति ॥ ६० ॥

अन्वयः ॥ हे कामाक्षि ! ते वीक्षणरुचा युधिनिर्जितं निरवशेषगताभिमानं नीलोत्पलं श्रवणावतंसव्याजेन तत्परिसरं आगत्यनूनमभयार्थनमातनोति ॥ ६० ॥

टीका ॥ हे कामाक्षि ! ते तव वीक्षणरुचा अवलोकनदीप्त्या युधि युद्धे निर्जितं निरवशेषतया संपूर्णतया गतोभिमानो यस्य तत्संपूर्णाभिमानरहितमित्यर्थः नीलोत्पलं तव कर्णाभरणमिषेण तत्परिसरं कटाक्षसमीपमागत्य नूनं निश्चितं अभयार्थनं अभयदानप्रार्थनां आतनोति समन्ताद्विस्तारयति व्याकरोतीत्यर्थः ॥ ६० ॥

आश्चर्यमम्ब वदनाभ्युदयावलम्बी कामाक्षि चञ्चलनिरीक्षणविभ्रमस्ते ॥
धैर्यं विधूय तनुते हृदि रागबन्धं शंभोस्तदेव विपरीततया मुनीनाम् ॥६१॥

अन्वयः ॥ हे कामाक्षि ! हे अम्ब ! ते वदनाभ्युदयावलम्बी चञ्चलनिरीक्षणविभ्रमः शंभोर्धैर्यं विधूय हृदि रागबन्धं तनुते मुनीनां तु तदेव विपरीततया तनुते ॥ ६१ ॥

टीका ॥ हे कामाक्षि ! हे अम्ब ! ते तव वदनस्यासमन्ताद्योऽभ्युदयः सौन्दर्यं तमवलम्बते इति तथाविधः चञ्चलनिरीक्षणस्य विभ्रमो विलासः शंभोः शंकरस्य धैर्यं निर्विकारत्वेन पर्यवस्थानं तद्विधूय निरस्य चञ्चलत्वं निष्पाद्येत्यर्थः हृदि मनसि रागः प्रीतिस्तद्रूपो यो बन्धस्तं तनुते विस्तारयति मुनीनां तु हृदि तदेव धैर्यं रागबन्धं च वैपरीत्येन तनुते रागो विषयासक्तिस्तद्रूपो यो बन्धस्तं दूरीकृत्य अहंताममताराहित्यं निष्पाद्य धैर्यं स्वभावनिष्ठत्वं विस्तारयतीत्यर्थः आश्चर्यं चैतत् यो रागबन्धकारी स एव रागबन्धनाशकः । यश्च धैर्यहारकः स एव धैर्यं निष्पादयतीति ॥ ६१ ॥

जन्तोः सकृत्प्रणमतो जगदीड्यतां च तेजस्वितां च निशितां च मतिं सभायाम् ॥
कामाक्षि माक्षिकझरीमिव वैखरीं च लक्ष्मीं च पक्ष्मलयति क्षणवीक्षणं ते ॥६२॥

अन्वयः ॥ हे कामाक्षि ! ते वीक्षणं सकृत्प्रणमतः जन्तोः जगदीड्यतां च तेजस्वितां च सभायां निशितां मतिं च माक्षिकझरीमिव वैखरीं च लक्ष्मीं च पक्ष्मलयति ॥ ६२ ॥

टीका ॥ हे कामाक्षि ! ते क्षणमात्रं वीक्षणं सकृदेकवारं प्रणमतोऽपि जन्तोर्जीवस्य जगदीड्यतां जगति श्लाघ्यतां च तेजस्वितां प्रभाववत्तां च सभायां सदसि निशितां तीक्ष्णां मतिं बुद्धिं च मधुझरीं अमृतवृष्टिमिव वैखरीं वर्णपदवाक्यबद्धां गद्यपद्यमयीं अर्थचतुष्टयप्रदां देवगिरं लौकिकवाणीरूपां च लक्ष्मीं श्रियं च पक्ष्मलयति विस्तारयतीत्यर्थः ॥ ६२ ॥

कादम्बिनी किमयते न जलानुषङ्गं भृङ्गावली किमुररीकुरुते न पद्मम् ॥
किंवा कलिन्दतनया सहते न गङ्गां कामाक्षि निश्चयपदं न तवाक्षिलक्ष्मीः ॥६३॥

अन्वयः ॥ हे कामाक्षि ! तवाक्षिलक्ष्मीः कादम्बिनी चेज्जलानुषङ्गं किं न अयते भृङ्गावली चेत्पद्मं किं न उररीकरोति । कलिन्दतनया चेद्भङ्गां किं वा न सहते अतो निश्चयपदं न भजते ॥ ६३ ॥

टीका ॥ हे कामाक्षि ! तव अक्ष्णोर्नेत्रयोर्लक्ष्मीः शोभा तुष्टिपुष्टिप्रदत्वात्, श्यामत्वात्, जीवनदातृत्वात्, तापहारकत्वाच्च कादम्बिनी मेघमाला चेद्भवति, तदा जलानुषङ्गं जलस्य अम्बुनो डलयोरैक्याज्जडस्य मूर्खस्य चानुषङ्गः संयोगस्तं किमर्थं न अयते प्राप्नोति प्रत्युत कविसङ्गिनी भवति श्यामत्वात्, पक्ष्मलत्वाच्च घूर्णनवत्त्वाच्च भृङ्गावली चेद्भवति, पद्मं कमलं किमिति न उररीकरोति अङ्गीकरोति । प्रत्युत तत्तिरस्करोति श्यामत्वात्, तरलतरङ्गत्वाच्च किं वा कलिन्दतनया यमुना भवति चेद्भङ्गां किं वा न सहते तया सह प्रत्युत विरुध्यते सापत्न्याभावात् अतो निश्चयपदं निर्णयस्थानं न अयते प्राप्नोति । अर्थादुपमारहिता तवाक्षिलक्ष्मीरिति भावः ॥ ६३ ॥

काकोलपावकतृणीकरणेऽपि दक्षः कामाक्षि बालकसुधाकरशेखरस्य ॥
अत्यन्तशीतलतमोऽप्यनुपारतं ते चित्तं विमोहयति चित्रमयं कटाक्षः ॥ ६४ ॥

अन्वयः ॥ हे कामाक्षि! काकोलपावकतृणीकरणे दक्षोपि अत्यन्तशीतलतमोपिअयंते कटाक्षः बालकसुधाकरशेखरस्य चित्तमनुपारतं विमोहयति, चित्रम् ॥ ६४ ॥

टीका ॥ हे कामाक्षि । काकोलस्य कालकूटस्य यः पावकोऽग्निः । यद्वा । काकोलरूपोग्निस्तस्य तृणीकरणे तुच्छीकरणे दक्षः पटुरपि अतिशयेन शीतलोपि अयं ते तव कटाक्षः बालकसुधाकरः शुक्लद्वितीयाचन्द्रः, स शेखरे यस्य तस्य शिवस्य । चित्तं मानसं विषयेषु विरक्तमनुपारतं निरन्तरं चित्रं यथा स्यात्तथा विमोहयति चित्रमेतत् । विषाग्निशामकातिशयशीतलस्य वस्तुनो मूर्च्छावारकत्वं दृष्टम् । अयं च प्रत्युत मोहमापादयतीति चित्रं खल्वेतत् ॥ ६४ ॥

कार्पण्यपूररसवर्द्धितमम्ब मोहकन्दोद्गतं भवमयं विषपादपं मे ।
तुङ्गं छिनत्तु तुहिनाद्रिसुते भवत्याः काञ्चीपुरेश्वरि कटाक्षकुठारधारा ॥ ६५ ॥

अन्वयः ॥ हे अम्ब ! हे काञ्चीपुरेश्वरि ! हे तुहिनाद्रिसुते ! भवत्याः कटाक्षकुठारधारा मे मोहकन्दोद्गतं तुङ्गं भवमयं कार्पण्यपूररसवर्द्धितं विषपादपं छिनत्तु ॥ ६५ ॥

टीका ॥ हे मातः ! हे काञ्चीपुरस्येश्वरि तुहिनाद्रिर्हिमगिरिस्तस्य सुता तत्संबुद्धौ हे तुहिनाद्रिसुते ! । हिमगिरिकन्ये ! । भवत्याः कटाक्षः सरसनेत्रप्रान्तेन निरीक्षणमेव कुठारस्तस्य धारा अग्रं तैक्ष्ण्यमिति यावत् ॥ मे मम मोहोऽज्ञानं तदेव कन्दस्तस्मादुद्गतमुत्थितं तुङ्गं दीर्घं भवमयं संसारमयं कृपणस्य भावः कार्पण्यं दैन्यं स्वरूपज्ञानाभावत्वं विषयातृप्त्या तेषु धावनं

वा तस्य यः पूरः स एव रसस्तेन वर्द्धितं विषवृक्षं स्वरूपनाशकत्वात्। छिनत्तु विनाशय- त्वित्यर्थः ॥ ६१ ॥

कामाक्षि घोरभवरोगचिकित्सनार्थमभ्यर्थ्य देशिककटाक्षभिषक्प्रसादात् ॥
तत्रापि देविलभते सुकृती कदाचिदत्यन्तदुर्लभमपाङ्गमहौषधं ते ॥ ६६ ॥

अन्वयः ॥ हे देवि ! हे कामाक्षि ! सुकृती घोरभवरोगचिकित्सनार्थं तत्राऽपि कदाचिद्दे- शिककटाक्षभिषक्प्रसादादभ्यर्थ्य अत्यन्तदुर्लभं ते अपाङ्गमहौषधं लभते ॥ ६६ ॥

टीका ॥ हे देवि ! हे कामाक्षि ! सुष्टु कृतमस्यास्तीतिसुकृती पुण्यवान्। घोरो यो भवरोगस्तस्य चिकित्सनार्थं भयानकसंसाररोगनाशार्थं अभ्यर्थ्य अतिशुद्धभावसेवादिना सर्वस्वसमर्पणेनापि संप्रार्थ्य तत्रापि तस्मिन्कृतेऽपि कदाचित्कस्मिंश्चित्समये देशिकः ॥ श्रीगुरुदेवस्तस्य यः कृपा- कटाक्षः स एव भिषक्। वैद्यस्तस्य प्रसादात् प्राप्तदीक्षः सन् मानपूर्वकनिरन्तरदीर्घकालदृढा- भ्यासतत्पर उपासनायां यो भवेत् स; । ते तव अत्यन्तदुर्लभं अतिदुष्प्रापं अपाङ्गः कटाक्ष- स्तद्रूपं महौषधं लभते प्राप्नोति ॥ ६६ ॥

कामाक्षि देशिककृपाङ्कुरमाश्रयंतो नानातपोनियमनाशितपाशबन्धाः ॥
वासालयं तव कटाक्षममुं महान्तो लब्ध्वा सुखं समधियो विचरन्ति लोके॥६७॥

अन्वयः ॥ हे कामाक्षि ! देशिककृपाङ्कुरमाश्रयन्तः नानातपोनियमनाशितपाशबन्धाः सम- धियस्तव अमुं कटाक्षं वासालयंलब्ध्वा सुखं यथा स्यात्तथा लोके विचरन्ति ॥ ६७ ॥

टीका ॥ हे कामाक्षि ! देशिकस्य श्रीगुरोः कृपाया अङ्कुरमभिनवोद्गममाश्रयन्तः साधकाः नानाविधानि यानि तपांसि तत्संबन्धिनो ये नियमास्तैर्नाशिताः पाशानां अहंताममतादिरू- पाणाम्। यद्वा। " घृणिः शंङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः " इति शिवोक्तानां पाशानां वा बन्धा यैस्ते तथाभूताः। समा एकरूपा धियो येषां ते तथाविधाः महान्तः श्रेष्ठाः साधकाः श्रीशिवाभिन्नकामाक्ष्युपासनाबलेन सर्वत्र समतां पश्यन्तः । यद्वा। श्रीगुरुकृपाकटाक्षात्प्राप्तभवत्कटाक्षात्समे तव श्रीकामाक्ष्या निर्गुणब्रह्मरूपे धियो येषां ते तथोक्ताः सन्तो वासालयं निरन्तरनिवासस्थानं तव अमुं कटाक्षं लब्ध्वा प्राप्य सुखं यथेष्टं यथा स्यात्तथा। इह लोके विचरन्ति पर्यटन्तीत्यर्थः ॥ ६७ ॥

साकूतसँल्लपितगर्भितमुग्धहासं व्रीडानुरागसहचारि विलोकनं ते ॥
कामाक्षि कामपरिपन्थिनि मारवीर साम्राज्यविभ्रमदशां सफलीकरोति ॥६८॥

अन्वयः हे कामाक्षि ! साकूतसँल्लपितगर्भितमुग्धहासं व्रीडानुरागसहचारि ते विलोकनं कामपरिपन्थिनि मारवीरसाम्राज्यविभ्रमदशां सफलीकरोति ॥ ६८ ॥

टीका ॥ हे कामाक्षि ! साकूतं अभिप्रायेण सहितं यत्सँल्लपितं सम्यग्गदितं तेन गर्भितो मुग्धहासो मनोहरहासो यस्मिंस्तत्तथोक्तम् । व्रीडा लज्जा अनुरागः स्नेहस्ताभ्यां सहचरतीति तादृक् तव विलोकनं कामस्य परिपन्थिनि शत्रौ शिवे मारवीरस्य कामदेवस्य सम्राजो भावः साम्राज्यं तस्य विभ्रमदशां विलासदशां सफलीकरोति । फलेन सह वर्त्तमाना सफला । असफलां-सफलां करोतीति तथा । अभूततद्भावे च्विः । तव पूर्ववर्णितः कटाक्षः शिवं मदनारिमपि मदनवश्यतां नयतीति चित्रमित्यर्थः ॥ ६८ ॥

कामाक्षि विभ्रमबलैकनिधिर्विधाय भ्रूवल्लिचापकुटिलीकृतिमेव चित्रम् ॥
स्वाधीनतां तव निनाय शशाङ्कमौलेरङ्गार्धराज्यसुखलाभमपाङ्गवीरः ॥ ६९ ॥

अन्वयः ॥ हे कामाक्षि ! विभ्रमबलैकनिधिस्तवापाङ्गवीरः भ्रूवल्लिचापकुटिलीकृतिमेव विधाय शशाङ्कमौलेरङ्गार्धराज्यसुखलाभं चित्रं स्वाधीनतां निनाय ॥ ६९ ॥

टीका ॥ हे कामाक्षि ! विभ्रमोऽनेकविधशृङ्गारचेष्टा स एव संपत्सेना दुर्गादिरूपं बलं तस्यैको निधिः कोशः तवापाङ्गवीरःकटाक्षशूरो भ्रूवल्लिरूपो यश्चापस्तस्य या कुटिलीकृतिः वक्राकारः तामेव विधाय कृत्वा शशाङ्कमौलेश्चन्द्रशेखरस्य अङ्गस्य अङ्गाख्यदेशस्य शरीरस्य चार्द्धं अर्धाङ्गं तद्रूपं यद्राज्यं तस्य यत्सुखं तस्य लाभं प्राप्तिम् । चित्रमाश्चर्यं यथा तथा स्वस्याधीनः स्वाधीनस्तद्भावस्तत्ता तां निनाय प्राप । यद्वा । तव सुष्टु आधीनतां निनाय । यदा परराज्यजिहीर्षा भवेत्तर्हि प्रथमतस्तु स्वस्मिन् वीरत्वेन भाव्यम् पुनः कोशसेनादुर्ग सच्छस्त्रादिसर्व सामग्री जयकारिणी परतोऽधिका चापेक्षिता स्वकरे । अतस्तवापाङ्गः स्वयं महावीरः शिवाङ्गार्धराज्यहरणे नानाविधशृङ्गारचेष्टारूपं जयसंपादकं यत्सर्वप्रकारकं बलं तेन बलवान् भ्रूवल्लिरूपसद्धनुर्द्धरः शिवाङ्गार्धराज्यसुखलाभं तव स्वाधीनं कृतवान् । अहो चित्रमेतत् अन्ये वीराः परस्यार्द्धराज्यसुखं तु स्वस्वामिभ्यः संपादयन्ति । न तु अङ्गार्धयुक्तराज्यसुखम् अयं तु अङ्गार्धस्य राज्यस्य च सुखम् । यद्वा । अङ्गार्धेन युक्तं यद्राज्यसुखम् अङ्गार्द्धरूपराज्यं सुखं वा तस्य लाभं तव स्वाधीनं कृतवान् । तेनायं चित्रं अपूर्वं कर्म कृतवानिति भावः ॥ ६९ ॥

कामाङ्कुरैकनिलयस्तव दृष्टिपातः कामाक्षि भक्तमनसां प्रददातु कामान् ॥
रागान्वितः स्वयमपि प्रकटीकरोति वैराग्यमेव कथमेष महामुनीनाम् ॥७०॥

अन्वयः ॥ हे कामाक्षि ! एष तव दृष्टिपातः कामाङ्कुरैकनिलयः भक्तमनसां कामान्प्रददातु । स्वयं रागान्वितोऽपि महामुनीनां वैराग्यमेव कथं प्रकटी करोति ॥ ७० ॥

टीका ॥ हे कामाक्षि ! एष तव दृष्टिपातः अनेकविधानां कामानामङ्कुराणामभिनवोद्गमानां एको मुख्यो निलयः स्थानमतो भक्तमनसां कामान्प्रददातु । परं स्वयं रागान्वितो रक्ति-

मयुतः स्नेहान्वितश्चापि महामुनीनां वैराग्यमेव कथं केन प्रकारेण प्रकटीकरोति । स्वयं रागी भूत्वा महामुनीनां वैराग्यं प्रकटीकरोतीति महदाश्चर्यमिति भावः ॥ ७० ॥

कालाम्बुवाहनिवहैः कलहायते ते कामाक्षि कालिममदेन सदा कटाक्षः ॥
चित्रं तथापि नितरामसुमेव दृष्ट्वा सोत्कण्ठ एव रमते किल नीलकण्ठः॥७१॥

अन्वयः ॥ हे कामाक्षि ! ते कटाक्षः कालिममदेन सदा कालाम्बुवाहनिवहैः कलहायते, तथापि असुं दृष्ट्वैव सोत्कण्ठो नीलकण्ठः नितरां रमते चित्रं किल ॥ ७१ ॥

टीका ॥ हे कामाक्षि ! ते तव कटाक्षः कालिममदेन नीलिममदेन सदा सर्वकालं कालाम्बुवाहनिवहैः कृष्णमेघसमूहैः कलहायते वैरभावमाचरति; तथापि असुं कटाक्षं दृष्ट्वैव विलोक्यैव उत्कण्ठया प्रियदर्शनविलम्बकालाऽसहमानतया मिलनार्थे जातरागेण सह वर्त्तमानः सोत्कण्ठः नीलकण्ठः श्रीशिवः मयूरश्च नितरां रमते खेलति । चित्रं किल इति सत्ये ॥ ७१ ॥

कामाक्षि मन्मथरिपुं प्रति मारताप मोहान्धकारजलदागमनेन नृत्यन् ॥
दुष्कर्मकञ्चुकिकुलं कवलीकरोतु व्यामिश्रमेचकरुचिस्त्वदपाङ्गकेकी ॥ ७२ ॥

अन्वयः ॥ हे कामाक्षि ! व्यामिश्रमेचकरुचिस्त्वदपाङ्गकेकी मन्मथरिपुं प्रतिमारतापमोहान्धकारजलदागमनेन नृत्यन्दुष्कर्मकञ्चुकिकुलं कवलीकरोतु ॥ ७२ ॥

टीका ॥ हे कामाक्षि ! व्यामिश्रा विशेषेण आसंमन्तान्मिश्रा चासौ मेचका श्यामा च व्यामिश्रमेचका सा रुचिः कान्तिर्यस्य स तथोक्तः त्वदपाङ्गकेकी तव कटाक्षमयूरः मन्मथरिपुं कामवैरिणं श्रीशिवं प्रति मारेण कृतो यस्तापस्तेन जातो यो मोहरूपोन्धकारः तमः स एव जलदागमो मेघागमस्तेन हेतुना नृत्यन्नृत्यं कुर्वन् दुष्कर्माणि विकर्माकर्मरूपाणि तान्येव कञ्चुकिनः सर्पास्तेषां कुलं समूहस्तं कवली करोतु ग्रसतु ॥ ७२ ॥

कामाक्षि मन्मथरिपोरवलोकनेषु कान्तं पयोजमिव तावकमक्षिपातम् ॥
प्रेमागमो दिवसवद्विकचीकरोति लज्जाभरो रजनिवन्मुकुलीकरोति ॥ ७३ ॥

अन्वयः ॥ हे कामाक्षि ! मन्मथरिपोरवलोकनेषु दिवसवत्प्रेमागमः कान्तं पयोजमिव तावकमक्षिपातं विकचीकरोति । रजनीवत् लज्जाभरो मुकुलीकरोति ॥ ७३ ॥

टीका ॥ हे कामाक्षि ! मन्मथरिपोः श्रीशिवस्यावलोकनेषु दर्शनेषु सत्सु दिवसवत् दिनतुल्यं प्रेमागमः स्नेहागमः कान्तं मनोहरं पयोजं कमलमिव तावकमक्षिपातं प्रति विकचीकरोति प्रफुल्लितं करोति । रजनीवत् रात्रिवत् लज्जाया भरः पूरस्तं मुकुलीकरोति संकोचयाति शिवस्यालोकनसमये प्रेम्णा तावकोऽक्षिपातः प्रफुल्लितो जायते । तल्लज्जया च संकुचितो भवतीत्यर्थः ॥ ७३ ॥

मूको विरिञ्चति परं पुरुषः कुरूपः कन्दर्पति त्रिदशराजति किंपचानः ॥

कामाक्षि केवलमुपक्रमकाल एव लीलातरङ्गितकटाक्षरुचः क्षणं ते ॥ ७४ ॥

अन्वयः ॥ हे कामाक्षि ! ते लीलातरङ्गितकटाक्षरुच उपक्रमकाल एव क्षणं मूको विरिञ्चति परं कुरूपः पुरुषः कन्दर्पति किंपचानः त्रिदशराजति ॥ ७४ ॥

टीका ॥ हे कामाक्षि ! लीलया केल्या तरङ्गितः कल्लोलित उत्साहित इति यावत् यः कटाक्षस्तस्य रुचः कान्तेः उपक्रमकाले उप समीपे क्राम्यति पादविक्षेपं करोतीति उपक्रमः प्रारम्भस्तत्काले तदवसर एव क्षणं क्षणमात्रेण मूकः वाग्विरहितः पुरुषः विरिञ्चति विरिञ्चिरिवाचरति अलौकिकचतुर्विधपाण्डित्यवान् भवतीत्यर्थः परमितोऽग्रेऽतिशयकुरूपः कुत्सितरूपः कन्दर्पति रूपसौभाग्येन जगद्वशंकरः कामदेवतुल्यो भवति । किंपचानः किंपचति अन्नाभावात् असाविति स अत्यन्त दरिद्री त्रिदशराजति सर्वालौकिकसंपदा इन्द्रतुल्यो भवतीत्यर्थः ॥७४॥

नीलालका मधुकरन्ति मनोज्ञनासा मुक्तारुचः प्रकटरूढविसाङ्कुरन्ति ॥
कारुण्यमम्ब मकरन्दति कामकोटि मन्ये ततः कमलमेव विलोकनं ते ॥७५॥

अन्वयः ॥ हे अम्ब ! हे कामकोटि ! ते नीलालका मधुकरन्ति, मनोज्ञनासामुक्तारुचः प्रकटरूढविसाङ्कुरन्ति कारुण्यं मकरन्दति, ततः ते विलोकनं कमलमेव मन्येऽहमिति शेषः ॥ ७५ ॥

टीका ॥ हे अम्ब ! हे कामकोटि ! नीलाश्च ते अलकाश्च नीलालकाः मधु मकरन्दं कुर्वन्ति निष्पादयन्तीति मधुकरा भ्रमरास्त इवाचरन्तीति तथा । नीलालका भ्रमरविडम्बनंकुर्वन्तीत्यर्थः मनोज्ञा सुन्दरा या नासा तस्या या मुक्ता तस्या या रुचः कान्तयः ता एव प्रकटाः स्फुटा रूढा उद्गता ये विसाङ्कुरा मृणालाभिनवोद्गमास्त इव आचरन्तीति तथा । नासामौक्तिकरुचो विसाङ्कुरानुकरणंकुर्वन्तीत्यर्थः ॥ करुणाया भावः कारुण्यं तदेव मकरन्दः "मकरन्दः पुष्परसः" इत्यमरः । स इवाचरतीति तथा ततस्तस्मात्ते विलोकनं निरीक्षणं कमलमेव मन्ये जानेह मिति शेषः ॥७५॥

आकाङ्क्ष्यमाणफलदानविचक्षणायाः कामाक्षि तावककटाक्षककामधेनोः ॥
संपर्क एव कथमम्ब विमुक्तपाशबन्धाः स्फुटं तनुभृतः पशुतां त्यजन्ति ॥ ७६ ॥

अन्वयः ॥ हे अम्ब ! हे कामाक्षि ! आकाङ्क्ष्यमाणफलदानविचक्षणायाः तावककटाक्षककामधेनोः संपर्क एव तनुभृतः स्फुटविमुक्तपाशबन्धाः सन्तः कथं पशुतां त्यजन्ति ॥ ७६ ॥

टीका ॥ हे मातः ! कामाक्षि ! आकाङ्क्ष्यमाणं वाञ्छ्यमानं यत्फलं तस्य दाने विचक्षणायाः प्रवीणायाः, तवायं तावकः कटाक्ष एव कटाक्षकः तावको यः कटाक्षकः स एव कामधेनुस्तस्या अभीष्टफलदात्र्याः संपर्के संबन्धे सति एव तनुं बिभ्रतीति तनुभृतः शरीरिणः स्फुटं

प्रसिद्धमेव विशेषेण मुक्ताः पाशबन्धाः पाशानां रज्जूनां रज्जुरूपा वा घृणिशङ्कादयश्च त एवं बन्धा येषां ते तथा भूताः सन्तः। ज्ञानहीनाः पशवः पशूनां भावः पशुता तां जडतामज्ञानमिति यावत् कथं त्यजन्ति मुञ्चन्ति धेनोः पशुत्वात्तत्संसर्गे जनाः स्वयं कथं पाशबन्धान्मुक्ता भूत्वा पशुत्वं त्यजन्ति इति चित्रम् ॥ अत्र पाशबन्धोऽहंताममतारूपः ॥ पशुताज्ञतारूपा च एतद्द्वयमपि श्रीमत्याः कटाक्षकामधेनोः संपर्कादेव नश्यतीतिभावः ॥ ७६ ॥

संसारघर्मपरितापजुषां नराणां कामाक्षि शीतलतराणि तवेक्षितानि ॥
चन्द्रातपन्ति घनचन्दनकर्दमन्ति मुक्तागुणन्ति हिमवारिनिषेचनन्ति ॥ ७७ ॥

अन्वय ॥ हे कामाक्षि ! संसारघर्मपरितापजुषां नराणां शीतलतराणि तवेक्षितानि चन्द्रातपन्ति घनचन्दनकर्दमन्ति मुक्तागुणन्ति हिमवारिनिषेचनन्ति ॥ ७७ ॥

टीका ॥ हे कामाक्षि ! संसार एव घर्मो ग्रीष्मर्तुस्तस्य यः परि समंतात्तापस्तं जुषन्ति सेवन्ते ये तेषां नराणां तव अतिशयशीतलानि ईक्षितानि चन्द्रातपन्ति चन्द्रातपाश्चन्द्रिकास्त इवाचरन्ति। घनः कर्पूरश्चन्दनं मलयजस्तयोः कर्दमा इवाचरन्ति। मुक्तानां ये शीतलकान्तिप्रकाशरूपा गुणास्त इवाचरन्तीति तथा। हिमस्य तुहिनस्य । यद्वा। हिमरूपं यद्वारि तस्य निषेचनानीवाचरन्ति संसारतापनाशकस्तव कृपाकटाक्ष इत्यर्थः ॥ ७७ ॥

प्रेमाम्बुराशिसततस्नपितानि चित्रं कामाक्षि तावककटाक्षनिरीक्षणानि ॥
संधुक्षयन्ति मुहुरिन्धनराशिरित्या मारद्रुहो मनसि मन्मथचित्रभानुम् ॥ ७८ ॥

अन्वयः ॥ हे कामाक्षि ! प्रेमाम्बुराशिसततस्नपितानि तावककटाक्षनिरीक्षणानि मारद्रुहो मनसि इन्धनराशिरीत्या मुहुर्मन्मथचित्रभानुं संधुक्षयन्ति चित्रम् ॥ ७८ ॥

टीकाः ॥ हे कामाक्षि ! प्रेमा प्रीतिः स एवाम्बुराशिर्जलधिस्तस्मिन्सततं स्नपितानि मज्जितानि तवेमे तावकास्ते च ते कटाक्षाश्च तथोक्तास्तैर्युक्तानि निरीक्षणानि वीक्षणानी मारद्रुहः कामशत्रोः श्रीशंभोर्मनसि चित्ते इन्धनं काष्टं तस्य यो राशिः संचयः तस्य रीत्या परिपाट्या मन्मथो मकरध्वज एव चित्रभानुरग्निस्तं संधुक्षयन्ति प्रदीप्तं कुर्वन्ति इत्यर्थः ॥ अहो चित्रमेतद्यज्जलप्लुतानि वन्हिं संधुक्षयन्तीति ॥ ७८ ॥

कालाञ्जनप्रतिभटं कमनीयकान्त्या कन्दर्पतन्त्रकलया कलितानुभावम् ॥
काञ्चीविहाररसिके कलुषार्तिचोरं कल्लोलयस्व मयि ते करुणाकटाक्षम् ॥७९॥

अन्वयः ॥ हे काञ्चीविहाररसिके कमनीयकान्त्या कालाञ्जनप्रतिभटंकन्दर्पतन्त्रकलया कलितानुभावं कलुषार्तिचोरं ते करुणाकटाक्षं मयि कल्लोलयस्व ॥ ७९ ॥

टीकाः ॥ हे काञ्चीविहाररसिके ! काञ्चीपुरीविहाररसाभिज्ञे ! कमनीयकान्त्या मनोहररुचा कालो योञ्जनगिरिरञ्जनाद्रिस्तस्य प्रतिभटं प्रतियोद्धारं कन्दर्पस्य कामस्य यत्तन्त्रं आगमः।

यद्वा वशीकरणक्रिया तस्य कलया सामर्थ्येन कलितो रचितोऽनुभावः प्रभावो येन तं कलुषं पापं आर्तिः पीडा तयोश्चोरं ते तव करुणया युक्तो यः कटाक्षस्तं मयि मूके दीने दासे कल्लोलयस्व तरङ्गयेत्यर्थः ॥ ७९ ॥

कान्तेन मन्मथमदेन विमोह्यमानस्वान्तेन चूततरुमूलगतस्य पुंसः ॥
कान्तेन किञ्चिदवलोकय लोचनस्य प्रान्तेन मां जननि काञ्चिपुरीविभूषे ॥८०॥

अन्वयः ॥ हे काञ्चिपुरीविभूषे ! जननि मन्मथमदेन क्रान्तेन चूततरुमूलगतस्य पुंसः विमोह्यमानस्वान्तेन कान्तेन लोचनस्य प्रान्तेन किञ्चिन्मामवलोकय ॥ ८० ॥

टीका ॥ हे मातः काञ्ची नाम्नी या पुरी तां विशेषेण भूपयति शोभयति स्वक्रीडया या तत्संबुद्धौ हे काञ्चिपुरीविभूषे ! मन्मथस्य कामस्य यो मदस्तेन क्रान्तेन व्याप्तेन । चूततरुराम्रवृक्षः तस्य मूले तले गतस्य स्थितस्य पुंसः श्रीशिवस्य विशेषेण मोह्यमानं वश्यमानं स्वान्तं येन तेन कान्तेन रमणीयेन लोचनस्य प्रान्तेन दृगन्तेन किंचित् क्षणमात्रमपि मामवलोकय एतावतैवाहं कृतार्थो भविष्यामीति भावः ॥ ८० ॥

कामाक्षि केऽपि सुजनास्त्वदपाङ्गसङ्गे कण्ठेन कन्दलितकालिमसंप्रदायाः ॥
उत्तंसकल्पितचकोरकुटुम्बपोषा नक्तंदिवप्रसवभूनयना भवन्ति ॥ ८१ ॥

अन्वयः ॥ हे कामाक्षि ! केऽपि सुजनास्त्वदपाङ्गसङ्गे कण्ठेन कन्दलितकालिमसंप्रदायाः उत्तंसकल्पितचकोरकुटुम्बपोषा नक्तंदिवप्रसवभूनयना भवन्ति ॥ ८१ ॥

टीका ॥ हे कामाक्षि ! केऽपि विरलाः सज्जनास्तवापाङ्गस्त्वदपाङ्गस्तस्य सङ्गे संयोगे सति कण्ठेन गलेन कन्दलितः प्रकटितः कालिम्नः श्यामत्वस्य संप्रदायः परंपरा येषां ते तथोक्ताः। उत्तंसे मुकुटे कल्पितो निर्मितश्चकोराणां कुटुम्बस्य पोषा पोषको यैस्ते तादृशाः। नक्तं रात्रिः दिवा दिवसस्तयोः प्रसवो जन्म स च भवति याभ्यां तथाभूतौ सूर्याचंद्रमसौ नयनेषु येषाम् । यद्वा नक्तंदिवयोः प्रसवस्य जन्मनः भुवो भूमयो नयनानि येषां ते तथोक्ताः शिवरूपा भवन्ति जायन्ते । त्वदपाङ्गसङ्गाज्जनाः शिवरूपा भवन्तीति भावः ॥ ८१ ॥

नीलोत्पलप्रसवकान्तिनिदर्शनेन कारुण्यविभ्रमजुषा तव वीक्षणेन ॥
कामाक्षि कर्मजलधेः कलशीसुतेन पाशत्रयाद्वयममी परिमोचनीयाः ॥ ८२ ॥

अन्वयः ॥ हे कामाक्षि ! नीलोत्पलप्रसवकान्तिनिदर्शनेन कारुण्यविभ्रमजुषा कर्मजलधेः कलशीसुतेन तव वीक्षणेन अमी वयं पाशत्रयात्परिमोचनीयाः ॥ ८२॥

टीका ॥ हे कामाक्षि ! नीलोत्पलेभ्यः प्रसवो यस्याः सा चासौ कान्तिश्च तथा तस्याः कान्तेर्निदर्शनेन ज्ञापकेन उदाहरणभूतेनेत्यर्थः । करुणाया भावः कारुण्यं तस्य विभ्रमो विलासस्तं

जुषते सेवते इति तथा तेन । यद्वा कारुण्यं च विभ्रमाः शृङ्गाररसचेष्टाश्च ताः जुषमाणेन कर्मणां संचितक्रियमाणागामिनां प्रारब्धसहितानां जलधेः समुद्रस्य कलशीसुतेन श्रीअगस्त्येन कर्मवारिधिनाशार्थं अगस्त्यरूपेणेत्यर्थः ॥ तव वीक्षणेन निरीक्षणेन पाशानां त्रयं पाशत्रयं तस्मात् । अमी भवदीया वयं परितः सर्वतः मोचनीया मोचयितुं योग्याः ॥ ८२ ॥

अत्यन्तचञ्चलमकृत्रिममञ्जनं किं झङ्कारभङ्गिरहिता किमु भृङ्गमाला ॥
धूमाङ्कुरः किमु हुताशनसङ्गहीनः कामाक्षि नेत्ररुचिनीलिमकन्दली ते ॥ ८३ ॥

अन्वयः ॥ हे कामाक्षि ! अयं दृश्यमानः पदार्थः अत्यन्तचञ्चलमकृत्रिममञ्जनं किम् ? झङ्कारभङ्गिरहिता भृङ्गमाला किमु ? हुताशनसङ्गहीनः धूमाङ्कुरः किमु ? ते नेत्ररुचिनीलिमकन्दली अस्तीति शेषः ॥ ८३ ॥

टीका ॥ हे कामाक्षि ! अयं दृश्यमानः पदार्थः अत्यन्तचञ्चलं अकृत्रिमं स्वतो निष्पन्नं अञ्जनं कज्जलं किमिति प्रश्ने । झङ्कारो गुञ्जितं तस्य भङ्गी रचना तद्रहिता भृङ्गालिः किमु ? हुतमशनं भोजनं यस्य स तथोक्तोऽग्निस्तस्य सङ्गेन संयोगेन हीनो धूमाङ्कुरो धूमोद्गमः किमु ? ते तव नेत्ररुचिनीलिमकन्दली अस्तीति शेषः । तन्न निर्णीयतेऽस्माभिः तस्यास्तथाऽप्रतीयमानत्वात् ॥ ८३ ॥

कामाक्षि नित्यमयमञ्जलिरस्तु मुक्तिबीजाय विभ्रममदोदयघूर्णिताय ॥
कन्दर्पदर्पपुनरुद्भवसिद्धिदाय कल्याणदाय तव देवि दृगञ्चलाय ॥ ८४ ॥

अन्वयः ॥ हे देवि ! हे कामाक्षि ! मुक्तिबीजाय विभ्रममदोदयघूर्णिताय कन्दर्पदर्पपुनरुद्भवसिद्धिदाय कल्याणदाय तव दृगञ्चलाय अयमञ्जलिर्नित्यमस्तु ॥ ८४ ॥

टीका ॥ हे देवि ! हे कामाक्षि ! मुक्तेर्बीजाय कारणाय विभ्रमो नाम शृङ्गाररसस्य चेष्टा तस्य यो मदो गर्वस्तस्य य उदयः जन्म समुन्नतिर्वैभवः इति यावत् । यद्वा विभ्रमो नाम विलासस्तद्रूपो यो मदो गर्वस्तेन घूर्णितः पुनःपुनर्भ्रमणकारी तस्मै । कन्दर्पः कामस्तस्य शिवपराजयेन यो दर्पो गर्वस्तस्य यः पुनरुद्भवः पुनःप्रादुर्भावस्तस्य सिद्धिं ददातीति तथोक्तस्तस्मै । कल्याणं ददातीति कल्याणदस्तस्मै तव दृगञ्चलाय वीक्षणप्रान्ताय कटाक्षायेत्यर्थः ॥ अयमञ्जलिर्नमस्कारो नित्यमस्तु ममेति शेषः ॥ ८४ ॥

दर्पाङ्कुरो मकरकेतनविभ्रमाणां निन्दाङ्कुरो विदलितोत्पलचातुरीणाम् ॥
दीपाङ्कुरो भवतमिस्रकदम्बकानां कामाक्षि पालयतु मां त्वदपाङ्गपातः ॥ ८५ ॥

अन्वयः ॥ हे कामाक्षि ! मकरकेतनविभ्रमाणां दर्पाङ्कुरः विदलितोत्पलचातुरीणां निन्दाङ्कुरः भवतमिस्रकदम्बकानां दीपाङ्कुरस्त्वदपाङ्गपातः मां पालयतु ॥ ८५ ॥

टीका ॥ हे कामाक्षि ! मकरः केतने केतौ यस्य सः कामस्तस्य विभ्रमाणां विलासानां दर्पस्य गर्वस्याङ्कुर उद्गमः । विशेषेण दलितं विकसितं यदुत्पलं कुवलयं तस्य चातुरीणां कुशलतानां निन्दाङ्कुरः ततोतिशयसुन्दरत्वात् । भवतमिस्रकदम्बकानां संसारान्धकारसमूहानां दीपस्याङ्कुर उद्गमः संसारतमोनाशक इत्यर्थः । ते अपाङ्गपातो दृगन्तपातो मां पालयतु रक्षतु ॥ ८१ ॥

कैवल्यदिव्यमणिरोहणपर्वतेभ्यः कारुण्यनिर्झरपयःकृतमज्जनेभ्यः ॥
कामाक्षि किंकरितशंकरमानसेभ्यस्तेभ्यो नमोस्तु तव वीक्षणविभ्रमेभ्यः ॥८६॥

अन्वयः हे कामाक्षि ! कैवल्यदिव्यमणिरोहणपर्वतेभ्यः कारुण्यनिर्झरपयःकृतमज्जनेभ्यः किंकरितशंकरमानसेभ्यस्तेभ्यस्तव वीक्षणविभ्रमेभ्यो नमोस्तु ॥ ८६ ॥

टीका ॥ हे कामाक्षि ! केवलस्य शुद्धब्रह्मणो भावः कैवल्यं तदेव दिव्यो मणिरलौकिकरत्नं रोहते उत्पद्यते येषु ते तथोक्तास्तद्रूपाः पर्वतास्तेभ्यः मुक्तिरत्नपर्वतेभ्य इत्यर्थः । करुणाया भावः कारुण्यं तदेव निर्झरस्य पयो जलं तस्मिन् कृतं मज्जनं स्नानं यैस्तेभ्यः । किंकरितं किंकरं जातं शंकरस्य शंभोर्मानसं मनो येषां तेभ्यः । तेभ्यः सर्वजनप्रसिद्धेभ्यः पूर्ववर्णितेभ्यः तव वीक्षणविलासेभ्यो नमोऽस्तु ममेति शेषः ॥ ८६ ॥

अल्पीय एव नवमुत्पलमम्ब हीना मीनस्य सा सरणिरम्बुरुहां च किं वा ॥
दूरे मृगी तदसमञ्जसमञ्जनं च कामाक्षि वीक्षणरुचो तव तर्कयामः ॥ ८७ ॥

अन्वयः ॥ हे अम्ब ! हे कामाक्षि ! तव वीक्षणरुचौ नवमुत्पलं अल्पीय एव मीनस्य सा सरणिरम्बुरुहां च हीनैव किं वा मृगी दूरे तत् अञ्जनं चासमञ्जसं तर्कयामो वयमिति शेषः ॥ ८७ ॥

टीका ॥ हे अम्ब ! हे कामाक्षि ! तव वीक्षणरुचौ सत्यां नवं नवीनमुत्पलं कुवलयं तत्तु अल्पीयस्तुच्छमेवेत्यवधारणे तर्कयामः । सौन्दर्यसाम्याभावात्, पङ्कजन्मत्वात्, रात्रावेव च प्रफुल्लत्वात् पराधीनविकसनत्वाच्च । इयं तु महासौन्दर्यशालिनी स्वाधीनैश्वर्या सदा स्वतः प्रफुल्ला पङ्कौघहरा च । मीनस्य मत्स्यस्य सरणिः श्रेणिः सा तु हीनैव नीचैव । तस्याः सदाऽस्थायित्वात्कुरूपत्वाच्च । अम्बुरुहां अम्बूनि जलानि रोहन्ते येभ्यः तेम्बुरुहस्तेषां मेघानामित्यर्थः । सा सरणिः अधमैवेत्यर्थः । तस्याः सदा तापहारकत्वाभावात्, नैमित्तिकोद्भवत्वाच्च, आन्तरीयतापहारकत्वाभावाच्च । किं च मृगी दूरत एव त्याज्या तस्याः पशुत्वाद्वीक्षणरुचिसदृशचापल्याभावाच्च । तत् अञ्जनं कज्जलं असमञ्जसं तदग्रे किमपि न वस्तु । तस्यातितुच्छत्वात् अन्यस्य मलीमसत्वकरणाच्च । इति तर्कयामः तर्कनां कुर्मः । अतः कथमप्युपमातुमशक्या तव वीक्षणरुगिति भावः ॥ ८७ ॥

मिश्रीभवद्गरलपङ्किलशांकरोरःसीमाङ्गणे किमपि रिङ्खणमादधानः ॥
हेलावधूतललितश्रवणोत्पलोऽसौ कामाक्षि बाल इव राजति ते कटाक्षः ॥८८॥

अन्वयः ॥ हे कामाक्षि ! मिश्रीभवद्गरलपङ्किलशांकरोरःसीमाङ्गणे किमपि रिङ्खणमादधानः हेलावधूतललितश्रवणोत्पलः असौ ते कटाक्षः बाल इव राजति ॥ ८८ ॥

टीका ॥ हे कामाक्षि ! मिश्रीभवदेकीभवद्गरलपङ्किलं यस्मिन् तत्. शंकरस्येदं शांकरं उरः वक्षस्थलं तदेव सीमाङ्गणं तस्मिन् । किमप्यनिर्वचनीयं वर्णितुमशक्यसौन्दर्यं रिङ्खणं ईषदीषच्चलनं आसमन्तादधानो हेलया क्रीडयाऽवधूतं चालितं ललितं कान्तं श्रवणसंबन्धि उत्पलं येन स तथोक्तः असौ दृश्यमानस्ते तव कटाक्षः बालः शिशुरिव राजति शोभते ॥८८॥

प्रौढीकरोति विदुषां नवसूक्तिधाटीचूताटवीषु बुधकोकिललाल्यमानम् ॥
माध्वीरसं परिमलं च निरर्गलं ते कामाक्षि वीक्षणविलासवसन्तलक्ष्मीः ॥८९॥

अन्वयः ॥ हे कामाक्षि ! ते वीक्षणविलासवसन्तलक्ष्मीः विदुषां नवसूक्तिधाटीचूताटवीषु बुधकोकिललाल्यमानं माध्वीरसं निरर्गलं परिमलं च प्रौढीकरोति ॥ ८९ ॥

टीका ॥ हे कामाक्षि ! ते तव वीक्षणविलास एव वसन्तस्तस्य लक्ष्मीः शोभा विदुषां विद्वज्जनानां नवा नूत्नाः सुष्ठु या उक्तयस्तासां या धाट्यो रीतयस्ता एव चूतानामाम्राणां अटव्यः अरण्यानि तासु बुधाः पण्डिता एव कोकिलास्तैर्लाल्यमानं आद्रियमाणं माध्वीरसं कविता-मधुररसं मकरन्दं च निरर्गलं प्रतिबन्धरहितं परिमलं सुयशः सुगन्धं च प्रौढीकरोति विव-र्द्धयतीत्यर्थः ॥ ८९ ॥

कूलंकषं वितनुते करुणाम्बुवर्षी सारस्वतं सुकृतिनः सुलभं प्रवाहम् ॥
तुच्छीकरोति यमुनाम्बुतरङ्गभङ्गी कामाक्षि किं तव कटाक्षमहाम्बुवाहः ॥९०॥

अन्वयः ॥ हे कामाक्षि ! सुकृतिनः करुणाम्बुवर्षी तव कटाक्षमहाम्बुवाहः कूलंकषं सार-स्वतं प्रवाहं सुलभं वितनुते यमुनाम्बुतरङ्गभङ्गी किं तुच्छीकरोति ॥ ९० ॥

टीका ॥ हे कामाक्षि ! सुकृतिनः पुण्यकारिणः प्रति करुणारूपमम्बु जलं वर्षतीति तथाविधः कटाक्ष एव महानम्बुवाहो मेघः कूलं तटं कर्षति घर्षतीति कूलंकषः पूर्णस्तं तथाविधं सरस्वत्या वाण्यास्तन्नाम्न्याः सरितश्च इदं सारस्वतं प्रवाहं तत्संबन्धि अतिवेगवच्चलज्जलं वि-कटाक्षरपदवद्गद्यपद्यात्मकसंस्कृतशब्दधाराप्रवाहसमूहं सुष्ठु लभते इति सुलभस्तं सुलभं वितनुते विस्तृणोति। तर्हि यमुनाया अम्बु जलं तस्य ये तरङ्गास्तेषां भङ्गी कल्लोलकौटिल्यं वा किमिति तुच्छीकरोति । यो मेघः सरस्वत्याः प्रवाहं वर्द्धयति स एव यामुनीं तरङ्गभङ्गीं ह्रस्वीकरोतीति महदाश्चर्यम् । अर्थाद्भगवत्याः करुणाकटाक्षः अष्टादशविद्यागद्यपद्यमयीवाणी प्रदः स्वकालिमसौन्दर्येण यमुनाश्रीहारकश्चेति भावः ॥ ९० ॥

जागर्त्ति देवि करुणा शुकसुन्दरी ते ताटङ्करत्नरुचिदाडिमखण्डशोणे ॥
कामाक्षि निर्भरकटाक्षमरीचिपुञ्जमाहेन्द्रनीलमणिपञ्जरमध्यभागे ॥ ९१ ॥

अन्वयः ॥ हे कामाक्षि ! हे देवि ! ताटङ्करत्नरुचिदाडिमखण्डशोणे निर्भरकटाक्षमरीचिपुञ्ज माहेन्द्रनीलमणिपञ्जरमध्यभागे ते करुणाशुकसुन्दरी जागर्त्ति ॥ ९१ ॥

टीका ॥ हे कामाक्षि ! हे देवि ! ताटङ्कयोः कर्णाभरणयोर्यानि रत्नानि तेषां या रुचयः कान्तयस्ता एव दाडिमखण्डानि तैः शोणे रक्ते निर्भरः पूर्णो यः कटाक्षस्तस्य या मरीचयः किरणास्तासां यः पुञ्जः स एव माहेन्द्रनीलमणिपञ्जरस्तस्य मध्यभागे ते तव करुणैव शुकसुन्दरी शुकी जागर्त्ति प्रकाशत इत्यर्थः ॥ ९१ ॥

कामाक्षि सत्कुवलयस्य सगोत्रभावादाक्रामति श्रुतिमसौ तव दृष्टिपातः ।
किं च स्फुटं कुटिलतां प्रकटीकरोति भ्रूवल्लरीपरिचितस्य फलं किमेतत्॥९२॥

अन्वयः ॥ हे कामाक्षि ! असौ तव दृष्टिपातः सत्कुवलयस्य सगोत्रभावात् श्रुतिमाक्रामति । किं च स्फुटं कुटिलतां प्रकटीकरोति । एतत्किं भ्रूवल्लरीपरिचितस्य फलमिति त्वं ब्रूहीति शेषः ॥ ९२ ॥

टीका ॥ हे कामाक्षि ! असौ तव दृष्टिपातः कटाक्षपातः सत्कुवलयस्य प्रशस्तश्यामसरोजस्य सगोत्रभावादेकजातिभावात् वर्णधर्मसाम्यात् श्रुतिं वेदं कर्णं च आक्रामति-याति अभ्यसति यथा कुवलयं तथा चायमपि । किंच स्फुटं यथा तथा कुटिलतां वक्रत्वं प्रकटीकरोति । तदेतत् भ्रूवल्लरीपरिचितस्य कुटिलभ्रूलतायाः सङ्गस्य फलं परिपाकः अस्ति किमिति प्रश्ने त्वं कथयेति शेषः ॥९२॥

एषा तवाक्षिसुषमा विषमायुधस्य नाराचवर्षलहरी नगराजकन्ये॥
शङ्के करोति शतधा हृदि धैर्यमुद्रां श्रीकामकोटि यदसौ शिशिरांशुमौलेः॥९२॥

अन्वयः ॥ हे नगराजकन्ये ! हे श्रीकामकोटि ! एषा तवाक्षिसुषमा शिशिरांशुमौलेः हृदि धैर्यमुद्रां शतधा करोति, यस्मादसौ विषमायुधस्य नाराचवर्षलहरीति शङ्के ॥ ९२ ॥

टीका ॥ हे नगराजकन्ये ! हे पर्वतराजपुत्रि ! कामः कोट्यां अग्रभागे सुभटत्वेन यस्याः । यद्वा कामाः कामना देयत्वेन अग्रे यस्याः तत्संबुद्धौ हे कामकोटि ! एषा प्रत्यक्षत्वेन दृश्यमाना तवाक्षिसुषमा नेत्रयोः परमा शोभा शिशिरांशुमौलेः श्रीशिवस्य हृदि मनसि वर्त्तमानां धैर्यमुद्रां विषयेष्वचाञ्चल्यस्यावस्थानं शतधा खण्डशः करोति, अर्थादतिचञ्चलं करोति । यद्यस्मादसौ विषमायुधस्य कामस्य नाराचानां शराणां वर्षः वृष्टिः तस्य लहरी परंपरा इति शङ्के तर्कयाम्यहमिति शेषः ॥ ९३ ॥

बाणेन पुष्पधनुषः परिकल्प्यमानत्राणेन भक्तमनसां करुणाकरेण ॥

कोणेनं कोमलदृशस्तव कामकोटि ! शोणेन शोषय शिवे मम शोकसिन्धुम् ॥ ९४ ॥

अन्वयः ॥ हे शिवे ! हे कामकोटि ! पुष्पधनुषो बाणेन भक्तमनसां परिकल्प्यमानत्राणेन करुणाकरेण शोणेन तव कोमलदृशः कोणेन मम शोकसिन्धुं शोषय ॥ ९४ ॥

टीका ॥ शिवा कल्याणरूपा परब्रह्मरूपा वा तत्संबुद्धौ हे शिवे ! हे कामकोटि ! पुष्पधनुषः कामस्य बाणेन भक्तमनसां परि समन्तात्कल्प्यमानं क्रियमाणं त्राणं येन तेन करुणाकर्तृकेन करुणाया दयाया आकरेण खनिभूतेन वा शोणेन आरक्तेन अग्निसदृशेनेति यावत् । तव कोमलदृशः अतिसुकुमारदृष्टेः कोणेन प्रान्तभागेन मम शोकसिन्धुं चिन्तासागरं शोषयेत्यर्थः ॥ ९४ ॥

मारद्रुहो मुकुटसीमनि लाल्यमाने मन्दाकिनीपयसि ते कुटिलं चरिष्णुः ॥
कामाक्षि कोपरभसाद्वलमानमीनसंदेहमङ्कुरयति क्षणमक्षिपातः ॥ ९५ ॥

अन्वयः ॥ हे कामाक्षि ! मारद्रुहः मुकुटसीमनि लाल्यमाने मन्दाकिनीपयसि कोपरभसात्कुटिलं चरिष्णुः ते अक्षिपातः वलमानमीनसंदेहं क्षणमङ्कुरयति ॥ ९५ ॥

टीका ॥ हे कामाक्षि ! मारद्रुहः कामारेः शिवस्य मुकुटसीमनि उत्तंससीमायां लाल्यमाने प्रीत्या धार्यमाणे मन्दाकिनीपयसि गङ्गाजले कोपरभसात्सपत्नीभावतो यः कोपस्तस्य रभसाद्वेगात्कुटिलं चरिष्णुः वक्रगत्याचरणशीलस्ते तव अक्षिपातः दृष्टिपातः कुटिलायमानो यो मीनस्तस्य संदेहं संशयं कामाक्ष्या अत्यन्तकृपालुस्वभावत्वाज्झटिति कोपशान्तेः क्षणं क्षणमात्रं अङ्कुरयति कन्दलयति उद्गमयति इति यावत् । पश्चात्स्वस्थः सन् स्वभावगमीन इवाभातीति भावार्थः ॥ ९५ ॥

कामाक्षि संवलितमौक्तिककुण्डलांशुचञ्चत्सितश्रवणचामरचातुरीकः ॥
स्तम्भे निरन्तरमपाङ्गमये भवत्या बद्धश्चकास्ति मकरध्वजमत्तहस्ती ॥ ९६ ॥

अन्वयः ॥ हे कामाक्षि ! संवलितमौक्तिककुण्डलांशुचञ्चत्सितश्रवणचामरचातुरीकः भवत्या अपाङ्गमये स्तम्भे बद्धो मकरध्वजमत्तहस्ती निरन्तरं चकास्ति ॥ ९६ ॥

टीका ॥ हे कामाक्षि ! संवलिते चपले ये मौक्तिककुण्डले तयोरंशवः किरणास्त एव चञ्चन्तः स्फुरन्तः सिताः श्वेताः श्रवणसंबन्धिनश्चामरास्तेषां या चातुरी कौशलं साऽस्यास्तीति तथाविधः भवत्या अपाङ्गमये कटाक्षरूपे स्तम्भे बद्धो मकरध्वजः काम एव मत्तो हस्ती निरन्तरं चकास्ति दीप्यते ॥ ९६ ॥

यावत्कटाक्षरजनीसमयागमस्ते कामाक्षि तावदचिरान्नमतां नराणाम् ॥
आविर्भवत्यमृतदीधितिबिम्बमम्ब संविन्मयं हृदयपूर्वगिरीन्द्रशृङ्गे ॥ ९७ ॥

अन्वयः हे अम्ब ! हे कामाक्षि ! यावत्ते कटाक्षरजनीसमयागमस्तावन्नमतां नराणां हृदयपूर्वगिरीन्द्रशृङ्गे संविन्मयं अमृतदीधितिबिम्बं अचिरादाविर्भवति ॥ ९७ ॥

टीका ॥ हे अम्ब ! हे कामाक्षि ! यावत् यस्मिन् क्षणे ते तव कटाक्ष एव श्यामत्वाद्रजनी रात्रिस्तस्याः समयस्यागमः प्राप्तिर्भवति तावदेव तस्मिन्नेव क्षणे नमतां नमस्कुर्वतां जनानां भक्तानां मानसमेव पूर्वगिरीन्द्रशृङ्ग उदयाचलशिखरस्तस्मिन् संवित् ज्ञानं तन्मयं अमृतदीधितेश्चन्द्रस्य बिम्बं मण्डलेऽचिरादाशु अ विर्भवति उदितं भवतीत्यर्थः। यावत्तव कटाक्षसमागमस्तस्मिन्नेव क्षणे झटिति त्वां नमस्कुर्वतां हृदये ब्रह्मज्ञानं समुदेतीति भावः ॥ ९७ ॥

कामाक्षि कल्पविटपीव भवत्कटाक्षो दित्सुः समस्तविभवं नमतां नराणाम् ॥
भृङ्गस्य नीलनलिनस्य च कान्तिसंपत्सर्वस्वमेव हरतीति परं विचित्रम् ॥९८॥

अन्वयः ॥ हे कामाक्षि ! नमतां नराणां कल्पविटपीव समस्तविभवं दित्सुर्भवत्कटाक्षः भृङ्गस्य नीलनलिनस्य च कान्तिसंपत्सर्वस्वमेव हरति इति परं विचित्रम् ॥ ९८ ॥

टीका ॥ हे कामाक्षि ! नमतां प्रणमतां जनानां कल्पविटपीव कल्पवृक्ष इव समस्तविभवं संपूर्णमैश्वर्यं दित्सुर्दातुमिच्छुर्भवत्याः कटाक्षः भृङ्गस्य भ्रमरस्य नीलनलिनस्य श्यामसरोजस्य च कान्तिरूपायाः संपदः शोभारूपं सर्वस्वं सर्वधनमेव हरतीति एतत्परमुत्कटं विचित्रमाश्चर्यं तव कटाक्षमहिम्न इत्यर्थः ॥ ९८ ॥

अज्ञातभक्तिरसमप्रसरद्विवेकमत्यन्तगर्वमनधीतसमस्तशास्त्रम् ॥
अप्राप्तसत्यमसमीपगतं च मुक्तेः कामाक्षि नैव तव काङ्क्षति दृष्टिपातः॥९९॥

अन्वयः ॥ हे कामाक्षि ! अज्ञातभक्तिरसं अप्रसरद्विवेकं अत्यन्तगर्वं अनधीतसमस्तशास्त्रं अप्राप्तसत्यं मुक्तेः असमीपगतं तव दृष्टिपातो नैव काङ्क्षति ॥ ९९ ॥

टीका ॥ हे कामाक्षि ! फलत्यागपूर्वकं सर्वात्मना भजनं भक्तिः सा च आगमोक्ता स्थूलसूक्ष्मपररूपेण त्रिविधा स्थूला । विग्रहपूजनन्यासजपपाठादिबाह्यप्रपञ्चरूपा। सूक्ष्मा आन्तरीयपूजादिरूपा । परा भावनोपनिषदाद्युक्ता । यद्वा कायिकवाचिकमानसिकभेदेन त्रिविधा । यद्वा सौन्दर्यलहरीलक्ष्मीधरीटीकोक्ताऽभ्यन्तरीयपूजारूपा । स्वच्छन्दपद्धत्युक्तस्नानसंध्यातर्पणपारायणादिपूर्वकनित्यनैमित्तिकपूजारूपा वा । अथवा " वासुदेवः सर्वमिति स महात्मा सुदुर्लभः " इति गीतोक्ता । मनसा वाचा कर्मणा सर्वस्य स्वेष्टदेवतारूपेण भावनं तस्या रसः, न ज्ञातो भक्तिरसो येन स तथोक्तस्तम्। प्रसरन्विस्तरन्विवेको यस्य स प्रसरद्विवेकः न प्रसरद्विवेकोऽप्रसरद्विवेकस्तम् । अत्यन्तं बहुलतरो गर्वो यस्य तम् । न अधीतानि समस्तानि अखिलानि शास्त्राणि येन तम् अप्राप्तं सत्यं यस्य स तथोक्तस्तम्। मुक्तेः समीपगतो यो न भवति तं च

तव दृष्टिपातः नैव काङ्क्षति इच्छति। भक्तिरसाभिज्ञः विवेकवान्विनीतः अधीतसर्वशास्त्रः सत्यवादी मुक्तेः समीपगश्च तव कृपाकटाक्षादेव भवतीति भावः ॥ ९९ ॥

अत्यन्तशीतलमनर्गलकर्मपाककाकोलहारि सुलभं सुमनोभिरेतत् ॥
पीयूषमेव तव वीक्षणमम्ब किं तु कामाक्षि नीलमिदमित्ययमेव भेदः ॥ १०० ॥

**अन्वयः ॥ हे अम्ब ! कामाक्षि ! एतत्तव वीक्षणं अत्यन्तशीतलं अनर्गलकर्मपाककाकोलहारिसुमनोभिः सुलभं पीयूषमेव; किं तु इदं नीलं इत्ययमेव भेदः ॥ १०० ॥**

टीका ॥ हे अम्ब ! हे कामाक्षि ! एतत्तव वीक्षणं अत्यन्तशीतलं निरवधिकशिशिरम्। त्रिविधतापहारकत्वात्। निरर्गलोऽर्गलारहितो यः कर्मणां पाकः फलं स एव काकोलो विषः तं हरतीति तथोक्तम्। प्रतिबन्धरहितकर्मफलकालकूटहर्तृ इत्यर्थः। सुमनोभिः सद्भिर्देवैश्च सुलभं अतः पीयूषमेव अमृतमेव। किं तु इदं वीक्षणं नीलं श्यामं पीयूषं शुक्लं इति अयमेव दृश्यमानो भेदः नान्यः कोप्युपलभ्यत इत्यर्थः ॥ १०० ॥

इतिश्रीमूककविसार्वभौमविरचितपञ्चशतकेषु प्रथमकटाक्षशतकस्य रावराजेन श्रीशोभनसिंहेन कृता स्वर्णमालाख्या टीका समाप्ता ॥

अज्ञानं निबिडं तमो भगवति श्यामत्विषोपि क्षणात्।
क्षिण्वन्ति क्षणदां विचित्रमहिमां मायामविद्यामयीम् ॥
कुर्वाणा हि विचित्रचित्रमहिमाः स्वानां जनानां मुदे।
भूयासुर्मयि दीनवत्सलतरा दृक्कोणपातास्तव ॥ १ ॥

श्रीमत्पदाब्जमकरन्दजुषां जनानामाकाङ्क्षितोरुमधुरद्रवसंप्रपूर्णम् ॥
नानाफलं ददति देवि दृगन्तपाताः कारुण्यवारिपरिपुष्टसुरद्रुमास्ते ॥ २ ॥

शौर्यं बलं वपुषि सुन्दरतां ददाति विद्यां सुकीर्तिमतुलां कवितां प्रभूताम् ॥
लक्ष्मीं सुलक्षणयुतां तरुणीं जनाय दीनाय देवि नमते करुणाकटाक्षः ॥ ३ ॥

कामाक्षि चन्द्र इव हर्षकरो जनानां ज्ञानं दिनं विशदयंस्तव सूर्यतुल्यः।
उन्मूलयन्नशुभकर्ममहीरुहं मे हस्तीव राजति शिवे करुणाकटाक्षः ॥ ४ ॥

कृपाकटाक्षस्तुतिमम्ब तावकीं नरः सदा यः पठते तवाग्रतः।
स वै लभेताशु कृपाकटाक्षकं शिवादिभिः प्रार्थितमिष्टसिद्धिदम् ॥ ५ ॥

बध्नीमो वयमञ्जलिं प्रतिदिनं बन्धच्छिदे देहिनां
कन्दर्पागमतन्त्रमूलगुरवे कल्याणकेलीभुवे ॥
कामाक्ष्या घनसारपुञ्जरजसे कामद्रुहश्चक्षुषां
मन्दारस्तबकप्रभामदजुषे मन्दस्मितज्योतिषे ॥ १ ॥

अन्वयः ॥ वयं देहिनां बन्धच्छिदे कन्दर्पागमतन्त्रमूलगुरवे कल्याणकेलीभुवे कामद्रुहश्चक्षुषां घनसारपुञ्जरजसे मन्दारस्तबकप्रभामदजुषे कामाक्ष्या मन्दस्मितज्योतिषे प्रतिदिनं अञ्जलिं बध्नीमः ॥ १ ॥

टीका ॥ वयमिति बहुवचनं तु (यह सहीहै) कृपाकटाक्षपात्रत्वामिप्रायेणेति। देहिनां बन्धच्छिदे बन्धं छिनत्तीति बन्धच्छित् तस्मै अहंममेतिरूपबन्धहर्त्रे। यद्वा ईप्सितकार्यप्रतिबन्धरूपपापनिवर्त्तयित्रे वस्तुतस्तु "सर्वं खल्विदं ब्रह्म" इत्याकारकज्ञानोत्पादनेन पुण्यपापकर्मबन्धनच्छेत्रे। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति गीतोक्तेः। कन्दर्पागमतन्त्रमूलगुरवे कन्दर्पस्य कामस्यागमः प्राप्तिः शास्त्रं च तस्य तन्त्रं रीतिः क्रिया च तत्र मूलगुरुर्मुख्यो वा तस्मै। यद्वा "कामो वै भगवान्" इति श्रुतेः। कन्दर्पः कामेश्वरः "परमेश्वरः संवित्कामेश्वरः स्मृतः" इतितन्त्रराजवचनात्। तस्य शास्त्रं ब्रह्मविद्यात्मकं तदुक्ता या क्रिया आचरणं तच्छिक्षणे मूलगुरुः आद्यगुरुः कुलाचार्यस्तस्मै कल्याणकेलीभुवे कल्याणानां आशिषां क्रीडाभूमये। यद्वा कल्याणशब्देन शिवो गृह्यते, तस्य खेलभूम्यै। कामद्रुहश्चक्षुषां कामं द्रुह्यतीति कामध्रुक् तस्य कामारेः शिवस्य चक्षुषां नेत्रत्रयाणामपि घनसारपुञ्जरजसे अतिसुखदानेन शीतलीकरणात् कर्पूरसमूहधूलये। मन्दारस्तबकप्रभामदजुषे मन्दारः कल्पवृक्षजातिविशेषस्तस्य स्तबकस्य पुष्पगुच्छस्य या प्रभा दीप्तिः तस्या यो मदः सौन्दर्यात्मकोभिमानोऽथवार्थिनां कामपूरणात्मको गर्वस्तं जुषते सेवत इति तथोक्तस्तस्मै कामाक्ष्या अम्बाया मन्दस्मितज्योतिषे मन्दं च तत् स्मित च मन्दस्मितं मन्दस्मितमेव ज्योतिर्मन्दस्मितज्योतिस्तेजः प्रकाशकत्वात् तस्मै। अतिमन्दहासरूपतेजसे अञ्जलिं नित्यं बन्धीमः निरन्तरं नमस्कुर्म्म इत्यर्थः ॥ १ ॥

सध्रीचे नवमल्लिकासुमनसां नासाग्रमुक्तामणे–
राचार्याय मृणालकाण्डमहसां नैसर्गिकाय द्विषे ॥
स्वर्धुन्या सह युध्वने हिमरुचेरर्द्धासनाध्यासिने
कामाक्ष्याः स्मितमञ्जरीधवलिमाऽद्वैताय तस्मै नमः ॥ २ ॥

अन्वयः ॥ नवमल्लिकासुमनसां सध्रीचे नासाग्रमुक्तामणेराचार्याय मृणालकाण्डमहसां नैस-

र्गिकाय द्विषे स्वर्धुन्या सह युध्वने हिमरुचेरर्द्धासनाध्यासिने तस्मै श्रीकामाक्ष्याः स्मितमञ्जरी-धवलिमाद्वैताय नमः ॥ २ ॥

टीका ॥ नवमल्लिकासुमनसां सध्रीचे नवा नवीना चासौ मल्लिका तस्याः सुमनसां च नवमल्लिका पुष्पाणां सध्रीचे सहचराय सख्ये इति यावत् । नासाया अग्रमुक्तामणेराचार्याय गुरवे अर्थात् शुक्लत्व-प्रकाशकत्वशिशिरत्वसौन्दर्यशिक्षयित्रे मृणालानां कमलतन्तूनां काण्डा गुच्छसमूहास्तेषां महसां तेजसां नैसर्गिकाय स्वाभाविकाय द्विषे शत्रवे स्वर्धुन्या स्वर्गनद्या गङ्गया सह सार्धं युध्वने युध्यमा-नाय । हिमरुचेः शीतकान्तेः चन्द्रस्य अर्द्धासनाध्यासिने तुल्यैश्वर्याय । तस्मै पूर्ववर्णिताय कामाक्ष्याः स्मितरूपा मञ्जरी तस्या यो धवलिमा शुक्लता तस्मिन्नद्वैताय अद्वितीयाय अपूर्वायेति यावत् । नम इति ॥ २ ॥

कर्पूरद्युतिचातुरीमतितरामल्पीयसीं कुर्वती
दौर्भाग्योदयमेव संविदधती दोषाकरीणां त्विषाम् ॥
क्षुल्लानेव मनोज्ञमल्लिनिकरान्फुल्लानभिव्यञ्जती
कामाक्ष्या मृदुलस्मितांशुलहरी कामप्रसूरस्तु मे ॥ ३ ॥

अन्वयः ॥ कर्पूरद्युतिचातुरीमतितरामल्पीयसीं कुर्वती, दोषाकरीणां त्विषां दौर्भाग्योदयमेव संविदधती, फुल्लान्मनोज्ञमल्लिनिकरान् क्षुल्लानभिव्यञ्जती कामाक्ष्या मृदुलस्मितांशुलहरी मे कामप्रसूरस्तु ॥ ३ ॥

टीका ॥ कर्पूरस्य द्युतिं दीप्तिं अतितरां अतिशयतरां अल्पीयसीं अत्यल्पां कुर्वती । दोषाकरीणां चान्द्रीणां त्विषां कान्तीनां दौर्भाग्योदयं दारिद्र्यस्य प्रकटनं सम्यक् विशेषेण दधती कुर्वती । राजा यथा दोषभाजः कस्यचिदपि दोषतारतम्येन धनादिहरणरूपदण्डदानेन धर्मेतं प्रवर्त्तयति, तथेयं स्मितांशुलहर्यपि गुरुस्त्रीगमनादिदोषाकरस्य चन्द्रस्य कान्तीनां उज्ज्व-लत्वप्रकाशकत्वाह्लादकारकत्वादिगुणधनानि संहृत्य तां दुर्दशां प्रापितवती अतस्त्रिभुवनमहाराजे-श्वर्या निरन्तरसहचरी । स्मितांशुलहर्यपि परमधर्मसहायिनी राजनीतिकुशलेत्यर्थः । फुल्लान्प्रफु-ल्लितान् मनोज्ञमल्लिनिकरान्मनोहरमल्लीनां समूहान् क्षुल्लान् क्षुद्रानभिव्यञ्जती अभितः प्रकाश-यन्ती । कामाक्ष्या मृदुलस्मितांशुलहरी कोमलस्मितस्य कराणां लहरी तरङ्गः जात्यैकवचनम् । मम कामप्रसूः कामान्प्रकर्षेण सूयत इति कामप्रसूर्मनसेप्सितकामनोत्पादिनी अस्तु इत्यर्थः ॥३॥

या पीनस्तनमण्डलोपरिलसत्कर्पूरलेपायते
या नीलेक्षणरात्रिकान्तिततिषु ज्योत्स्नाप्ररोहायते ॥

या सौन्दर्यधुनी तरङ्गततिषु व्यालोलहंसायते
कामाक्ष्याः शिशिरीकरोतु सततं सा मे स्मितप्राचुरी ॥ ४ ॥

**अन्वयः ॥** या कामाक्ष्याः स्मितप्राचुरी पीनस्तनोपरि लसत्कर्पूरलेपायते, या नीलेक्षण-रात्रिकान्तिततिषु, ज्योत्स्नाप्ररोहायते, या सौन्दर्यधुनी तरङ्गततिषु व्यालोलहंसायते सा मे हृदयं सततं शिशिरीकरोतु ॥ ४ ॥

**टीका ॥** या कामाक्ष्याः स्मितप्राचुरी मन्दहासस्य प्राचुर्यं बाहुल्यं पीनौ पुष्टौ स्तन-मण्डलौ तयोरुपरि लसन्शोभमानः कर्पूरस्य यो लेपः स इवाचरतीति तथा । या नीलं श्यामं ईक्षणं कटाक्षस्तदेव रात्रिस्तस्याः कान्तेस्ततिषु विस्तारेषु ज्योत्स्ना चन्द्रिका तस्याः प्ररोहोऽङ्कुरः स इवाचरतीति तथा । या सौन्दर्यस्य सौभाग्यस्य धुनी नदी तस्यास्तरङ्गास्तेषां ततिषु विस्तारेषु विशेषेण समन्ताच्चपला लोला हंसी इवाचरतीति तथा. सा मे मम हृदयं मनः सततं निरन्तरं शिशिरीशीतलीकरोतु । मन्दहासस्य कर्पूरेण ज्योत्स्नया च हंसैश्च सादृशोक्त्या ज्योत्स्ना-कर्पूरयोः शीतगुणवैशिष्टयात्, हंसानां रमणीयत्वात् मनसः शीतलीकरणं युक्तमेवेतिभावः ॥ ४॥

येषां गच्छति पूर्वपक्षसरणिं कौमुद्वतः श्वेतिमा
येषां सन्ततमारुरुक्षति तुलाकक्षां शरच्चन्द्रमाः ॥
येषामिच्छति कम्बुरप्यसुलभामन्तेवसत्प्रक्रियां
कामाक्ष्या ममतां हरन्तु मम ते हासत्विषामङ्कुराः ॥ ५ ॥

**अन्वयः ॥** येषां पूर्वपक्षसरणिं कौमुद्वतः श्वेतिमा गच्छति येषां तुलाकक्षां शरच्चन्द्रमाः सन्ततमारुरुक्षति येषामसुलभां अन्तेवसत्प्रक्रियां कम्बुरपि इच्छति ते कामाक्ष्या हासत्विषा-मङ्कुरा मे ममतां हरन्तु ॥ ५ ॥

**टीका ॥** येषां हासत्विषामङ्कुराणां पूर्वपक्षसरणिं सिद्धान्तविरुद्धकोटिमार्गं कौमुद्वतः श्वेत-कमलस्य श्वेतिमा श्वेतता सततं गच्छति । न तु तत्तुल्यताप्राप्तिरूपसिद्धान्तं प्राप्नोति । येषां तुलाकक्षां समानीकरणसाधनं शरद्दतोश्चन्द्रः शरच्चन्द्रः सन्ततमारुरुक्षति । अहमेतैस्तुल्यो भवेयं इति मनसि कृत्वा आरूढभवनमिच्छति। नत्वारूढो भवत्यसमानत्वात् । येषां असुलभां दुर्लभां अन्तेवसत्प्रक्रियां समीपे वसतां विद्यार्थिनां प्रक्रियां यदधिकारकर्म श्वेतत्वसुन्दरत्व-भासकारित्वशिक्षणे तद्विद्यार्थिपरिपाटीमिच्छति । न तु शिष्यो भवति । अपात्रत्वात् । ते तादृशाः प्रसिद्धाः कामाक्ष्याः हासस्य त्विषां कान्तीनां अङ्कुरा उद्गमा मे मम ममतां "मामकोऽयं देहो, मदीयोऽयं गेहो, मदीयेयं स्त्री" इत्यादिवन्धनरूपां हरन्तु इत्यर्थः ॥ ५ ॥

मदीयमिदं गेहम् आशासीमसु सन्ततं विदधती नैशाकरीं प्रक्रियां

काशानामभिमानभङ्गकलनाकौशल्यमाबिभ्रती ॥
ईशानेन विलोकिता सकुतुकं कामाक्षि ते कल्मष–
क्लेशापायकरी चकास्ति लहरी मन्दस्मितज्योतिषाम् ॥ ६ ॥

अन्वयः ॥ हे कामाक्षि ! सकुतुकं यथा स्यात्तथा ईशानेन विलोकिता सती, आशासीमसु नैशाकरीं प्रक्रियां सन्ततं विदधती सती, काशानामभिमानभङ्गकलनाकौशल्यं आबिभ्रती सती कल्मशक्लेशापायकरी ते मन्दस्मितज्योतिषां लहरी चकास्ति ॥ ६ ॥

टीका ॥ हे कामाक्षि ! सकुतुकं सहर्षं यथा स्यात्तथा ईशानेन विलोकिता दृष्टा सती, आशासीमसु दिगन्तेषु अप्राप्तवस्तुप्रापणे दीर्घकालाकाङ्क्षावधिषु च सन्ततं निरन्तरं नैशाकरीं चान्द्रीं प्रकर्षेण क्रियामानुपूर्वीं प्रकाशकत्वेन ध्वान्तनाशकत्वं, वस्तुलाभप्रदत्वेनेष्टसंपादकत्वेन चाल्हादकारकत्वं, तापनाशकत्वेन शीतलकारकत्वं विदधती कुर्वतीत्यर्थः । काशानां प्रकाशानां सर्वेषां योऽभिमानो गर्वस्तस्य यो भङ्गस्तस्य या कलना रचना तस्या यत्कौशल्यं तदासमन्ताद्बिभ्रती सती, कल्मषेण पापेन जातो यः क्लेशस्तस्यापायकरी । यद्वा पापस्य क्लेशस्य च द्वयोर्नाशकरी एतादृशी ते तव मन्दस्मितज्योतिषां अतिमन्दहासतेजसां लहरी चकास्ति शोभत इत्यर्थः ॥ ६ ॥

आरूढस्य समुन्नतस्तनतटीसाम्राज्यसिंहासनं
कन्दर्पस्य विभोर्जगत्त्रयजयप्राकट्यमुद्रानिधेः ॥
यस्याश्चामरचातुरीं कलयते रश्मिच्छटाचञ्चला
सा मन्दस्मितमञ्जरी भवतु नः कामाय कामाक्षि ते ॥ ७ ॥

अन्वयः ॥ हे कामाक्षि ! स्तनतटीसाम्राज्यसिंहासनं आरूढस्य विभोर्जगत्त्रयजयप्राकट्यमुद्रानिधेः कन्दर्पस्य चामरचातुरीं यस्याः मन्दस्मितमञ्जर्याः चञ्चला रश्मिच्छटा कलयते सा ते मन्दस्मितमञ्जरी नः कामाय भवतु ॥ ७ ॥

टीका ॥ हे कामाक्षि ! स्तनतटी एव साम्राज्यसंबन्धि सिंहासनं तदाद्यारूढस्यास्थितस्य विभोर्व्यापकस्य प्रभोर्जगत्त्रयजयस्य त्रिलोक्या विजयस्य प्राकट्यं प्राकाश्यं तस्य या मुद्राश्चिन्हानि तासां निधेः कोशस्य । कन्दर्पस्य कामस्य चामरचातुरीं चामरयोश्चातुर्यं यस्या मन्दस्मितमञ्जर्य्या रश्मयः किरणास्तेषां चञ्चला छटा शोभा कलयते रचयति सा ते तव मन्दहासमञ्जरी नोऽस्माकं कामाय सर्वकामप्रपूर्तये भवत्वित्यर्थः ॥ ७ ॥

शंभोर्या परिरम्भसंभ्रमविधौ नैर्मल्यसीमानिधे–
र्गैर्वाणीव तरङ्गिणी कृतमृदुस्पन्दा कलिन्दात्मजाम् ॥

कल्माषीकुरुते कलङ्कसुषमांकण्ठस्थलीचुम्बिनी
कामाक्ष्याः स्मितकन्दली भवतु सा कल्याणसंदोहिनी ॥ ८ ॥

**अन्वयः ॥ नैर्मल्यसीमानिधेः शंभोः परिरम्भसंभ्रमविधौ या कण्ठस्थलीचुम्बिनी कृतमृदुस्पन्दा कामाक्ष्याः स्मितकन्दली कलङ्कसुषमां कल्माषीकुरुते । का कामिव । गैर्वाणीतरङ्गिणी कलिन्दात्मजामिव । सा कल्याणसंदोहिनी भवतु ममेति शेषः ॥ ८ ॥**

**टीका ॥** निर्मलस्य भावो नैर्मल्यं कर्पूरगौरत्वं वस्तुतस्तु मायामलरहितत्वं शुद्धत्वमित्यर्थः । तस्य निधेः निधीयते स्थाप्यते यस्मिन्निति सः तस्य शंभवत्यस्मादितिशंभुस्तस्य यः परिरम्भः आलिङ्गनं तस्य संभ्रम आदरस्तस्य विधौ विधाने कृतमृदुस्पन्दा कृतो मृदुः कोमलः स्पन्दः किंचित्किंचिच्चलनं यया सा तथोक्ता । कण्ठस्थलीचुम्बिनी कण्ठस्पर्शिनी कामाक्ष्याः स्मितस्य कन्दली नवोद्गमा कलङ्कसुषमां विषशोभां कल्माषीकुरुते कर्बुरीकरोतीत्यर्थः । का कामिव, गैर्वाणी तरङ्गिणी गङ्गा कलिन्दात्मजां यमुनामिव । सा पूर्वोक्तविशेषणविशिष्टा मे मम कल्याणानामैश्वर्याद्यभीष्टसिद्धिरूपाणां मोक्षस्य च भक्तेर्वा सं सम्यक् दोहिनी दोग्ध्री भवत्वित्यर्थः ॥ ८ ॥

जेतुं हारलतामिव स्तनतटीं संजग्मुषी संततं
गन्तुं निर्मलतामिव द्विगुणितां मग्ना कृपास्रोतसि ॥
वक्तुं विस्मयनीयतामिव हरं रागाकुलं कुर्वती
मञ्जुस्ते स्मितमञ्जरी भवभयं मथ्नातु कामाक्षि मे ॥ ९ ॥

**अन्वयः ॥ हे कामाक्षि ! ते मञ्जुस्मितमञ्जरी मे भवभयं मथ्नातु । किं कर्तुमिव कुर्वती, हारलतां जेतुमिव स्तनतटीं संजग्मुषी, द्विगुणितां निर्मलतां गन्तुमिव कृपास्रोतसि मग्ना विस्मयनीयतां वक्तुमिव हरं रागाकुलं कुर्वतीत्यन्वयः ॥ ९ ॥**

**टीका ॥** हे कामाक्षि ! ते तव मञ्जुस्मितमञ्जरी मे मम भवस्य जगतो भयं मथ्नातु नाशयतु ॥ किं कर्तुमिव कुर्वती हाराणां लता हारलता । यद्वा हाररूपा लता तां जेतुं विजेतुमिव स्तनतटीं स्तनयोः प्रान्तदेशं सततं सम्यक् जग्मुषी गतवती पुनः किंविशिष्टा । द्विगुणितां द्विगुणोज्ज्वलतां गन्तुं प्राप्तुमिव कृपास्रोतसि दयाप्रवाहे मग्ना स्नाता । विस्मयनीयतामद्भुततां आश्चर्यतां वक्तुमिव हरति दुःखमितिहरस्तं रागाकुलं स्नेहव्याकुलं कुर्वतीत्यर्थः ॥ ९ ॥

श्वेतापि प्रकटं निशाकररुचां मालिन्यमातन्वती
शीताऽपि स्मरपावकं पशुपतेः संधुक्षयन्ती सदा ॥

स्वाभाव्यादधराश्रिताऽपि नमतामुच्चैर्दिशन्ती गतिं
कामाक्षि स्फुटमन्तरा स्फुरतु मे त्वन्मन्दहासप्रभा ॥ १० ॥

अन्वयः ॥ हे कामाक्षि ! श्वेतापि निशाकररुचां प्रकटं मालिन्यमातन्वती शीताऽपि पशुपतेः स्मरपावकं सदा संधुक्षयन्ती, स्वाभाव्यादधराश्रितापि नमतामुच्चैर्गतिं दिशन्ती सती, त्वन्मन्दहासप्रभा मे ममान्तरा सदा स्फुरतु ॥ १० ॥

टीका ॥ हे कामाक्षि ! श्वेतापि निशाकरस्य चन्द्रस्य रुचां कान्तीनां प्रकटं स्फुटं यथा स्यात्तथा मालिन्यमातन्वती स्वस्यातिसौन्दर्यश्वेतत्वेनान्तर्बहिस्तापहारकत्वेन च शिवमनोग्राहकत्वेन च आधिक्याच्चन्द्रकान्तीनामनादरत्वेन मालिन्यं मलिनतामासमन्तात्तन्वती विस्तारयन्ती । भवति ह्यधिकैश्वर्यसौन्दर्यौदार्यादिगुणवन्तं दृष्ट्वा परो मलिन इति । पुनः कीदृशी किं कुर्वती, शीताऽपि त्रितापहारिका । अपीत्याश्चर्ये पशुपतेः शिवस्य कामाग्निं सन्धुक्षयन्ती सम्यक् ज्वलयन्ती । स्वाभाव्यात् प्रकृतितोऽधराश्रिता ओष्ठाश्रिता नीचाऽश्रिता चापीति शक्त्युत्कर्षे । नमतां भक्तजनानामुच्चैर्गतिमूर्द्ध्वगमनं मोक्षं दिशन्ती ददती । उक्तं च रत्नत्रयपरिक्षायाम् । " गोलोकस्योर्द्ध्वभागादपि परमपदाद्वैष्णवादूर्द्ध्वदेशे भास्वत्कोटिप्रभं यात्यपुनरपगमः स्थानमानन्दरूपम् " इति । तव मन्दहासस्य प्रभा दीप्तिर्मे ममान्तरान्तःकरणे सदा स्फुरतु भासतामित्यर्थः ॥ १० ॥

वक्त्रश्रीसरसीजले तरलितभ्रूवल्लिकल्लोलिते
कालिम्ना दधती कटाक्षजनुषा माधुव्रतीं व्यापृतिम् ।
निर्निद्रामलपुण्डरीककुहनापाण्डित्यमाबिभ्रती
कामाक्ष्याः स्मितचातुरी मम मनःकातर्यमुन्मूलयेत् ॥ ११ ॥

अन्वयः ॥ तरलितभ्रूवल्लिकल्लोलिते वक्त्रश्रीसरसीजले कटाक्षजनुषा कालिम्ना माधुव्रतीं व्यापृतिं दधती, निर्निद्रामलपुण्डरीककुहनापाण्डित्यमाबिभ्रती सती, कामाक्ष्याः स्मितचातुरी मम मनःकातर्यमुन्मूलयेत् ॥ ११ ॥

टीका ॥ तरलिते चञ्चलिते भ्रूवल्ली ताभ्यां कल्लोलिते तरङ्गिते वक्त्रस्य मुखस्य या श्रीः शोभा सैव सरसीजलं तस्मिन् कटाक्षजनुषा कटाक्षजन्मना कालिम्ना श्यामतया माधुव्रतीं भ्रामरीं व्यापृतिं व्यापारं दधती निर्निद्रामलपुण्डरीककुहनापाण्डित्यं निर्गता निद्रा येभ्यस्तान्यमलपुण्डरीकानि तथोक्तानि तेषां कुहना ईर्ष्या दम्भचर्या वा तस्याः पाण्डित्यं चातुर्यमासमन्ताद्बिभ्रती धारयन्ती एतादृशी कामाक्ष्याः स्मितचातुरी मम मनःकातर्यं मनसः कातरतां आत्मनो ब्रह्मरूपस्य विभोः सर्वज्ञस्य अनाद्यविद्यया जीवभावप्राप्तिरूपं दैन्यं उन्मूलयतु नाशयतु ब्रह्मरूपं करोत्वित्यर्थः ॥ ११ ॥

नित्यं बाधितबन्धुजीवमधरं मैत्रीजुषं पल्लवैः
शुद्धस्य द्विजमण्डलस्य च तिरस्कर्त्तारमप्याश्रिता ॥
या वैमल्यवती सदैव नमतां चेतः पुनीतेतरां
कामाक्ष्या हृदयं प्रसादयतु मे सा मन्दहासप्रभा ॥ १२ ॥

अन्वयः ॥ या नित्यं बाधितबन्धुजीवं पल्लवैर्मैत्रीजुषं शुद्धस्य द्विजमण्डलस्य च तिरस्कर्त्तारमप्याश्रिता वैमल्यवती सदैव नमतां चेतः पुनीतेतराम्। सा कामाक्ष्या मन्दहासप्रभा मे हृदयं प्रसादयतु ॥ १२ ॥

टीका ॥ या नित्यं बाधितबन्धुजीवं नित्यं बाधितं बन्धुजीवं बन्धुवृक्षपुष्पं बन्धूनां स्वज्ञातीनां जीवात्मा च येन स तं पल्लवैर्वृक्षस्यातिनूतनरक्तपत्रैरतिकुत्सितैश्च मैत्रीजुषं प्रीतिसेविनं शुद्धस्य शुक्लस्य दोषरहितस्य च द्विजमण्डलस्य दन्तपङ्क्तेः विप्रसमूहस्य च तिरस्कर्त्तारं पिधानकारकं मानहारकं च अधरं नीचोष्ठं नीचजन्मानं चाश्रिता संश्रितापीति शक्त्युत्कर्षे। तादृशरागिण्यपि विगतं मलं विमलं तस्य भावो वैमल्यं तदस्या अस्तीति वैमल्यवती स्वयं नैर्मल्यवती उज्ज्वलपवित्रगुणवतीत्यर्थः ॥ अत एव नमतां चेतः अतिशयेन पुनीत इति पुनीतेतराम्। सा कामाक्ष्या मन्दहासस्य प्रभा शोभा यथा भक्तजनानां मुनीनां चेतः पुनीतेतरां तथा ममापि मनोवाञ्छितमुक्तिज्ञानदानेन प्रसादयतु प्रसन्नतायुक्तं करोत्वित्यर्थः ॥ १२ ॥

द्रुह्यन्ती तमसे मुहुः कुमुदिनीसाहाय्यमाबिभ्रती
यान्ती चन्द्रकिशोरशेखरवपुःसौधाङ्गणे प्रेङ्खणम् ॥
ज्ञानाम्भोनिधिवीचिकां सुमनसां कूलंकषां कुर्वती
कामाक्ष्याः स्मितकौमुदी हरतु मे संसारतापोदयम् ॥ १३ ॥

अन्वयः ॥ तमसे मुहुर्द्रुह्यन्ती कुमुदिनीसाहाय्यं मुहुराबिभ्रती चन्द्रकिशोरशेखरवपुःसौधाङ्गणे प्रेङ्खणं मुहुर्यान्ती सुमनसां ज्ञानाम्भोनिधिवीचिकां कूलंकषां मुहुः कुर्वती सती कामाक्ष्याः स्मितकौमुदी मे संसारतापोदयं हरत्वित्यन्वयः ॥ १३ ॥

टीका ॥ तमसेऽन्धकारायाज्ञानाय च मुहुर्वारंवारं द्रुह्यन्ती द्रोहं कुर्वती सती, मुहुः पौनःपुन्येन कुमुदिनी श्वेतकमलिनी तस्याः साहाय्यं सहायतां मुहुराबिभ्रती आसमन्ताद्धारयन्ती सती, चन्द्रश्चासौ किशोरस्तथोक्तः स च शेखरे यस्य तस्य वपुः शरीरं सौधाङ्गणं हर्म्याङ्गणं तस्मिन्प्रेङ्खणं किंचिच्चलनं मुहुर्यान्ती गच्छन्ती सती। सुमनसां ज्ञानाम्भोनिधिवीचिकां ज्ञानसमुद्रतरङ्गं जातित्वादेकवचनम्। कूलंकषां तटसंघर्षिणीं वृद्धिमतीमिति यावत्। मुहुः कुर्वती सती। कामाक्ष्याः साक्षात्पराशक्तेः स्मितकौमुदी मन्दहासचन्द्रिका मे मम द्वैतरूपतापोदयं हरतु नाशयत्वित्यर्थः ॥ १३ ॥

काश्मीरद्रवधातुकर्दमरुचा कल्माषतां बिभ्रती
हंसौघैरिवकुर्वती परिचितिं हारीकृतैर्मौक्तिकैः ॥
वक्षोजन्मतुषारशैलकटके संचारमातन्वती
कामाक्ष्या मृदुलस्मितद्युतिमयी भागीरथी भासते ॥ १४ ॥

अन्वयः ॥ काश्मीरद्रवधातुकर्दमरुचा कल्माषतां बिभ्रती हारीकृतैर्मौक्तिकैर्हंसौघैरिव परिचितिं कुर्वती वक्षोजन्मतुषारशैलकटके संचारमातन्वती कामाक्ष्या मृदुलस्मितद्युतिमयी भागीरथी भासते ॥ १४ ॥

टीका ॥ काश्मीरद्रवधातुकर्दमरुचा, काश्मीरस्य कुङ्कुमस्य यो द्रवो रस एव गैरिकादिधातोः कर्दमस्तस्य रुचा कान्त्या, कल्माषतां कालुष्यं स्वरूपस्य वैवर्ण्यं बिभ्रती धारयंती हारीकृतैर्मौक्तिकैर्हंसौघैरिव परिचितिं, हाररूपमुक्ताफलैर्हंससमूहैरिव परिचयं कुर्वती। वक्षोजन्मतुषारशैलकटके, वक्षोजन्मानौ च तौ तुषारशैलौ च तथोक्तौ कुचहिमगिरी तयोः कटके तटे संचारं विहारं समन्तात्तन्वती विस्तारयन्ती सती। एतादृशी कामाक्ष्याः कोमलमन्दहासकान्तिमयी भागीरथी गङ्गा भासते प्रकाशत इत्यर्थः ॥ १४ ॥

कम्बोर्वंशपरंपरा इव कृपासंतानवल्लीभुवः
संफुल्लस्तवका इव प्रसृमरा मूर्त्ताः प्रसादा इव ॥
वाक्पीयूषकणा इव त्रिपथगापर्यायभेदा इव
भ्राजन्ते तव मन्दहासकिरणाः काञ्चीपुरीनायिके ॥ १५ ॥

अन्वयः ॥ हे काञ्चीपुरीनायिके ! कम्बोर्वंशपरंपरा इव कृपा संतानवल्लीभुवः, संफुल्लस्तबका इव प्रसृमराः, मूर्त्ताः प्रसादा इव, वाक्पीयूषकणा इव, त्रिपथगापर्यायभेदा इव, तव मन्दहासकिरणा भ्राजन्ते ॥ १५ ॥

टीका ॥ हे काञ्चीपुरीनायिके ! कम्बोः शङ्खस्य वंशपरंपराः कुलाविच्छिन्नसंततयः इव कृपायाः संतानः संततिः स एव वल्लिस्तस्या भवन्तीति भुवः। कृपारूपा संतानवल्ली कल्पलता भूर्भूमिरुत्पत्तिस्थानं येषां ते तथाविधा वा। सम्यक् प्रफुल्लिताः स्तवका गुच्छा इव प्रसर्त्तुं शीलाः प्रसृमराः मूर्त्ताः मूर्त्तिमन्तः प्रसादाः प्रसन्नता इव वाग्रूपं पीयूषं तस्य कणा इव त्रिपथगा त्रिपथैस्त्रिमार्गैर्गच्छतीति त्रिपथगा गङ्गा तस्याः पर्यायभेदाः नामान्तरभेदा इव तव मन्दहासस्य किरणा मरीचयो भ्राजन्त इत्यर्थः ॥ १५ ॥

वक्षोजे घनसारपत्ररचनाभङ्गीसपत्नायिता
कर्णे बन्धुरदन्तपत्रकुहनाव्यापारमुद्रायिता ॥

ओष्ठश्रीनिकुरम्बपल्लवपुटे प्रेङ्खत्प्रसूनायिता
कामाक्षि स्फुरतां मदीयहृदये त्वन्मन्दहासप्रभा ॥ १६ ॥

**अन्वयः ॥ हे कामाक्षि ! त्वन्मन्दहासप्रभा मदीयहृदये स्फुरताम् । किं विशिष्टा वक्षोजे घनसारपत्ररचनाभङ्गीसपत्नायिता, कर्णे बन्धुरदन्तपत्रकुहनाव्यापारमुद्रायिता, ओष्ठश्रीनिकुरम्बपल्लवपुटे प्रेङ्खत्प्रसूनायितेत्यन्वयः ॥ १६ ॥**

टीका ॥ हे कामाक्षि ! त्वन्मन्दहासप्रभा मदीयहृदये स्फुरतां प्रकाशताम् किं । विशिष्टा वक्षोजे घनसारपत्ररचनाभङ्गीसपत्नायिता वक्षसि जायत इति वक्षोजः । जात्येकवचनम् । स्तनयुगमित्यर्थः । तस्मिन् घनसारस्य कर्पूरस्य पत्ररचनायां भङ्गी न्यासस्तया सपत्नायिता सपत्नः शत्रुरिवाचरतीति तथा अतिशुक्लकान्तिमतीत्वात् । रचनायां विन्यासत्वाच्च । कर्णे बन्धुरदन्तपत्रकुहनाव्यापारमुद्रायिता कर्णे बन्धुरं श्रवणे रम्यं दन्तपत्र यूथिकापुष्पकर्णाभरणं तस्य कुहना कापट्यं तस्य व्यापारः तस्य या मुद्रा आकृतिः सेवाचरतीति तथा । ओष्ठश्रीनिकुरम्बपल्लवपुटे ओष्ठयोर्या श्रीः शोभा तस्या यन्निकुरम्बं समूहः तदेव पल्लवः नूतनपत्रं तस्य पुटे संपुटे प्रेङ्खत्प्रसूनायिता प्ररिङ्खत्पुष्पमिवाचरन्तीति तथा इत्यर्थः ॥ १६ ॥

येषां बिन्दुरिवोपरि प्रचलितो नासाग्रमुक्तामणि-
र्येषां दीन इवाधिकण्ठमयते हारः करालम्बनम् ॥
येषां बन्धुरिवोष्ठयोररुणिमा धत्ते स्वयं रञ्जनं
कामाक्ष्याः प्रभवन्तु ते मम शिवोल्लासाय हासाङ्कुराः ॥ १७ ॥

**अन्वयः ॥ नासाग्रमुक्तामणिर्येषां हासाङ्कुराणामुपरि प्रचलितो बिन्दुरिव, हारः दीन इव येषां करालम्बनमधिकण्ठमयते ओष्ठयोररुणिमा येषां बन्धुरिव स्वयं रञ्जनं धत्ते ते कामाक्ष्याः हासाङ्कुरा मम शिवोल्लासाय प्रभवन्तु ॥ १७ ॥**

टीका ॥ नासाया अग्रे यो मुक्तामणिः स येषां हासाङ्कुराणामभिनवोत्पन्नानां उपरि प्रचलितो बिन्दुरिवाभाति येषां हासाङ्कुराणामधिकशोभां दृष्ट्वा हारो दीन इव कण्ठस्याप्युपरीत्यधिकण्ठं करालम्बनमयते प्राप्नोति । दुर्बलः कश्चित्पतनसमये सबलं यथावलम्बते तथेति भावः । ओष्ठयोररुणिमा येषां बन्धुरिव स्वयं रञ्जनमधिकशोभादानेन रक्ततां रागतां च धत्ते बिभ्रति ते कामाक्ष्या हासाङ्कुरा अभिनवोद्गमा मम शिवोल्लासाय प्रकर्षेण भवन्त्वित्यर्थः ॥ १७ ॥

या जाड्याम्बुनिधिं क्षिणोति भजतां वैरायते कैरवै-
र्नित्यं या नियमेन या च यतते कर्तुं त्रिनेत्रोत्सवम् ॥
बिम्बं चान्द्रमसं च वञ्चयति या गर्वेण सा तादृशी
कामाक्षि स्मितमञ्जरी तव कथं ज्योत्स्नेत्यसौ कीर्त्यते ॥ १८ ॥

अन्वयः ॥ हे कामाक्षि ! या भजतां जनानां जाड्याम्बुनिधिं नित्यं क्षिणोति या नियमेन कैरवैर्वैरायते, या च पुनः त्रिनेत्रोत्सवं कर्त्तुं यतते, या च गर्वेण चान्द्रमसं बिम्बं वञ्चयति तादृशी साऽसौ तव स्मितमञ्जरी ज्योत्स्ना कथं कीर्त्यते सद्भिरिति शेषः ॥ १८ ॥

टीका ॥ हे कामाक्षि ! या तव स्मितमञ्जरी भजतां भक्तजनानां नित्यं नियमेन प्रबन्धेन जाड्याम्बुनिधिं जडस्य भावो जाड्यं तदेवाम्बु तस्य निधिं कोषं जाड्यसमुद्रं क्षिणोति क्षीणं करोति या कैरवैः श्यामसरोजैश्चन्द्रविकासिकमलैर्नित्यं नियमेन वैरीवाचरतीति तथा या च पुनस्त्रिनेत्रोत्सवं त्रीणि नेत्राणि यस्य स तस्य श्रीशिवस्य उत्सवं कर्तुं यतते प्रयत्नं कुरुते या च चन्द्रमस इदं चान्द्रमसं बिम्बं मण्डलं गर्वेग सौन्दर्यादिगर्वेण वञ्चयति छलयति । साऽसौ तव तादृशी पूर्ववर्णिता स्मितमञ्जरी ज्योत्स्ना चन्द्रिका कथं कीर्त्यते केन प्रकारेण कथ्यते सद्भिरिति शेषः ॥ १८ ॥

आरूढा रभसात्पुरा पुररिपोराश्लेषणोपक्रमे
या ते मातरुपैति दिव्यतटिनीशङ्काकरी तत्क्षणम् ॥
ओष्ठं वेपयती भ्रुवौ कुटिलयत्यानम्रयत्याननं
तां वन्दे मृदुहासपूरसुषमामेकाम्रनाथप्रिये ॥ १९ ॥

अन्वयः ॥ हे एकाम्रनाथप्रिये ! हे मातः ! या ओष्ठं वेपयति, भ्रुवौ कुटिलयति, आननमानम्रयति, पुररिपोराश्लेषणोपक्रमे पुरा रभसादारूढा तत्क्षणं दिव्यतटिनीशङ्काकरी उपैति तां ते मृदुहासपूरसुषमामहं वन्दे इत्यन्वयः ॥ १९ ॥

टीका ॥ हे एकाम्रनाथप्रिये ! हे एकाम्रनाथस्यात्मरूपे ! "आत्मनः कामाय सर्वं प्रियं भवति" इति श्रुतेः । सर्वतः प्रेष्ठः आत्मैवातः हे एकाम्रनाथात्मरूपे ! । यद्वा स प्रिय आत्मा यस्याः सा हे तथोक्ते हे मातः ! या ओष्ठमधरं वेपयति कम्पयति, भ्रुवौ कुटिलयति वक्रे कारयति आननमानम्रयति त्वदीयं वदनचन्द्रं नम्रं कारयति, पुररिपोः श्रीशिवस्याऽऽश्लेषणोपक्रमे आलिङ्गनप्रारम्भे पुराऽग्रे रभसाद्धठादारूढा संती तत्क्षणात् दिव्यतटिनीशङ्काकरी गङ्गायाः शङ्काकरी उपैति प्राप्नोति अतिपवित्रमिष्टोज्ज्वलगुणवर्तीत्वात् । तां ते तव मृदुहासपूरसुषमां कोमलमन्दहासपूरशोभामहं वन्दे नमामि इत्यर्थः ॥ १९ ॥

वक्त्रेन्दोस्तव चन्द्रिकास्मितरुचिर्वल्गु स्फुरन्ती सतां
स्याच्चेद्युक्तमिदं चकोरमनसां कामाक्षि कौतूहलम् ॥
एतच्चित्रमहर्निशं यदधिकामेकां सदा गाहते
बिम्बोष्ठद्युमणिप्रभास्वपि च यद्विबोकमालम्बते ॥ २० ॥

अन्वयः ॥ हे कामाक्षि ! तव वक्त्रेन्दोश्चन्द्रिकास्मितरुचिः वल्गु स्फुरन्ती सती चकोरमनसां सतां कौतूहलं चेत्स्यादिदं युक्तम्। बिम्बोष्ठद्युमणिप्रभास्वपि यद्बिव्वोकमहर्निशमालम्बते एकामाधिकां सदा गाहते यद्यस्मात् एतच्चित्रमित्यन्वयः ॥ २० ॥

टीका ॥ हे कामाक्षि ! तव वक्त्रमेवेन्दुस्तस्य चन्द्रिका ज्योत्स्नारूपा स्मितरुचिर्मन्दहासकान्तिः वल्गु यथा स्यात्तथा । यद्वा वल्गुश्चासौ स्फुरन्ती च वल्गुस्फुरन्ती प्रकाशमाना। सतां चकोरमनसां कौतूहलं अपूर्ववस्तुदिदृक्षातिशयश्चेष्टाभेदः स्यात्। यद्वा फलनिरपेक्षतया चिकीर्षितं स्यात् चेदिदं युक्तम् । बिम्बोष्ठ एव द्युमणिः सूर्यस्तस्य प्रभासु शोभासु अपि च पुनः यद्बिब्बोकं विलासम् । यद्वा "बिब्बोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः" अहर्निशमहोरात्रमालम्बते आश्रयते। सदा स्वतोऽधिकामेकां श्रेष्ठां सूर्यप्रभामित्यर्थः । सदा गाहते विलोडते यद्यस्मात् एतच्चित्रमाश्चर्यमित्यर्थः ॥ २० ॥

साहाय्यं कलशाम्बुधेर्वहति ते कामाक्षि मन्दस्मितं
शोभामोष्ठरुचा च विद्रुमभवामेतद्भिदां ब्रूमहे ॥
एतस्मादुदितां पुरा किल पपौ शर्वः पुराणः पुमा—
नेतन्मध्यसमुद्भवां रसयते माधुर्यरूपां सुधाम् ॥ २१ ॥

अन्वयः ॥ हे कामाक्षि ! ते मन्दस्मितं कलशाम्बुधेः साहाय्यम्, ओष्ठरुचा विद्रुमभवां शोभां च वहति, एतद्भिदां वयं ब्रूमहे । एतस्मादुदितां सुधां पुराणः पुमान्पुरा पपौ एतन्मध्यसमुद्भवां सुधां शर्वः किल रसयते ॥ २१ ॥

टीका ॥ हे कामाक्षि ! ते तव मन्दस्मितं कलशाम्बुधेः क्षीरसमुद्रस्य साहाय्यं सहायतां वहति प्राप्नोति च पुनः ओष्ठस्यौष्ठपुटस्य कान्त्या विद्रुमभवां प्रवालोद्भवां शोभां वहति। परं त्वेतद्भिदां क्षीरसमुद्रस्य सुधाया मन्दस्मितामृतस्य चैतयोर्भेदं वयं ब्रूमहे वदामः । कुत एतस्मात्कलशाम्बुधेरुदितां समुद्धृतां सुधां पुराऽग्रे पुराणः पुमान् विष्णुः पपौ । तत्कालात्पश्चादद्यावध्यपि जीर्ण एवास्ति न तु तरुणो जातः । शर्वः शिवः किलेति सत्ये । एतन्मध्यसमुद्भवां मन्दहासोत्पन्नां माधुर्यरूपां सुधां रसयते अद्याप्यास्वदते । वर्त्तमानक्रियानिर्देशाद्देषा सुधाऽव्यया अधुनापि शिवेन पीयते परं तु नान्तं गच्छति सा न ह्यरुचिं उत्पादयति किं त्वधिकाधिकं च रोचते । शिवस्य अजरामरत्वकारिणी चेयम् । शृणाति हिनस्तीति शर्वः इति व्युत्पत्तेर्हननक्रियायाः कर्तृत्वं हि तरुणं विनाऽसंभवादित्यर्थः । यद्वा पुराणः पुमान् शर्वः क्षीरसागरोत्पन्नां सुधां पुरा पपौ, परंतु अलं तृप्तो नाभूत् सापि तत्समये नावशिष्टा। एतन्मध्यसमुद्भवां माधुर्यरूपां सुधामद्यापि रसयते आस्वदते । किल इति सत्ये । वर्त्तमानक्रियानिर्देशादेषा सुधा सदानन्तास्ति एतद्रसपानकरणमपि सदा तरुणेन शर्वेणैव संभाव्यमित्यलम् ॥ २१ ॥

उत्तुङ्गस्तनकुम्भशैलकटके विस्तारिकस्तूरिका–
पत्रश्रीजुषि चञ्चला स्मितरुचः कामाक्षि ते कोमलाः ॥
संध्यादीधितिरञ्जिता इव मुहुः सान्द्राधरज्योतिषा
व्यालोलामलशारदाभ्रशकलव्यापारमातन्वते ॥ २२ ॥

अन्वयः ॥ हे कामाक्षि ! उत्तुङ्गस्तनकुम्भशैलकटके विस्तारिकस्तूरिकापत्रश्रीजुषि ते चञ्चलाः कोमलाः स्मितरुचः सान्द्राधरज्योतिषा संध्यादीधितिरञ्जिता इव व्यालोलामलशारदाभ्रशकलव्यापारं मुहुरातन्वते ॥ २२ ॥

टीका ॥ हे कामाक्षि ! उत्तुङ्गौ च तौ स्तनौ च तथोक्तौ तावेव कुम्भौ कुम्भस्येवाकारत्वात् । तथोक्तौ तावेव शैलौ काठिन्योत्तुङ्गगुणविशिष्टत्वात् । तयोः कटके मध्यभागे । कीदृशे विस्तारोऽस्यास्तीति विस्तारि तच्च कस्तूरिकायाः पत्रं च तथोक्तं तस्य या श्रीः शोभा तां जुषते सेवत इति स तथोक्ते सान्द्राधरज्योतिषा सान्द्रो निबिडश्चासावधरश्च तथोक्तस्तस्य ज्योतिषा तेजसा संध्यादीधितिरञ्जिताः संध्याया दीधितयः किरणास्ताभिः रञ्जिता लोहिता इव कोमलाः स्मितरुचो मन्दहासकान्तयो लोलाश्चपलाः शरहतूद्भवानामभ्राणां शकलानां खण्डानां व्यापारं क्रियां मुहुर्वारंवारमातन्वते समन्ताद्विस्तारयन्तीत्यर्थः ॥ २२ ॥

क्षीरं दूरत एव तिष्ठतु कथं वैमल्यमात्रादिदं
मातस्ते सहपाठवीथिमयतां मन्दस्मितैर्मञ्जुलैः ।
किं चेयं तु भिदास्ति दोहनवशादेतत्तु संजायते
कामाक्षि स्वयमर्थितं प्रणमतामेतत्तु दोदुह्यते ॥ २३ ॥

अन्वयः ॥ हे कामाक्षि ! हे मातस्ते तवमञ्जुलैर्मन्दस्मितैः सह वैमल्यमात्रादिदं क्षीरं कथं पाठवीथिमयतां, अतो दूरत एव तिष्ठतु । किंचैतयोरियं भिदास्ति । एतत्क्षीरं तु दोहनवशात्संजायते । एतन्मञ्जुलं मन्दस्मितं प्रणमतां स्वयमर्थितं दोदुह्यते ॥ २३ ॥

टीका ॥ हे कामाक्षि ! हे मातस्ते तव मञ्जुलैर्मनोहरैः मन्दस्मितैः सह केवलं वैमल्यमात्राच्छुक्लत्वमात्रादिदं क्षीरं कथं पाठवीथिं तुल्यश्रेणिमयतां प्राप्नोतु । अत इदं तु दूरत एव तिष्ठत्वसाम्यात् । किं च पुनः इयं भिदा भेदोस्ति । एतत्क्षीरं दुग्धं तु दोहनवशात्परवशतयोद्भवति एतन्मञ्जुलं मन्दस्मितं तु स्वयं स्वतन्त्रं सत् प्रणमतां तव चरणयोर्नमतामर्थितं प्रार्थितं कामनारूपं दुग्धमतिशयेन दोग्धीति दोदुह्यते कामनातिशयं पुनःपुनः पिपर्त्तीत्यर्थः ॥ २३ ॥

कर्पूरैरमृतांशुभिर्जननि ते कान्तैश्च चन्द्रातपै–
र्मुक्ताहारगुणैर्मृणालवलयैर्मुग्धस्मितश्रीरियम् ॥

श्रीकाञ्चीपुरनायिके समतया संस्तूयते सज्जनै-
स्तत्तादृङ्मम तापशान्तिविधये किं देवि मन्दायते ॥ २४ ॥

अन्वयः ॥ हे देवि ! हे काञ्चीपुरनायिके ! हे जननि ! कर्पूरैरमृतांशुभिः कान्तैश्च चन्द्रातपैर्मुक्ताहारगुणैर्मृणालवलयैः समतया ते तव इयं मुग्धस्मितश्रीः सज्जनैः संस्तूयते । तत्तस्मात्कारणात्तादृगियं मम तापशान्तिविधये किं मन्दायते ॥ २४ ॥

टीका ॥ हे जननि ! हे काञ्चीपुरनायिके ! हे देवि ! कर्पूरैर्घनसारैरमृतांशुभिरमृतकिरणैः कान्तैर्मनोहरैश्चन्द्रातपैर्ज्योत्स्नाभिर्मुक्ताहारगुणैर्मुक्ताहाराणां शीतलत्वादिगुणैर्मृणालवलयैः कमलतन्तुभिः समतया तुल्यतया तवेयं मुग्धस्मितश्रीर्मनोहरमन्दहासशोभा सज्जनैः सत्पुरुषैः सम्यक् स्तूयते स्तवनं क्रियते । तस्माद्धेतोस्तादृशीयं ममाध्यात्मिकाधिभौतिकाधिदैविकतापनाशाय किमिति प्रश्ने मन्दायते जडायते अपि तु न जडायते इति काकुः । यद्वा मन्द इव शनैरिवाचरतीति तथा । शरणागतस्य ममैव त्रिविधतापनाशार्थं कृपया तव मन्दहासो जायत इति भावः । प्राप्तप्रसादस्य कवेरुक्तिः ॥ २४ ॥

मध्येगर्भितमञ्जुवाक्यलहरी माध्वीझरी शीतला
मन्दारस्तवकायते जननि ते मन्दस्मितांशुच्छटा ॥
यस्या वर्द्धयितुं मुहुर्विकसनं कामाक्षि कामद्रुहो
वल्गुर्वीक्षणविभ्रमव्यतिकरो वासन्तमासायते ॥ २५ ॥

अन्वय ॥ हे जननि ! हे कामाक्षि ! मध्येगर्भितमञ्जुवाक्यलहरी माध्वीझरी शीतला ते मन्दस्मितांशुच्छटा मन्दारस्तवकायते ॥ यस्या मुहुर्विकसनं वर्द्धयितुं कामद्रुहो वल्गुर्वीक्षणविभ्रमव्यतिकरो वासन्तमासायते ॥ २५ ॥

टीका ॥ हे जननि ! हे कामाक्षि ! मध्येगर्भिता मञ्जुर्मनोहरा वाक्यानां लहर्यस्तरङ्गा यस्यां सा मधुनोऽमृतस्य मकरन्दस्य च इयं माध्वी तस्या झरी शीतला शीतगुणा मन्दस्मितांशुच्छटा मन्दहासकिरणशोभा मन्दारस्तवकायते कल्पद्रुमपुष्पगुच्छ इवाचरति । तस्याः मुहुः पुनःपुनर्विकसनं प्रफुल्लनं वर्द्धयितुं विस्तारयितुं कामवैरिणः शिवस्य वल्गुर्मनोहरो वीक्षणविभ्रमव्यतिकरो निरीक्षणस्य हर्षस्तस्य व्यतिकरः संबन्धोऽतिबाहुल्यं वा वासन्तमासायते वसन्तस्यायं वासन्तस्स चासौ मासश्चैत्रः स इवाचरतीति तथोक्तः । यथा वसन्ते मधूकादिवृक्षगुल्मलतापुष्पस्तवकाः प्रफुल्लिता भवन्ति । तथा वासन्तानन्दशिवावलोकनेन श्रीकामाक्ष्या मन्दस्मितशोभा वर्द्धत इत्यर्थः ॥ २५ ॥

बिम्बोष्ठद्युतिपुञ्जरञ्जितरुचिस्त्वन्मन्दहासच्छटा
कल्याणं गिरिसार्वभौमतनये कल्लोलयत्वाशु मे ॥

फुल्लन्मल्लिपिनद्धहल्लकमयी मालेव या पेशला
श्रीकाञ्चीश्वरि मारमर्दितुरुरोमध्ये मुहुर्लम्बते ॥ २६ ॥

अन्वयः ॥ हे गिरिसार्वभौमतनये ! हे श्रीकाञ्चीश्वरि या बिम्बोष्ठद्युतिपुञ्जरञ्जितरुचिः फुल्लन्मल्लिपिनद्धहल्लकमयी पेशला मालेव त्वन्मन्दहासच्छटा मारमर्दितुरुरोमध्ये मुहुर्लम्बते सा मे कल्याणमाशु कलयतु ॥ २६ ॥

टीका ॥ हे गिरिसार्वभौमतनये ! गिरीणां चक्रवर्ती हिमाचलस्तस्य कन्ये ! हे काञ्चीपुरीश्वरि ! बिम्बवद्यावोष्ठौ तयोर्या द्युतिर्दीप्तिस्तस्या यः पुञ्जस्तेन रञ्जिता रुचिः कान्तिर्यस्याः सा तथोक्ता । फुल्लन्ती या मल्ली तया पिनद्धाऽऽच्छादिता हल्लकमयी कह्लारात्मिका पेशला सुन्दरी मालेव त्वन्मन्दहासशोभा मारमर्दितुः कामारेः शिवस्य उरसो वक्षसो मध्ये या मुहुः पौनःपुन्येन लम्बते । यत्तदोर्नित्यसंबन्धात् सा मे मम कल्याणं कल्लोलयतु तरङ्गयतु वर्द्धयत्वित्यर्थः ॥ २६ ॥

बिभ्राणा शरदभ्रविभ्रमदशां विद्योतमानाप्यसौ
कामाक्षि स्मितमञ्जरी किरति ते कारुण्यधारारसम् ॥
आश्चर्यं शिशिरीकरोति जगतीमालोक्य चैनामहो
कामं खेलति नीलकण्ठहृदयं कौतूहलान्दोलितम् ॥ २७ ॥

अन्वयः ॥ हे कामाक्षि ! ते तवासौ विद्योतमानापि स्मितमञ्जर्यहो शरदभ्रविभ्रमदशां बिभ्राणा कारुण्यधारारसं किरति जगतीं शिशिरीकरोत्येनां च विलोक्य नीलकण्ठहृदयं कौतूहलान्दोलितं कामं खेलति ॥ २७ ॥

टीका ॥ हे कामाक्षि ! ते तव स्मितरूपा मञ्जरी अभिनवोद्गमपल्लवाङ्कुरो विद्योतमाना प्रकाशमानाप्यहो शरदृतोरभ्रविभ्रमदशां शरन्मेघविलासावस्थां बिभ्राणा । यतः करुणाया इमाः कारुण्यास्ताश्च ता धाराश्च तथोक्तास्तासां रसं भक्तवाञ्छानुरूपं भोगमोक्षपराभक्तिप्रदानात्मकं किरति परितः सिञ्चति । जगतीं पृथ्वीं शिशिरीकरोति भूमिष्ठजीवानां तापशान्तिं विदधाति ईदृग्गुणयुक्तां स्मितमञ्जरीं विलोक्य च पुनरहो नीलकण्ठहृदयं नीलकण्ठः शिवो मयूरश्च तस्य हृदयं मनः कौतूहलेन हर्षेणान्दोलितमितस्ततः प्रचलितं हिन्दोलाकारतां गतं कामं स्वतन्त्रतया खेलति क्रीडतीति अहो आश्चर्यमित्यर्थः । अतिचित्रकरी स्मितमञ्जरी प्रकाशमाना शरद्घनरूपा कारुण्यधारारसं वर्षन्ती च जगति जनान् शिशिरीकरोति तापं शमयति नीलकण्ठं नर्त्तयतीत्यत आश्चर्यमालिनी कथं वर्ण्या मयेति भावः ॥ २७ ॥

प्रेङ्खत्प्रौढकटाक्षकुञ्जकुहरेष्वत्यच्छगुच्छायितं
वक्त्रेन्दुच्छविसिन्धुवीचिनिचये फेनप्रतानायितम् ॥

नैरन्तर्यविजृम्भितस्तनतटे नैचोलपट्टायितं
कल्माषं कवलीकरोतु मम ते कामाक्षि मन्दस्मितम् ॥ २८ ॥

अन्वयः ॥ हे कामाक्षि ! प्रेङ्खत्प्रौढकटाक्षकुञ्जकुहरेष्वत्यच्छगुच्छायितं वक्त्रेन्दुच्छविसिन्धुवीचिनिचये फेनप्रतानायितं नैरन्तर्यविजृम्भितस्तनतटे नैचोलपट्टायितं ते तव मन्दस्मितं मम कल्माषं कवलीकरोतु ॥ २८ ॥

टीका ॥ हे कामाक्षि ! तरुणकटाक्षलतागृहप्रान्तेषु प्रकर्षेणेङ्खत् मन्दं चलत् सत् अत्यच्छगुच्छायितं अतिशयेन उज्ज्वलस्तवक इवाचरतीति तथोक्तम्। यद्वा प्रेङ्खन्तश्च ते प्रौढकटाक्षाश्च तथोक्तास्त एव कुञ्जा लतागृहाणि तेषां कुहरेषु छिद्रेषु अत्यच्छगुच्छायितम् । मुखचन्द्रकान्तिसमुद्रतरङ्गसमूहे फेनानां प्रतानं विस्तारं तदिवाचरतीति फेनप्रतानायितम्। प्रतापायितमिति पाठे प्रतापमैश्वर्यमिवाचरतीति तथोक्तम् । निरन्तरस्यान्तररहितस्य भावो नैरन्तर्यं तेन । यद्वा नैरन्तर्ये श्रीशिवान्तरविहीनसमये रहोलीलायामित्यर्थः । विजृम्भितौ विकसितौ प्रकाशितौ वा स्तनौ तयोस्तटं प्रान्तदेशस्तस्मिन् नैचोलपट्टायितमाच्छादनवसनं कञ्चुकीरूपं तव मन्दस्मितं मम कल्माषं पापं कवलीकरोतु नाशयतु । श्रीमत्या रहोलीलायां सर्वाङ्गसौन्दर्यदर्शनाय वसनान्तरमसहमानेन श्रीपरमेश्वरेण हठादपसार्यमाणे चैले तदानीं नैरन्तर्यरसानन्दसिन्धूत्थाः संविदात्मिका वीचयो मन्दहासरूपाः स्तनोपरिगतायाः पिधानपट्टरूपा भवन्ति ता ममाघं ग्रासीकुर्वन्त्वित्यर्थः ॥ २८ ॥

पीयूषं तव मन्थरस्मितमिति व्यर्थैव सापि प्रथा
कामाक्षि ध्रुवमीदृशं यदि भवेदेतत्कथं वा शिवे ॥
मन्दारस्य कथालवं न सहते मथ्नाति मन्दाकिनी-
मिन्दुं निन्दति कीर्तिते च कलशी पाथोधिमीर्ष्यायते ॥२९॥

अन्वयः ॥ हे कामाक्षि ! हे शिवे ! ते तव मन्थरस्मितं पीयूषमिति प्रथा सापि व्यर्थैव यदीदृशं ध्रुवं भवेत्तदा मन्दारस्य कथालवं न सहते । एतत्कथं वा मन्दाकिनीं मथ्नाति तत्कथमिन्दुं निन्दति एतत्कथं च पुनः कीर्तिते कलशी--पाथोधिमीर्ष्यायते तत्कथम् ॥ २९ ॥

टीका ॥ हे कामाक्षि ! हे शिवे ! ते तव मन्थरमन्दस्मितं पीयूषमिति प्रथा पृथुत्वेन प्रसरः सापि व्यर्थैव मिथ्यैव यदि चेदीदृशं ध्रुवं भवेत्तदा पीयूषस्य शुक्लवर्णत्वान्मन्दारस्यापि शुक्लवर्णत्वात्तयोरेकधर्मत्वान्मैत्रीकरणमुचितम्, तत्कथाश्रवणमुचितम्, तत्र मन्दारस्य कथालवमपि न सहते । एतत्कथं वा । निश्चयेन मन्दाकिनीं मथ्नाति एतत्कथम्, तयोरप्येकधर्मत्वात् । इन्दुं निन्दति तदपि कथम् । चन्द्रस्यामृतमयत्वात् । स्वस्य निन्दायाः स्वेनैव करणस्याभावत्वात् । कलशी पाथोधौ कीर्तिते नाममात्रेण कथिते सत्यपि कलशी पाथोधिं ईर्ष्यायते तयोरप्येकधर्म-

त्वात् एतत्कथमित्यर्थः । अर्थात्तव मन्थरस्मितं अनौपम्यं सतामपि वाणी तद्वर्णने कुण्ठिता जायते । अतो वाचातीतवैभवं तव मन्दस्मितमिति भावः ॥ २९ ॥

विश्वेषां नयनोत्सवं वितनुतां विद्योततां चन्द्रमा
विख्यातो मदनान्तकेन मुकुटीमध्येन संमान्यताम् ॥
आः किं जातमनेन हाससुषमामालोक्य कामाक्षि ते
कालङ्कीमवलम्बते खलु दशां कल्माषहीनोप्यसौ ॥ ३० ॥

अन्वयः ॥ हे कामाक्षि ! मदनान्तकेन मुकुटीमध्येन संमान्यताम् । विख्यातश्चन्द्रमा विद्योततताम् । विश्वेषां नयनोत्सवं वितनुताम् । आः किं जातमनेन ते हाससुषमामालोक्य कल्माषहीनोप्यसौ कालङ्कीं दशां खल्ववलम्बते ॥ ३० ॥

टीका ॥ हे कामाक्षि ! मदनान्तकेन शिवेन मुकुटीमध्येन संमान्यताम् । तेन विख्यातः सन् चन्द्रमा विद्योततां प्रकाशताम् । विश्वेषां जगतां नयनोत्सवं नेत्रानन्दं वितनुतां विस्तारयताम् । आः इति कष्टे । अनेन मुकुटीमध्येन संमान्यतां गतेन ख्यातेन विश्वेषां नयनानन्दप्रदत्वेन च किं जातं न किमपीत्यर्थः । ते तवैनां मन्दहासस्य सुषमां शोभामालोक्य कल्माषहीनोपि कलङ्कहीनोप्येषः चन्द्रः खल्विति सत्ये कालङ्कीं दशां पक्षिपिनामवस्थामवलम्बत आश्रयते । तदा शिवमान्यत्वं जगदानन्दप्रदत्वं च गतं तस्येत्यर्थः ॥ पूर्वं तु शिवललाटस्थितश्चन्द्रो द्वितीयाया द्विकलोऽल्पैश्वर्यः स तु साम्यमेव कथं कुर्यादतः कल्माषहीनः साम्यकरणाभावात्तदनु च महदाश्रयणात् मन्दहाससुषमां स्पर्द्धितुं शनैर्वृद्धिंगतः पूर्णायां पूर्णो जातः कृतसमग्रस्वबलस्तथापि तया तुल्यो नाभूत् तदापयशोदुःखी सन् महतामनादरकरणेच्छुश्चन्द्रःकल्मापतां प्राप्त इति भावः ॥ ३० ॥

चेतश्शीतलयन्तु नः पशुपतेरानन्दजीवातवो
नम्राणां नयनाध्वसीमसु शरच्चन्द्रातपोपक्रमाः ॥
संसाराख्यसरोरुहाकरखलीकारे तुषारोत्कराः
कामाक्षि स्मरकीर्तिबीजनिकरास्त्वन्मन्दहासाङ्कुराः ॥ ३१ ॥

अन्वयः ॥ हे कामाक्षि ! पशुपतेरानन्दजीवातवो नम्राणां नयनाध्वसीमसु शरच्चन्द्रातपोपक्रमाः संसाराख्यसरोरुहाकरखलीकारे तुषारोत्कराः स्मरकीर्त्तिबीजनिकरास्त्वन्मन्दहासाङ्कुरा नश्चेतः शीतलयन्त्वित्यन्वयः ॥ ३१ ॥

टीका ॥ हे कामाक्षि ! पशुपतिः पशूनां पतिः। यद्वा ज्ञानहीनाः पशवस्तेषां पतिः शिवस्तस्यानन्दजीवातवः आनन्दजीविन्य ओषधयो नम्राणां तव पादाब्जयोर्नतानां भक्तानां नयना-

ध्वसीमसु नेत्रमार्गावधिषु शरदृतुचन्द्रस्य चन्द्रिकाया ये उपक्रमाः प्रारम्भा उप समीपे गमनयोग्या अर्थात् दृष्टिशीतलकारिणः प्रकाशप्रदाश्च दृष्टिप्रदा इति यावत् । संसाराख्य सरोरुहाकरखलीकारे संसारनामकं कमलं तस्य य आकरः खनिस्तस्य नाशने तुषारोत्करा हिमराशयः स्मरकीर्तिबीजनिकराः कामदेवस्य यशोबीजानां निवहाः अस्माकं भक्तजनानां चेतः शीतलयन्तु शिशिरीकुर्वन्तु त्रिविधतापविहीनं कुर्वन्त्वित्यर्थः ।। ३१ ।।

कर्मौघाख्यतमःकचाकचिकरान्कामाक्षिसंचिन्तये
त्वन्मन्दस्मितरोचिषां त्रिभुवनक्षेमंकरानङ्कुरान् ।।
ये वक्त्रं शिशिरश्रियो विकसितं चन्द्रातपाम्भोरुह—
द्वेषोद्घोषणचातुरीमिव तिरस्कर्तुं परिष्कुर्वते ।। ३२ ।।

अन्वयः ।। हे कामाक्षि ! ये शिशिरश्रियः चन्द्रातपाम्भोरुहद्वेषोद्घोषणचातुरीं तिरस्कर्तुमिव विकसितं वक्त्रं परिष्कुर्वते तान्कर्मौघाख्यतमःकचाकचिकरान् त्रिभुवन क्षेमंकरान् त्वन्मन्दस्मितरोचिषामङ्कुरान् संचिन्तये ।। ३२ ।।

टीका ।। हे कामाक्षि ! ये चन्द्रातपस्य चन्द्रिकाया अम्भोरुहस्य कमलस्य यो द्वेषः तस्योद्घोषणे प्रकटीकरणे या चातुरी तां तिरस्कर्त्तुमाच्छन्नां कर्त्तुमिव तव विकसितं वक्त्रं परिष्कुर्वते ऽलंकुर्वते तान् कर्मणामोघः समूहः स आख्या नाम यस्य स एव तमोन्धकारोऽज्ञानं तन्नाशे कचाकचिकरान् कचेषु कचेषु गृहीत्वा इदं युद्धं प्रवृत्तं तत्कचाकचि कचाकचिकुर्वंतीति तथोक्तास्तान् अतिहठात् तन्नाशकारिण इत्यर्थः। अत एव त्रिभुवनवासिनां जीवानां क्षेमंकरान् लब्धपरिपालनकरान् कल्याणकरान् शिशिरा श्रीर्येषां ते तथोक्तास्तान् शीतलशोभिनः त्वन्मन्दस्मितस्य रोचिषां कान्तीनामङ्कुरानभिनवीनोत्पन्नान् संचिन्तये सम्यग्ध्यायेऽहमिति शेषः ।। ३२ ।।

कुर्युर्नः कुलशैलराजतनये कूलंकषं मङ्गलं
कुन्दस्पर्द्धनचञ्चवस्तव शिवे मन्दस्मितप्रक्रमाः ।।
ये कामाक्षि समस्तसाक्षिनयनं संतोषयन्त्यान्तरं
कर्पूरप्रकरा इव प्रसृमराः पुंसामसाधारणाः ।। ३३ ।।

अन्वयः ।। हे कामाक्षि ! हे कुलशैलराजतनये ! हे शिवे ! ये कुन्दस्पर्द्धनचञ्चवः कर्पूरप्रकरा इव प्रसृमराः पुंसामसाधारणास्तव मन्दस्मितप्रक्रमाः समस्तसाक्षिनयनमान्तरं संतोषयन्ति ते नोऽस्माकं कूलंकषं मङ्गलं कुर्युरित्यन्वयः ।। ३३ ।।

टीका ।। हे कामाक्षि ! हे कुलशैलराजतनये ! कुलशैलाः महेन्द्राचलादयः " महेन्द्रा

मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः" इति । तेषां राजा हिमाचलस्तस्य तनये कन्ये ! शिवे ! शिवः स्वकीयं पुंरूपमुपास्यत्वेनास्त्यस्याः । यद्वा शिवा कल्याणरूपा । यद्वा शिवशब्दो ब्रह्मवाचको बहुधोपलभ्यते । तेन शिवा ब्रह्मरुपा । यद्वा शिवा परब्रह्ममहिषी तत्संबुद्धौ हे शिवे । तव ये कुन्दपुष्पस्य स्पर्द्धनेन ईर्षाकरणेन वित्ताः कुन्दस्पर्द्धनचञ्चवः प्रसृमराः विसरणशीलाः कर्पूरसमूहा इव पुंसामसाधारणा असामान्या अन्येषामलभ्या इतियावत् । मन्दास्मितप्रक्रमा मधुरहासानां प्रारम्भाः ये समस्तानां जगतां साक्षी परशिवस्तस्यान्तरं नयनमन्तःकरणरूपं स्वकीयात्यलौकिकसौन्दर्यदर्शनेन संतोषयन्ति ते नोऽस्माकं कूलंकषं परिपूर्णमङ्गलं शिवं कुर्युरित्यर्थः ॥ ३३ ॥

कम्रेण स्नपयस्व कर्मकुहनाचौरेण मारागम
व्याख्याशिक्षणदीक्षितेन विदुषामक्षीणलक्ष्मीपुषा ॥
कामाक्षि स्मितकन्दलेन कलुषस्फोटक्रियाचुञ्चुना
कारुण्यामृतवीचिकाविहरणप्राचुर्यधुर्येण माम् ॥ ३४ ॥

अन्वयः ॥ हे कामाक्षि कम्रेण कर्मकुहनाचौरेण मारागमव्याख्याशिक्षणदीक्षितेन विदुषामक्षीणलक्ष्मीपुषा कलुषस्फोटक्रियाचुञ्चुना कारुण्यामृतवीचिकाविहरणप्राचुर्यधुर्येण मां स्नपयस्वेत्यन्वयः ॥ ३४ ॥

टीका ॥ हे कामाक्षि ! कम्रेण मनोहरेण कर्म्मणां कुहना कापट्यं तस्य चौरेण हरणक्रियातत्परेण मारस्य कामस्यागमः आगमनं तन्त्रं वा तस्य व्याख्या विशेषेण आसमन्तात् ख्यायते प्रसिद्धं क्रियते यया सा । अर्थस्फुटीकरणमित्यर्थः । तस्याः शिक्षणे दीक्षितः कामागमाचारप्रवर्त्तक आचार्य इतियावत् तेन विदुषां ज्ञानिनां कवीनां वाऽक्षीणां लक्ष्मीं शोभां पुष्णातीत्यक्षीणलक्ष्मीपुट् तेन । कलुषानां पापानां स्फोटः स्फोटनं खण्डीकरणमिति यावत् । तस्य क्रियया वित्तं तयोक्तंतेन । कारुण्यं च यदमृतं च तथोक्तं तस्य वीचिकासु लहरीषु विहरणं विहारस्तस्य प्राचुर्यं बाहुल्यं तत्र धुर्येणाग्रगण्यनैताद्दशेन स्मितकन्दलेन मन्दहासोद्गमेन मां स्नपयस्व सम्यग्बहुशो मन्दहासच्छटां ममोपरि पातयेत्यर्थः ॥ ३४ ॥

त्वन्मन्दस्मितकन्दलस्य नियतं कामाक्षि शङ्कामहे
बिम्बः कश्चन नूतनः प्रचलितो नैशाकरः शीकरः ॥
किं च क्षीरपयोनिधेः प्रतिनिधिः स्वर्वाहिनीवीचिका
बिब्बोकोपि विडम्ब एव कुहना मल्लीमतल्लीरुचः ॥ ३५ ॥

अन्वयः ॥ हे कामाक्षि ! त्वन्मन्दस्मितकन्दलस्य कश्चन प्रचलितो नूतनः शीकरः नैशाक-

रो विम्बः । किं च क्षीरपयोनिधेः प्रतिनिधिः । किं च स्वर्वाहिनीवीचिकाविब्बोकोपि विडम्ब एव । किं च मल्लीमतल्लीरुचोपि कुहनैवेति नियतं शङ्कामह इत्यन्वयः ॥ ३५ ॥

टीका ॥ हे कामाक्षि त्वन्मन्दस्मितकन्दलस्य मन्दहासनवोद्गमस्य नूतनो नवीनो मनोहरः प्रचलितः उच्चलितः कश्चन कोपि शीकरः शीतलकण एव नैशाकरो विम्बः । यद्वा । नैशाकरो विम्ब एव त्वन्मन्दस्मितकन्दलस्य नूतनः प्रचलितः कश्चन शीकर इति योज्यम् । किं चेति विकल्पे । शीकरः क्षीरपयोनिधेः क्षीरसमुद्रस्य प्रतिनिधिः प्रतिनिधीयते तुल्यरूपतया स्थाप्यते इति यः स तथोक्तः क्षीरसमुद्रस्य स्थानापन्न इत्यर्थः । किं च किं वा शीकरः स्वर्वाहिनीवीचिकाविब्बोकः गङ्गातरङ्गाणां विलासः सोपि तस्य शीकरस्य तस्य विडम्ब एव । किं च शीकरो मल्लीमतल्लीरुचः मल्ल्या यूथिकाया मनोहरा रुचः कान्तयः किमिति प्रश्ने कुहनैव ऐन्द्रजालिककृतकपट एवेति नित्यं शङ्कामहे तर्कयामहे । वयमिति शेषः ॥ ३५ ॥

दुष्कर्मार्कनिसर्गकर्कशमहःसंपर्कतप्तं मिलत्—
पङ्कं शंकरवल्लभे मम मनः काञ्चीपुरालंक्रिये ॥
अम्ब त्वन्मृदुलस्मितामृतरसे मङ्क्त्वा विधूय व्यथा—
मानन्दोदयसौधशृङ्गपदवीमारोढुमाकाङ्क्षति ॥ ३६ ॥

अन्वयः ॥ हे शंकरवल्लभे ! हे अम्ब ! हे काञ्चीपुरालंक्रिये ! दुष्कर्मार्कनिसर्गकर्कशमहःसंपर्कतप्तं मिलत्पङ्कं मम मनः त्वन्मृदुलस्मितामृतरसे मङ्क्त्वा व्यथां विधूयानन्दोदयसौधशृङ्गपदवीमारोढुमाकांक्षतीत्यन्वयः ॥ ३६ ॥

टीका ॥ हे शंकरवल्लभे ! हे अम्ब ! हे काञ्चीपुरालंक्रिये ! दुष्कर्मैवार्कस्तस्य निसर्गकर्कशं महः स्वभावसिद्धक्रूरतेजस्तस्य यः संपर्कः संयोगस्तेन तप्तं मिलत्पङ्कं पापं कर्दमश्च यस्मिंस्तन्मिलत्पङ्कं मम मनस्त्वन्मृदुलस्मितामृतरसे तव कोमलमन्दहासामृतरूपरसे मङ्क्त्वा स्नात्वा व्यथां पीडां विधूय दूरीकृत्य आनन्दस्योदयरूपं सौधस्य हर्म्यस्य शृङ्गं अग्रं तस्य पदवीमारोढुमाकाङ्क्षत्यासमन्तादिच्छतीत्यर्थः ॥ ३६ ॥

कामाक्षि प्रथमानविभ्रमनिधिः कन्दर्पदर्पप्रसू—
र्मुग्धस्ते मृदुहास एव गिरिजे मुष्णातु मे किल्बिषम् ॥
यं द्रष्टुं विहिते करग्रह उमे शंभुस्त्रपामीलितः
स्मेरं कारयति स्म ताण्डवविनोदानन्दिना तण्डुना ॥ ३७ ॥

अन्वयः ॥ हे कामाक्षि ! हे गिरिजे ! हे उमे ! प्रथमानविभ्रमनिधिः कन्दर्पदर्पप्रसूस्ते मुग्धो हासस्त्रपामीलितोऽतो यमेव द्रष्टुं करग्रहे विहिते सति शंभुस्ताण्डवविनोदानन्दिना तण्डुना स्मेरं कारयति स्म स मे किल्बिषं मुष्णात्वित्यन्वयः ॥ ३७ ॥

टीका ॥ हे कामाक्षि! हे गिरिजे! हे उमे! प्रथमानो विस्तीर्यमाणो यो विभ्रमः शृङ्गाररसविलासस्तस्य निधिः कोषः कन्दर्पस्य कामस्य गर्वस्तस्य प्रसूरुत्पादकः मुग्धो मनोहरस्ते तव त्रपया लज्जया मीलितः सङ्कुचितः मृदुहासो मे मम किल्बिषं पापं मुष्णातु चोरयताम्। यमेव मृदुहासमेव द्रष्टुं करग्रहे विहिते परिणयनसमये सति शंभुः शिवस्ताण्डवस्य विनोदेनानन्दोऽस्यास्तीति तथा तेन तण्डुनाम्ना गणेन स्मेरं मन्दहासयुक्तं मुखं कारयति स्म पार्वतीरूपायास्तव हास्यमचीकरत् ॥ त्रपामीलित इति शंभुरित्यस्य वा विशेषणं यथारुचि कार्यम्। तस्यापि श्वशुराग्रे संकुचितत्वसंभवात्। वस्तुतस्तु मन्दहासस्यैव तत् समीचीनमित्यलम् ॥ ३७ ॥

नम्राणां नगराजशेखरसुतेनाकालयानां पुरः
कामाक्षि त्वरया विपत्प्रशमने कारुण्यधाराः किरन् ॥
आगच्छन्तमनुग्रहं प्रकटयन्नानन्दबीजानि ते
नासीरे मृदुहास एव तनुते नाथे सुधाशीतलः ॥ ३८ ॥

अन्वयः ॥ हे नगराजशेखरसुते! हे कामाक्षि! हे नाथे! हे विपत्प्रशमने! ते तव सुधाशीतलो मृदुहासः पुरोऽग्रे नम्राणां नाकालयानां नासीरे आनन्दबीजानि त्वरया तनुते। किं कुर्वन्। कारुण्यधाराः किरन्नागच्छन्तमनुग्रहं प्रकटयन्नित्यन्वयः ॥ ३८ ॥

टीका ॥ हे नगराजशेखरसुते नगानां राजानो नगराजा अष्टौ कुलपर्वतास्तेषां मध्ये श्रेष्ठो हिमगिरिस्तस्य कन्ये! हे कामाक्षि! हे नाथे! हे स्वामिनि! हे विपदां प्रकर्षेण शमने! पुरोऽग्रे नम्राणां नतानां स्वर्गवासिनां देवानां नासीरे सेनामुखे अग्रसरे कार्त्तिकेये वा। तस्य सेनीत्वात्। करुणारसधाराः किरन्वर्षन्नागच्छन्तमनुग्रहं प्रसादं प्रकटयंस्ते तव सुधाशीतलो नामृदुहासः आनन्दरूपबीजानि शीघ्रं तनुते विस्तारयतीत्यर्थः ॥ ३८ ॥

क्षुण्णः केनचिदेव धीरमनसा कुत्रापि नाना जनैः
कर्मग्रन्थिनियन्त्रितैरसुगमं कामाक्षि सामान्यतः ॥
मुग्धैर्द्रष्टुमशक्यमेव मनसा मूढस्य मे चक्षुषे।
मार्गं दर्शयितुं प्रदीप इव ते मन्दस्मितश्रीरियम् ॥ ३९ ॥

अन्वयः ॥ हे कामाक्षि! केनचिदेव धीरमनसा कुत्रापि क्षुण्णं कर्मग्रन्थिनियन्त्रितैर्मुग्धैर्नाना जनैः सामान्यतो मनसापि द्रष्टुमशक्यमेव तमसुगमं मार्गं दर्शयितुं मे मूढस्य चक्षुषः प्रदीप इव ते तवेयं मन्दस्मितश्रीः अस्तीति शेषः ॥ ३९ ॥

टीका ॥ हे कामाक्षि! केनाचिदेव धीरमनसा स्थिरमनसा कुत्रापि कस्मिंश्चित्समयेपि

क्षुण्णंपादाङ्कितं कृतं कर्मग्रन्थिनियन्त्रितैः कर्मरूपाः कर्मणां वा ग्रन्थयस्ताभिर्नियन्त्रिता निवद्धास्तैः मुग्धैर्मूर्खैर्नानाजनैः सामान्यतः साधारणात् मनसापि द्रष्टुमशक्यमेव मम मूढस्य वाग्बुद्धिहीनस्य चक्षुषोऽसुगमं मार्गं दर्शयितुं प्रदीप इव ते तवेयं मन्दस्मितश्रीरित्यर्थोऽस्तीति शेषः । अस्त्विति वा शेषः ॥ ३९ ॥

ज्योत्स्नाकान्तिभिरेव निर्मलतरं नैशाकरं मण्डलं
हंसैरेव सरद्विकाशसमये व्याकोचमम्भोरुहम् ॥
स्वच्छैरेव विकस्वरैरुडुगणैः कामाक्षि बिम्बं दिवः
पुण्यैरेव मृदुस्मितैस्तव मुखं पुष्णाति शोभाभरम् ॥ ४० ॥

अन्वयः ॥ हे कामाक्षि ! शरद्विकाशसमये निर्मलतरं नैशाकरं मण्डलं ज्योत्स्नाकान्तिभिरेव शोभाभरं पुष्णाति । व्याकोचमम्भोरुहं हंसैरेव शोभाभरं पुष्णाति ॥ दिवो बिम्बं स्वच्छैर्विकस्वरैरुडुगणैरेव शोभाभरं पुष्णाति एवं तव मुखं पुण्यैर्मृदुस्मितैः शोभाभरं पुष्णातीत्यन्वयः ॥ ४० ॥

टीका ॥ हे कामाक्षि ! शरदृतुप्रकाशसमयेतिशयेन निर्मलतरं निशाकरस्येदं नैशाकरं चान्द्रमण्डलं चन्द्रिका शोभाभरं यथा पुष्णाति पुष्टं करोति व्याकोचं प्रफुल्लमम्भोरुहं कमलं हंसैरेव शोभाभरं यथा पुष्णाति । दिव आकाशस्य बिम्बं स्वच्छै रजोजलदरहितैर्विकस्वरैः प्रकाशयुक्तैरुडुगणैस्तारकमण्डलैरेव यथा शोभाभरं पुष्णाति । एवं तव मुखं पवित्रैः कोमलहासैः शोभायाः पूर्णतां पुष्णात्यतिशोभनीयमेव मुखं भवतीत्यर्थः ॥ ४० ॥

मानग्रन्थिविधुंतुदेन रभसादास्वाद्यमाने नव
प्रेमाडम्बरपूर्णिमाहिमकरे कामाक्षि ते तत्क्षणम् ॥
आलोक्य स्मितचन्द्रिकां मुहुरिमामुन्मीलनं जग्मुषीं
चेतः शीलयतेचकोरचरितं चन्द्रार्द्धचूडामणेः ॥ ४१ ॥

अन्वयः ॥ हे कामाक्षि ! ते मानग्रन्थिविधुंतुदेन रभसात् । आस्वाद्यमाने नवप्रेमाडम्बरपूर्णिमाहिमकरे सति मुहुरुन्मीलनं जग्मुषीं स्मितचन्द्रिकामालोक्य चंद्रार्द्धचूडामणेश्चेतस्तत्क्षणं चकोरचरितं शीलयते ॥ ४१ ॥

टीका ॥ हे कामाक्षि ! ते तव मानरूपो ग्रन्थिः सैव विधुंतुदति पीडयतीति विधुंतुदो राहुस्तेन रभसाद्वेगेन आस्वाद्यमाने ग्रस्यमाने नवीनस्तरुणो यः प्रेमा तस्य य आडम्बर आटोपः ऐश्वर्यमिति यावत् । स एव पूर्णिमाहिमकरस्तस्मिन् सति मुहुः पुनःपुनरुन्मीलनं प्रफुल्लतां गतवतीं स्मितरूपां चन्द्रिकां मन्दहासशोभामालोक्य चन्द्रस्यार्द्धं चूडामणिर्यस्य तस्य शिव-

स्य चेतश्चित्तं चकोराणां चरितं स्नेहवशाच्चापल्यं तस्मिन्नेव क्षणे शीलयते चकोरशीलवद्भव-तीत्यर्थः ॥ ४१ ॥

कामाक्षि स्मितमञ्जरीं तव भजे यस्यास्त्विषामङ्कुरा–
नापीनस्तनपानलालसतया निःशङ्कमङ्केशयः ॥
ऊर्ध्वं वीक्ष्य विकर्षति प्रसृमरानुद्दामया शुण्डया
सूनुस्ते विसशङ्कयाशु कुहनादन्तावलग्रामणीः ॥ ४२ ॥

अन्वयः ॥ हे कामाक्षि ! तवापीनस्तनपानलालसतया निःशङ्कमङ्केयः दन्तावलग्रामणीस्ते सूनुर्यस्याः स्मितमञ्जर्याः प्रसृमरान् त्विषामङ्कुरानूर्ध्वं वीक्ष्य कुहनाविसशङ्कयोद्दामया शुण्डयाशु विकर्षति तां स्मितमञ्जरीमहं भजे ॥ ४२ ॥

टीका ॥ हे कामाक्षि ! तवासमंतात्पीनौ पुष्टौ स्तनौ तयोर्यत्पानं तस्य लालसतया निःशङ्कं यथा स्यात्तथा अङ्के उत्सङ्गे शेत इति तथा। दन्तावलानां हस्तिनां ग्रामणीः श्रेष्ठो गणेशस्ते तव सूनुरात्मजः यस्याः स्मितमञ्जर्यास्त्विषां कान्तीनामङ्कुरानभिनवोद्गमान्प्रसृमरान्प्रसरणशीलानूर्ध्वं वीक्ष्य कुहनादम्भचर्यया विसशङ्कया कमलतन्तुभ्रान्त्योद्दामयाऽसंकुचितया शुण्डया प्रसारितहस्तेनाशु शीघ्रं विशेषेण कर्षति तां स्मितमञ्जरीं मन्दहासनवपल्लवाङ्कुररूपामहं भजे सेव इत्यर्थः ॥ ४२ ॥

गाढाश्लेषविमर्दसंभ्रमवशादुद्दाममुक्तागुण–
प्रालम्बे कुचकुम्भयोर्विगलिते दक्षद्विषो वक्षसि ॥
या सख्येन पिनह्यति प्रचुरया भासा तदीयां दशां
सा मे खेलतु कामकोटि हृदये स्वच्छा स्मितांशुच्छटा ॥ ४३ ॥

अन्वयः ॥ हे कामकोटि ! दक्षद्विषो वक्षसि गाढाश्लेषविमर्दसंभ्रमवशात्कुचकुम्भयोरुद्दाममुक्तागुणप्रालम्बे विगलिते या सख्येन प्रचुरया भासा तदीयां दशां पिनह्यति सा स्वच्छा स्मितांशुच्छटा मे हृदये खेलतु ॥ ४३ ॥

टीका ॥ हे कामकोटि ! दक्षं द्वेष्टीति तथोक्तस्तस्य श्रीशिवस्य वक्षसि वक्षःस्थले यदालिङ्गनं तेन तस्मिन्वा यो विमर्दो मर्दनं तेन यः संभ्रमो हर्षः तस्यवशात्कुचावेव कुम्भौ तयोः उद्दाम्नामनर्घ्याणां मुक्तानां सम्बन्धिनो ये गुणाः सूत्राणि । यद्वा उद्दामभिरतिवरैर्मुक्ताफलैर्युक्ता ये गुणा सूत्राणिः तेषां यः प्रालम्बः कञ्चुकी हारावली वा तस्मिन्विगलिते दूरीभूते सति तदीयां दशां कुचस्फुटावभासावस्थां या सख्येन मित्रतया त्रुटित इति यावत् । पिनह्यत्याच्छादयति सा मन्दहासकिरणानां शोभा मे मम हृदये मनसि खेलतु क्रीडत्वित्यर्थः ॥ ४३ ॥

मन्दारे तव मन्थरस्मितरुचो मात्सर्यमालोक्यते
कामाक्षि स्मरशासने च सततं रागोदये लक्ष्यते ॥
चान्द्रीषु द्युतिमञ्जरीषु च महान्द्वेषाङ्कुरो दृश्यते
शुद्धानां कथमीदृशी गिरिसुतेऽशुद्धा दशा कथ्यताम् ॥ ४४ ॥

अन्वयः ॥ हे कामाक्षि ! हे गिरिसुते ! तव मन्थरस्मितरुचो मन्दारे मात्सर्यमालोक्यते स्मरशासने रागोदयो लक्ष्यते । च पुनः चान्द्रीषु द्युतिमञ्जरीषु महान्द्वेषाङ्कुरो दृश्यते । अतः शुद्धानां कथमीदृश्यऽशुद्धा दशा कथ्यतां त्वयेति शेषः ॥ ४४ ॥

टीका ॥ हे कामाक्षि ! हे गिरिसुते ! मन्दारे कल्पवृक्षे तव मन्थरस्मितरुचोऽतिमन्दहासकान्तेः मात्सर्यमालोक्यते मत्तुल्यो भक्तमनईप्सिताधिकदाने सौन्दर्ये सौगन्ध्ये च नायमिति रूपं मात्सर्यमालोक्यते दृश्यते । च पुनः स्मरशासने कामाज्ञायां नियतं निश्चितं रागोदयः स्नेहस्योन्नतिर्लक्ष्यते । च पुनः चन्द्रसंबन्धिद्युतिमञ्जरीषु महानत्यधिको द्वेषाङ्कुरो वैरोद्गमो दृश्यते । तासामातितुच्छीकरणात् शुद्धानां निर्मलानां विकाररहितानां च कथमीदृश्यशुद्धा मलिना दशाऽवस्थेति कथ्यतामित्यर्थः त्वयेति शेषः ॥ ४४ ॥

पीयूषं खलु पीयते सुरजनैर्दुग्धाम्बुधिर्मथ्यते
माहेशैश्च जटाकलापनिगडैर्मदाकिनी नह्यते ॥
शीतांशु परिभूयते च तमसा तस्मादियं तादृशी
कामाक्षि स्मितमञ्जरी तव वचो वैदग्ध्यमुल्लङ्घते ॥ ४५ ॥

अन्वयः ॥ हे कामाक्षि सुरजनैः पीयुषं खलु पीयते च पुनर्दुग्धाम्बुधिर्मथ्यते च पुनर्माहेशैर्जटाकलापनिगडैर्मन्दाकिनी नह्यते च पुनः शीतांशुस्तमसा परिभूयते तस्मात्तवेयं स्मितमञ्जरी तादृशी अपि तु नैव तादृश्यतो वचोवैदग्ध्यमुलंङ्घत इत्यन्वयः ॥ ४५ ॥

टीका ॥ हे कामाक्षि ये केऽपि तव स्मितमञ्जर्य्या सार्द्धममृतं तोलयन्ति क्षीरपयोधिं चोपमीयंते गङ्गां शीतांशुं च समतां नयन्ति तेऽतीवमूढाः । कुतः सुरजनैर्देवैः पीयूषममृतं पीयते खलुअतोऽस्य व्ययो भवति देवानामिदं भोग्यं भवति तस्मात्तवेयं स्मितमञ्जरी तादृशी अपि तु नैवेति । कुत इयं तु सुराणाममोग्याऽव्यया च तथा च सुरजनैः पीयूषार्थे क्षीरसमुद्रो मथ्यते अतः समुद्रस्य सारभूतममृतमस्ति तस्मादियं तादृशीनैव अस्याः सारमन्यन्नास्ति स्वयमेव साररूपास्ति पुनः कैरपीयं न मथ्यते । अनया शिवमनस्तु मथ्यत एव । महेशस्येमे माहेशास्तैर्जटायाः कलापास्त एव निगडाबन्धास्तथोक्तास्तैर्मन्दाकिनी मन्दमङ्कतीत्येवंशीला तयोक्तागङ्गा नह्यते रुध्यते इयं कैरपि नावरुद्धा भवति भक्तान् निगडादिबन्धान्मोचयति तत्त्वतितुच्छम् । संसारबन्धान्मुक्ता

भक्तजना अनया भवन्ति स्वयं स्वतन्त्रा निर्बन्धा चेयमतस्तादृशी नैवास्ति। प्रत्युत साक्षान्महेश्वरं स्वकीयमाधुर्यादिगुणैर्निबध्नात्यतः कुतः साम्यं तयाऽस्याः। शीता अंशवः किरणा यस्य स शीतांशुस्तमसा राहुणा पीड्यते। इयं क्वचिदपि कदाचिदपि कैरपि न पीड्यते। किं तु तमोन्तस्थं बहिष्ठं चानया परिभूयते। दुष्टान्दैत्यांश्च राज्यच्युतान्प्राणवियोगिनश्च कुरुते। राहुरेनां परिभवितुं न समर्थः। किं तु देवानां पक्षपातकरणेनेयं राहुं प्रति व्यथयत्यतो हेतोस्तवेयं स्मितमञ्जरी वचसां वैदग्ध्यं चातुर्य्यमुल्लङ्घते अतिक्रम्य वर्त्तत इत्यर्थः। उपमानशून्या वागविषयेयमिति भावः ॥ ४५ ॥

आशङ्के तव मन्दहासलहरीमन्यादृशीं चन्द्रिका—<br>
मेकाम्रेशकुटुम्बिनि प्रतिपदं यस्याः प्रभासंगमे ॥<br>
वक्षोजाम्बुरुहेन ते रहयतः कांचिद्दशां कौड्मली<br>
मास्याम्भोरुहमम्ब किं च शनकैरालम्बते फुल्लताम् ॥ ४६ ॥

अन्वयः। हे एकाम्रेशकुटुम्बिनि! हे अम्ब! तव मन्दहासलहरीमन्यादृशीं चन्द्रिकामाशङ्के अहमिति शेषः। प्रतिपदं यस्याः प्रभासंगमे ते वक्षोजाम्बुरुहे कांचित्कौड्मलीं दशां न रहयतः किं च आस्याम्भोरुहं शनकैः ल्लतामालम्बतफु ॥ ४६ ॥

टीका ॥ हे एकाम्रनाथकुटुम्बिनि! हे अम्ब! तव मन्दहासलहरीं स्मितवीचिमन्यादृशीं नवीनामद्भुतामिति यावत्। ज्योत्स्नामहमाशङ्के। कुतो यतः पदं पदं प्रति प्रतिपदं यस्याः स्मितरूपचन्द्रिकायाः संगमे जाते सति ते तव वक्षोजाम्बुरुहे कुचकमले शनकैः कौड्मलीं कैरवीं कलिकाकारदशां कांचिदद्भुतामनिर्वाच्यामवस्थां न रहयतः न त्यजतः श्यामसरोजं रात्रौ चन्द्रिकया प्रफुल्लितं जायते। एते कोरकाऽकार एव स्थिते भवतः। किंचेति वाक्यारम्भे। आस्याम्भोरुहं दिवसविकासिवदनरक्तपङ्कजं शनकैः शनैः फुल्लतां विकासतामालम्बते आश्रयत इत्यर्थः ॥ ४६ ॥

आस्तीर्णाधरकान्तिपल्लवचये पातं मुहुर्जग्मुषी<br>
कामद्रोहिणि मांसलस्मरशरज्वालावलीं व्यञ्जती ॥<br>
निन्दन्ती घनसारहारवलयज्योत्स्नामृणालानि ते<br>
कामाक्षि स्मितचातुरी विरहिणिरीतिं जगाहेतराम् ॥ ४७ ॥

अन्वयः ॥ हे कामाक्षि! आस्तीर्णाधरकान्तिपल्लवचये मुहुः पातं जग्मुषी कामद्रोहिणि मांसलस्मरशरज्वालावलीं व्यञ्जती घनसारहारवलयज्योत्स्नामृणालानि निन्दन्ती सती ते तव स्मितचातुरी विरहिणीरीतिं जगाहेतरामित्यन्वयः ॥ ४७ ॥

टीका ॥ हे कामाक्षि! ते तव स्मितचातुरी मन्दहसनचातुर्यम्। आस्तीर्णश्वासावधरकान्तिपल्लवचयस्तथोक्तस्तस्मिन् मुहुर्वारंवारं पातं जग्मुषी पतनं प्राप्तवती। विरहिण्यपि विरहाग्निना तप्यमानाऽतिदुःखितासती अशक्ततया हस्तपादाद्यङ्गं प्रसार्यैव पुष्पशय्यां कामाग्निवर्द्धिनीं त्यक्त्वा स्वतापशान्त्यै शीतलकोमलपल्लवचये मुहुः पतिता भवति। कामे द्रोहोऽस्यास्तीति तथोक्तस्तस्मिन् शिवे। मांसलः प्रबलो यः स्मरस्तस्य ये शरा बाणास्तेषां या ज्वालास्तासां आवली पङ्क्तिः। यद्वा मांसला प्रबला चासौ स्मरशरज्वालावली च तथोक्ता तां व्यञ्जती प्रकाशयन्ती। विरहिण्यपि तादृशी भवति। जोत्स्ना च घनसारश्च हारश्च वलयं च मृणालं च तथोक्तानि तानि निन्दती अर्थात् स्वप्रभया तानि मन्दानि कुर्वती सती। विरहिण्या दुःखदत्वात् सापि तानि निन्दति। विगतो रहःसंयोगस्तथोक्तः सोऽस्या अस्तीति तथोक्ता तस्याः विरहिण्याः प्रोषितपतिकाया रीतिं परिपाटीमतिशयेन जगाहे जग्राहेत्यर्थः ॥ ४७ ॥

सूर्यालोकविधौ विकाशमधिकं यान्ती हरन्ती तमः
संदोहं नमतां निजस्मरणतो दोषाकरद्वेषिणी ॥
निर्यान्ती वदनारविन्दकुहरान्निर्धूतजाड्या नृणां
श्रीकामाक्षि तव स्मितद्युतिमयी चित्रीयते चन्द्रिका ॥ ४८ ॥

अन्वयः॥ हे श्रीकामाक्षि! सूर्यालोकविधावधिकं विकाशं यान्ती सती वदनारविन्दकुहरात् निर्यान्ती सती नमतां नृणां निजस्मरणतस्तमः संदोहं हरन्ती सती दोषाकरद्वेषिणी निर्धूतजाड्या तव स्मितद्युतिमयी चन्द्रिका चित्रीयत इत्यन्वयः ॥ ४८ ॥

टीका ॥ हे श्रीकामाक्षि! सूर्यस्यालोकविधौ सूर्यदर्शनसमये प्रातःकाले रात्रौ रमणरमणानन्दभरेण कारणेन अधिकं विकाशं यान्ती सती। यद्वा दर्शनार्थमागतस्य सूर्यस्य य आलोको दर्शनं तस्य विधौ विधाने स्वभक्तसूर्य्यदर्शनजातहर्षवशाद्धेतोरधिकं विकाशं प्रकाशं यान्ती। यद्वा सूर्यस्यालोकविधौ प्रकाशे दिवसेपि अधिकं शोभमाना। वदनारविन्दकुहरान्निर्यान्ती निःसरन्ती सती नमतां भक्तजनानां नृणां निजस्य मन्दहासस्य स्मरणं चिन्तनं तस्मात्तमःसंदोहमन्धकारस्तोमं हरन्ती नाशयन्ती सती दोषाकरद्वेषिणी दोषां रात्रिं करोतीति दोषाकरः। यद्वा दोषाणामाकरः खनिस्तस्मिन् द्वेषो ऽस्या अस्तीति तथोक्ता। निर्धूतं जाड्यं यया सा तथोक्ता। तव मन्दहासकान्तिमयी चन्द्रिका लौकिकचन्द्रिकातो विरुद्धगुणानाचरन्ती तस्माच्चित्रीयते। इयमलौकिकचन्द्रिका आश्चर्यं करोतीत्यर्थः ॥ ४८ ॥

कुण्ठीकुर्युरमी कुबोधघटनामस्मन्मनोमाथिनीं
श्रीकामाक्षि शिवंकरास्तव शिवे श्रीमन्दहासाङ्कुराः ॥

ये तन्वन्ति निरन्तरं तरुणिमस्तम्बेरमग्रामणी-
कुम्भद्वन्द्वविडम्बिनि स्तनतटे मुक्ताकथाडम्बरम् ॥ ४९ ॥

अन्वयः ॥ हे शिवे! हे श्रीकामाक्षि! ते तव ये शिवंकरा मन्दहासांङ्कुरा निरन्तरं तरुणिमस्तम्बेरमग्रामणीकुम्भद्वन्द्वविडम्बिनि स्तनतटे मुक्ताकथाडम्बरं तन्वन्ति तेऽस्मन्मनोमाथिनीं कुबोधघटनां कुण्ठीकुर्युरित्यन्वयः ॥ ४९ ॥

टीका ॥ हे शिवे ! हे श्रीकामाक्षि ! ते तव ये शिवंकराः शिवं कल्याणं कुर्वन्तीति शिवंकराः शिवरूपंकराश्च मन्दहासाङ्कुरा निरन्तरं तरुणिमा सन्ततं तारुण्यमेव स्तम्बेरमग्रामणीर्हस्तिश्रेष्ठस्तस्य कुम्भयोर्यद्द्वन्द्वं युगलं तस्य विडम्बोऽनुकरणमस्यास्तीति तथोक्तं तस्मिन् स्तनतटे कुचप्रान्ते मुक्तानां कथाया आडम्बरमैश्वर्यं विस्तारं वा तन्वन्ति तेऽस्मन्मनोमाथिनीं मनःपीडयित्रीं कुबोधघटनां कुत्सितो यो बोधो विषयज्ञानं अज्ञानमित्यर्थः । तेन तस्य वा या घटना रचना मनोराज्यं सर्वकर्त्रीं त्वामजानन्तोऽस्माभिरेवं कृतमेवं कुर्मः एतत्करिष्यामः इत्यादिरूपा । यद्वा त्वद्भक्तिं सर्वाभिलषितपरिपूर्णां हित्वा वृथैव स्वबुद्धिबलविचाररूपां । यद्वा ईश्वरो नास्ति श्रीमत्याः शिवेन साकं भेदोऽस्ति । यद्वा परदेवताऽभिन्नरूपं जगन्नास्तीत्यादिरूपाम् । अज्ञानात्मिकां घटनां कुण्ठीकुर्युः स्तम्भितां कुर्वन्त्वित्यर्थः ॥ ४९ ॥

प्रेङ्खन्तः शरदम्बुदा इव शनैः प्रेमानिलैः प्रेरिता
मज्जन्तो मदनारिकण्ठसुषमासिन्धौ मुहुर्मन्थरम् ॥
श्रीकामाक्षि तव स्मितांशुनिकराः श्यामायमानश्रियो
नीलाम्भोधरनैपुणीं तत इतो निर्निद्रयन्त्यञ्जसा ॥ ५० ॥

अन्वयः ॥ हे कामाक्षि ! शनैः प्रेमानिलैः प्रेरिताः प्रेङ्खन्तः शरदम्बुदा इव मुहुर्मन्थरं मदनारिकण्ठसुषमासिन्धौ मज्जन्तः सन्तः श्यामायमानश्रियस्तव स्मितांशुनिकरा अञ्जसा इतस्ततो नीलाम्भोधरनैपुणीं निर्निद्रयन्तीत्यन्वयः ॥ ५० ॥

टीका ॥ हे कामाक्षि ! प्रेमरूपा अनिलाः प्रेमानिलास्तैः प्रेरिता इतस्ततः प्रकर्षेण शनैरिङ्खन्तः किंचिच्चलन्तस्तव स्मितांशुनिकरा मन्दहाससमूहाः श्वेतवर्णत्वाच्छरदृतोर्जलदा इव कामशत्रोः शिवस्य कण्ठस्य शोभायाः समुद्रे मन्थरं यथा स्यात्तथामुहुर्वारं वारं स्नाताः सन्तः कृष्णायमाना शोभा येषां ते तथोक्ताः । अञ्जसा शीघ्रं यथार्थं वा नीलाम्भोधरनैपुणीं श्यामजलदचातुर्यमितस्ततो निर्निद्रियन्ति उन्निद्रयन्ति प्रकाशयन्तीत्यर्थः ॥ ५० ॥

व्यापारं चतुराननैकविहृतौ व्याकुर्वती कुर्वती
रुद्राक्षग्रहणं करेण सततं वागूर्मिकल्लोलिता ॥

उत्फुल्लं धवलारविन्दमधरीकृत्य स्फुरन्ती सदा
श्रीकामाक्षि सरस्वती विजयते त्वन्मन्दहासप्रभा ॥ ५१ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! चतुराननैकविहृतौ व्यापारं कुर्वती करेण सततं रुद्राक्षग्रहणं कुर्वती वागूर्मिकल्लोलिता उत्फुल्लं धवलारविन्दमधरीकृत्य स्फुरन्ती सती त्वन्मन्दहासप्रभा सरस्वती सदा विजयते ॥ ५१ ॥

टीका ॥ हे श्री कामाक्षि ! चतुरं श्रेष्ठं च यदाननं च चतुराननं, चतुराणां पण्डितानां आननानि मुखानि च तेषु वा । तेषामेकविहृतौ एकविहारे यो व्यापारः क्रियासंगतिस्तम् । पक्षे ब्रह्मण एका विहृतिर्विहारस्तस्य व्यापारश्चतुर्वेदमयजगद्रचनाप्रकारस्तम् । यद्वा शृङ्गाररसक्रीडां तां व्याकुर्वती स्फुटीकुर्वती उत्पादयन्तीत्यर्थः । वाचां वाणीनामूर्मयस्तरङ्गाः कल्लोलितास्तरङ्गिता यया, पक्षेप्ययमेवार्थः ॥ सततं संसाराख्यं रुत् रोगं दुःखं द्रावयतीति रुद्रः । अस्मिन्नर्थे दकारस्य द्वित्वं ज्ञेयम् रोदयत्यभक्तानिति वा रुद्रस्तस्याक्षग्रहणं दृष्टिहरणं करेण किरणेनातिदर्शनीयतमतया कुर्वती । शिवस्य तस्यां प्रतिक्षणं दृष्टिदानत्वेनेयमुक्तिः । पक्षे रुद्राक्षा रुद्राक्षमणयस्तेषां ग्रहणं करेण हस्तेन कुर्वन्ती उत्फुल्लंध वलारविन्दं शुभ्रकमलमधरीकृत्य स्वस्यातिशुभ्रतया नीचैः कृत्वा । पक्षे आसनीकृत्य स्फुरन्ती सती त्वत् तव मन्दहासप्रभा सरस्वती सदा विजयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥ ९१ ॥

वैशद्येन च विश्वतापहरणक्रीडापटीयस्तया
पाण्डित्येन पचेलिमेन जगतां नेत्रोत्सवोत्पादने ॥
कामाक्षि स्मितकन्दलैस्तव तुलामारोढुमुद्योगिनी
ज्योत्स्नाऽसौ जलराशिपोषणतया दुष्यां प्रपन्ना दशाम् ॥ ५२ ॥

अन्वयः॥ हे कामाक्षि ! वैशद्येन च विश्वतापहरणक्रीडापटीयस्तया जगतां नेत्रोत्सवोत्पादने पचेलिमेन पाण्डित्येन च तव स्मितकन्दलैः सहासौ ज्योत्स्ना तुलामारोढुमुद्योगिनी जलराशिपोषणतया दुष्यां दशां प्रपन्ना इत्यन्वयः । अस्तीतिशेषः ॥ ५२ ॥

टीका ॥ विशदस्य भावो वैशद्यमौज्ज्वल्यं तेन च पुनर्विश्वतापहरणे जगत्तापनाशने या क्रीडा खेलस्तस्याः पटीयसो भावः पटीयस्ता प्रावीण्यं तया च पुनर्जगतां नेत्राणामुत्सवोत्पादने हर्षप्रकटने पाण्डित्येन चातुर्येण पचेलिमेन परिपक्केन तव स्मितस्य कन्दलैरुद्गमैः सह तुलामारोढुमुद्योगिन्यसौ ज्योत्स्ना चन्द्रिका जलराशिपोषणतया जलराशिः समुद्रस्तस्य पोषणत्वेन यद्वा चन्द्रिका । श्रीभगवत्या मन्दस्मितस्य सौन्दर्यं स्वतोत्यधिकं दृष्ट्वा नेत्रोत्सृष्ट जलसमूहस्य यत्पोषणं भरणं अतिरोदनमित्यर्थः । तस्य भावस्तत्ता तया

यद्वा जलराशिपोषणतेत्यत्र डलयोरैक्यात् जडराशिर्मूर्खसमूहस्तस्य पोषणतया क्षीणावस्थां प्रपन्ना। मूर्खाणां पोषणेनानिष्टापत्तेः। " पण्डितोपि वरं शत्रुर्न मूर्खो हितकारकः " इत्याप्तवाक्यात्। यद्वा जायत इति जः लीयत इति लः जश्च लश्च जले तयोर्जन्ममरणयो राशिः समूहस्तस्य यत्पोषणता पुनःपुनर्ग्रहणमस्मिञ्जन्मनि यदाहं तुल्या मन्दस्मितकन्दलैः न जाता तथाप्यन्यस्मिञ्जन्मनि यैः कैरपि तपोव्रतादिसाधनैस्तुल्याहं भविष्यामीति मनसि कृत्वा नित्यं सँल्लीयोत्पद्यते, परंतु समाना न जाताऽतश्च दुष्यां दशां निन्दनीयावस्थां प्राप्तेत्यर्थः॥ ५२॥

कर्पूरद्युतितस्करेण महसा कल्माषयत्याननं
श्रीकाञ्चीपुरनायिके पतिरिव श्रीमन्दहासोपि ते॥
आलिङ्गत्यतिपीवरां स्तनतटीं बिम्बाधरं चुम्बति
प्रौढं रागभरं व्यनक्ति मनसो धैर्यं धुनीतेतराम्॥ ५३॥

अन्वयः॥ हे श्रीकाञ्चीपुरनायिके! ते पतिरिव श्रीमन्दहासोपि कर्पूरद्युतितस्करेण महसाऽऽननं कल्माषयति अतिपीवरां स्तनतटीमालिङ्गति। विम्बाधरं चुम्बति। प्रौढं रागभरं व्यनक्ति। मनसो धैर्यं धुनीतेतरामित्यन्वयः॥ ५३॥

टीका॥ हे श्रीकाञ्चीपुरनायिके! ते तव पतिः श्रीशिव इव शोभायुक्तो मन्दहासोपि अतिश्वेतत्वात्कर्पूरस्य या द्युतिस्तस्याश्चोरस्तेन महसाऽननं कल्माषयति कलुषं चित्रितं वा करोति। अतिपीनां स्तनतटीं कुचमध्यभागमाश्लिष्यति विम्बफलमिवाधरस्तं चुम्बति पिबति। प्रौढं प्रवलं रागभरंस्नेहपूर्णतां प्रकाशयते चित्तस्य धीरतामातिशयेन प्रकम्पयतीत्यर्थः॥ ५३॥

लावण्याम्बुजिनीमृणालवलयैः शृङ्गारगर्जद्द्विप—
ग्रामण्यश्रुतिचामरैस्तरुणिमस्वाराज्यबीजाङ्कुरैः॥
आनन्दामृतसिन्धुवीचिपृषतैरास्याब्जहंसैस्तव
श्रीकामाक्षि मथानमन्दहसितैर्मत्कं मनः कल्मषम्॥ ५४॥

अन्वयः॥ हे श्रीकामाक्षि! लावण्याम्बुजिनी मृणालवलयैः शृङ्गारगर्जद्द्विपग्रामण्यश्रुतिचामरैस्तरुणिमस्वाराज्यबीजाङ्कुरैरानन्दामृतसिन्धुवीचिपृषतैरास्याब्जहंसैस्तव मन्दहसितैर्मत्कं मनः कल्मषं मथान त्वमिति शेषः॥ ५४॥

टीका॥ हे श्री कामाक्षि! लावण्यं सौन्दर्यमेवाम्बुजिनी तस्या मृणालानि कमलिनीमध्यगत शुक्लतन्तवः तेषां वलयैः। लावण्यस्य शोभावर्द्धकत्वात् कङ्कणैः। शृङ्गाररसरूपो गर्जन् यो हस्तिश्रेष्ठस्तस्य श्रुत्योः कर्णयोश्चामरैस्तरुणिम्नः स्वाराज्यम्। यद्वा तरुणिमरूपं स्वाराज्यं चक्रवर्त्तित्वं तस्य बीजानि कारणानि तेषामङ्कुरैर्नवोत्पन्नैरानन्दरूपं यद-

मृतं तस्य यः सिन्धुः समुद्रस्तस्य या वीचयस्तरङ्गास्तासां एषतैः कणैरास्यमेवाब्जं कमलं तस्य हंसैः शोभाकारकैर्मत्कं मामकं मनसः कल्मषं पापं मथान नाशयेत्यर्थः । त्व-मिति शेषः ॥ ५४ ॥

उत्तुङ्गस्तनमण्डलोपरि चलन्माणिक्यहारच्छटा
चञ्चच्छोणिमपुञ्जमध्यसरणिं मातः परिष्कुर्वती ॥
या वैदग्ध्यमुपैति शंकरजटाकान्तारवाटी पत-
त्स्वर्वापीपयसः स्मितद्युतिरसौ कामाक्षि ते मञ्जुला ॥ ५५ ॥

अन्वयः ॥ हे मातः ! हे कामाक्षि ! उत्तुङ्गस्तनमण्डलोपरि चलन्माणिक्यहारच्छटाचञ्च-च्छोणिमपुञ्जमध्यसरणिं परिष्कुर्वती या मञ्जुलाऽसौ ते स्मितद्युतिः शङ्करजटाकान्तारवाटी पतत्स्वर्वापीपयसो वैदग्ध्यमुपैति ॥ ५५ ॥

टीका ॥ हे मातः ! हे कामाक्षि ! उत्तुङ्गौ यौ स्तनौ तयोर्यन्मण्डलं तस्य उपरि चलन्तो ये माणिक्यानां हारास्तेषां या छटा तत्संबन्धीयश्चञ्चच्छोणिमा विकसद्रक्तिमा तस्य यो मध्यभागस्तस्य सरणिं मार्गं परिष्कुर्वत्यलंकुर्वती मञ्जुला अतिसुन्दरी याऽसौ ते तव स्मितद्यु-तिर्मन्दहासकान्तिः शंकरस्य शिवस्य जटा सैव कान्तारं वनं तद्रूपा वाट्यारामस्तस्यां पतत् स्खलद्गङ्गाया नीरं तस्य वैदग्ध्यं चातुर्यमुपैति प्राप्नोतीत्यर्थः ॥ ५५ ॥

त्वन्नामैकजुषा जनेन सुलभं संसूचयन्ती शनै-
रुत्तुङ्गस्य चिरादनुग्रहतरोरुत्पत्स्यमानं फलम् ॥
प्राथम्येन विकस्वरा कुसुमवत्प्रागल्भ्यमभ्येयुषी
कामाक्षि स्मितचातुरी तव मम क्षेमंकरी कल्पताम् ॥ ५६ ॥

अन्वयः॥ हे कामाक्षि ! प्राथम्येन कुसुमवद्विकस्वरा प्रागल्भ्यमभ्येयुषी सती त्वन्नामैकजुषा जनेनोत्तुङ्गस्याऽनुग्रहतरोरुत्पत्स्यमानं फलं सुलभं शनैः संसूचयन्ती सती तव स्मितद्युतिर्मम क्षेमंकरी कल्पतामित्यन्वयः ॥ ५६ ॥

टीका ॥ हे कामाक्षि ! प्रथमस्य भावः प्राथम्यं तेन कुसुमवत्पुष्पवद्विकासमाना सती प्रागल्भ्यं प्रौढत्वं प्रफुल्लतामभित एयुषी प्राप्तवती सती चिरात्तव नामैकं जुषते सेवत इति तथोक्तस्तेन सेवकेन जनेन उत्तुङ्गस्यात्युच्चस्यानुग्रहरूपवृक्षस्योत्पत्स्यमानं फलं भोगमोक्षात्मकं भक्तेप्सितं सुलभं शनैः संसूचयन्ती प्रकाशयन्ती सती तव मन्दहासचातुरी मम क्षेमंकरी कुशलकरी कल्पतां भवत्वित्यर्थः ॥ ५६ ॥

धानुष्काग्रसरस्य लोलकुटिलभ्रूलेखया बिभ्रतो
लीलालोकशिलीमुखं नववयःसाम्राज्यलक्ष्मीपुषः ।
जेतुं मन्मथमर्दिनं जननि ते मन्दस्मितप्रक्रमो
वल्गुर्विभ्रमभूभृतो वितनुते सेनापतिप्रक्रियाम् ॥ ५७ ॥

अन्वयः ॥ हे जननि ! लोलकुटिलभ्रूलेखया लीलालोकशिलीमुखं बिभ्रतो धानुष्काग्रसरस्य नववयःसाम्राज्यलक्ष्मीपुषो विभ्रमभूभृतस्ते वल्गुर्मन्दस्मितप्रक्रमो मन्मथमर्दिनं जेतुं सेनापतिप्रक्रियां वितनुत इत्यन्वयः ॥ ५७ ॥

टीका ॥ हे जननि ! कुटिला वक्रा चासौ भ्रूलेखा च तथोक्ता लोला चपला चासौ कुटिला भ्रूलेखा तादृशी । तया धनुस्थानापन्नया लीलया युक्तो य आलोको विलोकनं कटाक्ष इत्यर्थः । स एव शिलीमुखः शरस्तं बिभ्रतो विदधतो । धनूंषि एषां विद्यन्त इति धानुष्कास्तेषां योग्रे सरति विचरतीत्यग्रसरस्तस्य । नूतनं यद्वयस्तारुण्यावस्था तदेव साम्राज्यं आसमुद्रान्तराज्यं सकलशरीरारूढयौवनत्वं तस्य या लक्ष्मीः संपच्छोभा वा तां पुष्णातीति नववयःसाम्राज्यलक्ष्मीपुट् तस्य विभ्रमः शृङ्गारचेष्टा । यद्वा विभ्रमो हावस्तद्रूपो यो भूभृद्राजा तस्य वल्गुर्मनोहरस्ते तव मन्दहासस्य प्रक्रमः प्रारम्भः । यद्वा मन्दहासरूपः प्रक्रमो गमनं मन्दहासप्रकाशनं मारमर्दिनं कामशत्रुं शिवं जेतुं सेनापतेः चमूपालकस्य प्रकर्षेण क्रियां कर्म परिपाटीमिति यावत् । तनुते विस्तारयतीत्यर्थः ॥ ५७ ॥

यन्नाकम्पत कालकूटकवलीकारे चुचुम्बे न य–
द्ग्लान्या चक्षुषि रूषितानलशिखे रुद्रस्य तत्तादृशम् ।
चेतो यत्प्रसभं स्मरज्वरशिखिज्वालेन लेलिह्यते
तत्कामाक्षि तव स्मितांशुकणिकाहेलाभवं प्राभवम् ॥ ५८ ॥

अन्वयः ॥ हे कामाक्षि ! यद्रुद्रस्य चेतः कालकूटकवलीकारे नाकम्पत रूषितानलशिखे चक्षुषि यच्चेतो ग्लान्या कर्त्र्या न चुचुम्बे तत्तादृशं चेतः प्रसभं स्मरज्वरशिखिज्वालेन लेलिह्यते इतियत्तत्तव स्मितांशुकणिकाहेलाभवं प्राभवमित्यन्वयः । अस्तीति शेषः ॥ ५८ ॥

टीका ॥ हे कामाक्षि ! यद्रुद्रस्य चेतश्चित्तं कालकूटं विषं तस्य कवलीकारे ग्रासीकरणे नाऽकम्पत मृत्युभयान्न व्यथितमभूत् रूपिताः प्रज्वलिता अग्नेः शिखा यस्मिंस्तस्मिंश्चक्षुषि तृतीयनेत्रे अग्निप्रज्वलिते सति ग्लान्या कर्त्र्या यच्चेतो न चुचुम्बे । ग्लानिश्चेतःस्पर्शमपि नाकरोत् । श्रीशिवस्तेन मनसि खेदं किंचिदपि नागमदित्यर्थः । तत्तस्मात् तादृशं प्रसिद्धं पूर्ववर्णितं दृढतरमपि रुद्रस्य चित्तं स्मरस्य यो ज्वरस्तापः स एव शिखी अग्निस्तस्य ज्वालो

ज्वाला तेन प्रसभं बलाल्लेलिह्यते अतिशयेन ग्रस्यत इति। तत्कारणं तु तव स्मितस्य मन्दहासस्य या अंशुकणिका मन्दहासकणः तस्य हेला क्ष्वेलिस्तस्याः सकाशात् भवतीति भवं प्राभवमैश्वर्यं मन्दहासलेशमात्रस्य विनोदमहिमाऽस्तीत्यहं जान इत्यर्थः ॥ ५८ ॥

संभिन्नेव सुपर्वलोकतटिनी वीचीचयैर्यामुनैः
संमिश्रेव शशाङ्कदीप्तिलहरी नीलैर्महानीरदैः ॥
कामाक्षि स्फुरिता तव स्मितरुचिः कालाञ्जनस्पर्द्धिना
कालिम्ना कचरोचिषां व्यतिकरे कांचिद्दशामश्नुते ॥ ५९ ॥

अन्वयः ॥ हे कामाक्षि ! यामुनैर्वीचीचयैः संभिन्ना सुपर्वलोकतटिनीव नीलैर्महानीरदैः संमिश्रा शशाङ्कदीप्तिलहरीव कचरोचिषां व्यतिकरे कालाञ्जनस्पर्द्धिना कालिम्ना स्फुरिता तव स्मितरुचिः कांचिद्दशामश्नुत इत्यन्वयः ॥ ५९ ॥

टीका ॥ हे कामाक्षि ! यमुनाया इमे यामुनास्तैः यामुनैर्वीचीचयैस्तरङ्गसमूहैः संभिन्ना मिलिता सुपर्वलोकतटिनी देवनदीव नीलैर्महानीरदैरतिश्याममेघैः संमिश्रा मिश्रीभूता शशाङ्कदीप्तिलहरी चन्द्रकान्तितरङ्ग इव केशकान्तीनां व्यतिकरे संबन्धे कालाञ्जनस्पर्द्धास्या अस्तीति तथोक्तस्तेन कालिम्ना श्यामतया स्फुरिता प्रकाशिता सती तव स्मितस्य रुचिः द्युतिः कांचिद्दशामलौकिकीमवस्थामश्नुते प्राप्नोतीत्यर्थः ॥ ५९ ॥

जानीमो जगदीश्वरि प्रणमतां त्वन्मन्दहासप्रभा
श्रीकामाक्षि कुमुद्वतीमभिनवामेषा यतः सर्वदा ॥
आस्येन्दोरवलोकने पशुपतेरभ्येति संफुल्लतां
तन्द्रालुस्तदभाव एव तनुते तद्वैपरीत्यक्रमम् ॥ ६० ॥

अन्वयः ॥ हे जगदीश्वरि ! हे श्रीकामाक्षि ! त्वच्चरणयोः प्रणमतां भक्तानां त्वन्मन्दहासप्रभामभिनवां कुमुद्वतीं जानीमो वयमिति शेषः। यत एषा पशुपतेरास्येन्दोरवलोकने संफुल्लतां सर्वदाभ्येति तदभावे तन्द्रालुरेव सती तद्वैपरीत्यक्रमं तनुत इत्यन्वयः ॥ ६० ॥

टीका ॥ हे जगदीश्वरि ! हे श्रीकामाक्षि ! त्वच्चरणयोः प्रणमतां भक्तानां त्वन्मन्दहासप्रभामभितो नवां नवीनां अलौकिकीमित्यर्थः । कुमुद्वतीं रात्रिविकाशिशुक्लकमलिनीं वयं जानीमः । यत एषा त्वन्मन्दहासप्रभारूपा नवीना कुमुद्वती पशुपतेः श्रीशंभोरास्यमेवेन्दुस्तस्यावलोकने निरीक्षणे जाते सति संफुल्लतां सर्वदा सम्यक् प्रफुल्लतामभ्येति सर्वतः प्राप्नोति तदभावे शिववदनचन्द्रदर्शनाभावे तन्द्रालुः आलस्यवती सती तद्वैपरीत्यक्रमं संफुल्लनविरुद्धक्रममर्थात्संकुचितभावमेव तनुते विस्तारयतीत्यर्थः ॥ ६० ॥

यान्ती लोहिितिमानमभ्रतटिनी धातुच्छटाकर्दमै—
र्भान्ती बालगभस्तिमालिकिरणैर्मेघावली शारदी ॥
बिम्बोष्ठद्युतिपुञ्जचुम्बनकलाशोणायमानेन ते
कामाक्षि स्मितरोचिषा समदशामारोढुमाकाङ्क्षति ॥ ६१ ॥

अन्वयः ॥ हे कामाक्षि ! धातुच्छटाकर्दमैर्लोहितिमानं यान्ती सती अभ्रतटिनी बालगभस्तिमालिकिरणैर्भान्ती सती शारदी मेघावली बिम्बोष्ठद्युतिपुञ्जचुम्बनकलाशोणायमानेन ते तव स्मितरोचिषा समदशामारोढुमाकाङ्क्षतीत्यन्वयः ॥ ६१ ॥

टीका ॥ हे कामाक्षि ! धातूनां गैरिकादीनां छटा शोभा तया युक्ता ये कर्दमास्तैर्लोहितिमानं यान्ती सती अभ्रतटिनी आकाशनदी गङ्गा । अथ च बालगभस्तिमालिकिरणै रुद्यत्सूर्य्यरश्मिभिर्भान्ती प्रकाशमाना सती शरदृतोः संबन्धिनी मेघानां पंक्तिः ते तव बिम्बवद्यावोष्ठौ तयोर्या द्युतिर्दीप्तिस्तस्या यः पुञ्जस्तस्य या चुम्बनकला तया अत्यन्तसंस्पर्शनतयेत्यर्थः । शोणायमानेन रक्तायमानेन स्मितरोचिषा समदशामारोढुं प्राप्तुम्, आकाङ्क्षति सामिच्छत्यतस्तयोर्बुद्धिवैपरीत्यमेवाहं जानामि स्मितसाम्याभावादिति भावः ॥ ६१ ॥

श्रीकामाक्षि मुखेन्दुभूषणमिदं मन्दस्मितं तावकं
नेत्रानन्दकरं तथा हिमकरो गच्छेद्यथातिग्मताम् ॥
शीतं देवि तथा यथा हिमजलं संतापमुद्रास्पदं
श्वेतं किं च तथा यथा मलिनतां धत्ते च मुक्तामणिः ॥ ६२ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! हे देवि ! तावकं मुखेन्दुभूषणमिदं मन्दस्मितं तथा नेत्रानन्दकरं यथा हिमकरस्तिग्मतां गच्छेत्तावकं मन्दस्मितं तथा शीतं यथा हिमजलं संतापमुद्रास्पदं गच्छेत्तावकं मन्दस्मितं तथा श्वेतं यथा मुक्तामणिर्मलिनतां धत्त इत्यन्वयः ॥ ६२ ॥

टीका ॥ हे श्रीकामाक्षि ! हे देवि ! तावकं मुखचन्द्रालंकरणमिदं मन्दस्मितं तथा नेत्रानन्दकरं यथा हिमकरस्तिग्मतां तीक्ष्णतां गच्छेत् । तावकमिदं मन्दस्मितं तथा शीतं यथा हिमजलं तुषारजलं संतापमुद्रास्पदं सम्यक्तप्यत इति संतापस्तस्याकृतिस्तस्या आस्पदं स्थानमुष्णतापदं गच्छेत् । तावकमिदं मन्दस्मितं तथा श्वेतं यथा मुक्तामणिर्मलिनतां मालिन्यं धत्तेऽङ्गीकरोतीत्यर्थः । श्रीमत्यामुखचंद्राभरणं मन्दस्मितं चन्द्रतोत्यधिकाह्लादप्रदं, हिमजलतोत्यधिकशीतलं, मुक्ताफलतोत्यधिकोज्ज्वलं कान्ति मच्चेतिभावः ॥ ६२ ॥

त्वन्मन्दस्मितमञ्जरीं प्रसृमरां कामाक्षि चन्द्रातपं ।
सन्तः सन्ततमामनन्त्यमलता तल्लक्षणं लक्ष्यते ॥

येनासौ विधुनोति तापमधिकं नाभ्यन्तरं मानसं
ध्वान्तं तत्खलु दुःखिनो वयममी केनेति जानीमहे ॥ ६३ ॥

अन्वयः ॥ हे कामाक्षि ! सन्तः प्रसृमरां त्वन्मन्दस्मितमञ्जरीं सन्ततं चन्द्रातपं येनआमनन्ति तल्लक्षणमसावमलता लक्ष्यते । परंत्वसावधिकं मानसं ध्वान्तमाभ्यन्तरं तापं च न विधुनोति तत् खल्वमी सन्तः त्वन्मन्दस्मितमञ्जरीं चन्द्रिकया समानीकरणेन केन दुःखिनः किंतु सर्वे दुःखिन एवेति वयं जानीमह इत्यन्वयः ॥ ६३ ॥

टीका ॥ हे कामाक्षि ! सन्तः सत्पुरुषाः प्रसृमरां प्रसर्तुं शीलां त्वन्मन्दस्मितमञ्जरीं मन्दहासस्याभिनवोत्पन्नपल्लवं नूत्नपुष्पं वा चन्द्रस्यातपं चन्द्रिकां येन कारणेन सन्ततमामनन्ति तल्लक्षणमेकासावमलतोज्ज्वलता सर्वैर्लक्ष्यते । परं त्वधिकं मानसं ध्वान्तमन्धकारं तापं कायिकं वाचिकं मानसम् । यद्वा आध्यात्मिकाधिभौतिकाधिदैविकं तापं च न विधुनोति मन्दहासस्तु सर्वथा विधुनोत्येव । तत्तस्मात् खल्वमी सन्तोऽसमञ्जसं मत्वा के नाम न दुःखिनः किंतु सर्वे दुःखिन एवेति वयं जानीमह इत्यर्थः ॥ ६३ ॥

नम्रस्य प्रणयप्ररोहकलहच्छेदाय पादाब्जयो—
र्मन्दं चन्द्रकिशोरशेखरमणेः कामाक्षि रागेण ते ॥
बन्धूकप्रसवश्रियं जितवतो बंहीयसीं तां रुचिं
विम्बोष्ठस्य रुचिं निरस्य हसितज्योत्स्ना वयस्यायते ॥ ६४ ॥

अन्वयः ॥ हे कामाक्षि ! ते रागेण पादाब्जयोर्नम्रस्य चन्द्रकिशोरशेखरमणेः प्रणयप्ररोहकलहच्छेदाय बंहीयसीं बन्धूकप्रसवश्रियं जितवतो विम्बोष्ठस्य तां रुचिं मन्दं यथा भवति तथा निरस्य हसितज्योत्स्ना वयस्यायत इत्यन्वयः ॥ ६४ ॥

टीका ॥ हे कामाक्षि ! चन्द्रकिशोरः शेखरमणिर्यस्य स तथोक्तस्तस्य श्रीशंभोस्ते तव रागेण पादाब्जयोर्नम्रस्य प्रणयः स्नेहस्तस्मिन् यः प्ररोहकलहः उत्पन्नकलहस्तस्यच्छेदाय निवृत्तये यया श्रिया बंहीयसीं अतिमहतीं बन्धूकपुष्पस्य श्रियं शोभां जितवतो बिम्बोष्ठस्य प्रणयप्ररोहकलहे या वर्त्तमाना संकुचितरूपा बन्धूकपुष्पशोभापहारिणी तां रुचिं दीप्तिं मन्दं शनैर्यथा स्यात्तथा निरस्य दूरीकृत्य मन्दहसितज्योत्स्ना मन्दहासचन्द्रिका वयस्यायते सखीवाचरति दंपत्योः स्नेहसंयोगं कारयतीत्यर्थः ॥ ६४ ॥

मुक्तानां परिमोचनं विदधतस्तत्प्रीतिनिष्पादिनी ।
भूयो दूरत एव धूतमनसस्तत्पालनं तन्वती ॥

उद्भूतस्य जलान्तरादविरतं तद्दूरतां जग्मुषीं ।
कामाक्षि स्मितमञ्जरी तव कथं कम्बोस्तुलामश्नुते ॥ ६५ ॥

अन्वयः॥ हे कामाक्षि ! तव स्मितमञ्जरी कम्बोस्तुलां कथमश्नुते । कीदृशस्य कम्बोः । मुक्तानां परिमोचनं विदधतः । किंविशिष्टा स्मितमञ्जरी । तत्प्रीतिनिष्पादिनी । पुनः कीदृशस्य कम्बोः । भूयो दूरत एव धूतमनसः । पुनः किंविशिष्टा स्मितमञ्जरी तत्पालनं तन्वती । पुनः कीदृशस्य कम्बोः । जलान्तराद्भूतस्य । पुनः कीदृशी स्मितमञ्जरी । अविरतं तद्दूरतां जग्मुषीत्यन्वयः ॥ ६५ ॥

टीका ॥ हे कामाक्षि ! तव स्मितरूपा मञ्जरी कम्बोः शङ्खस्य तुलां तुल्यतां कथं केन प्रकारेण अश्नुते प्राप्नोति अपि तु नैव प्राप्नोति । कीदृशस्य कम्बोः । मुक्तानां मुक्ताफलानां मुक्तजनानां च परिमोचनं त्यागं विदधतो धारयतः मुक्ताफलानां शङ्खादप्युद्भवत्वात् कीदृशी स्मितमञ्जरी तत्प्रीतिनिष्पादिनी मुक्ताफलेषु कर्मबन्धरहितेषु ज्ञानिषु च प्रीत्युद्भाविनी । "ज्ञानी त्वात्मैव मे मतः" इतिगीतोक्तेः। पुनः कीदृशस्य कम्बोः दूरत एव धूतं कम्पितं मनो रणे शात्रवाणां येन स तस्य । पुनः कीदृशी स्मितमञ्जरी । तत्पालनं तन्वती धूतं रोगभयादिभिर्मनो येषां ते धूतमनसस्तेषां भक्तानां पालनं तन्वती विस्तारयन्ती । पुनः कीदृशस्य कम्बोः । जलान्तराज्जलमध्यादुद्भूतस्य । पुनः किंविशिष्टा स्मितमञ्जरी । अविरतं निरन्तरं तद्दूरतो जग्मुषी जलाद्दूरतो गन्तुमिच्छावती । कुतः इन्दुक्षीरसिन्धुस्पर्द्धिनीत्वात् । यथाहि द्विजवरो नीचजातिं पुरुषं दृष्ट्वा तस्माद्दूरं गच्छतीतिवदित्यर्थः ॥ यद्वा डलयोरैक्याज्जडान्तरादुद्भूतस्य शङ्खस्य तद्दूरतां जग्मुषी स्मितमञ्जरी चैतन्यरूपिण्याः कामाक्ष्याः सकाशादुत्पन्ना अतस्तदुद्भूतशङ्खस्य तुलां केन प्रकारेणाप्नोति अपि तु न केनापीत्यर्थः ॥ ६५ ॥

श्रीकामाक्षि तव स्मितद्युतिझरीवैदग्ध्यलीलायितं
पश्यन्तोपि निरन्तरं सुविमलं मान्या जगन्मण्डले ॥
लोकं हासयितुं किमर्थमनिशं प्राकाश्यमातन्वते
मन्दाक्षं चिरमस्तु वस्तुविभवो मन्दारचन्द्रादयः ॥ ६६ ॥

अन्वयः ॥ हे कामाक्षि! तव स्मितद्युतिझरीवैदग्ध्यलीलायितं सुविमलं निरन्तरं पश्यन्तोपि जगन्मण्डले मान्या मन्दारचन्द्रादयो लोकं हासयितुं किमर्थमनिशं प्राकाश्यमातन्वते मन्दाक्षं यथा भवति तथा वस्तुविभवश्चिरमस्तु इत्यन्वयः ॥ ६६ ॥

टीका ॥ हे कामाक्षि! तव मन्दहासकान्त्या झरीपरंपरा तस्या वैदग्ध्यं तस्य तदेव वा लीलेवाचरितं तथोक्तं सुष्टु विगतमलं शुक्लतरं निरन्तरं पश्यन्तोपि जगतो मण्डले मान्या मन्दारचंद्रौ आदी येषां ते तथोक्ता शुक्लत्वसौन्दर्यप्रकाशत्वमाधुर्यमात्रधारिणः पदार्थाः स्वरूपदर्शनेन लोकं हासयितुं किमर्थं कस्मै प्रयोजनाय निरन्तरं प्राकाश्यमातन्वते स्वरूपं

दर्शयन्त्यतस्तेऽतीव मूढाः । कुत आधिक्यं स्मितद्युतेः पश्यन्तोपि न ज्ञातवन्तस्तस्मान्मन्दाक्षं सलज्जं यथा स्यात्तथा वस्तुमात्रो विभव ऐश्वर्यं चिरमस्तु एषाम् । एते मन्दारचन्द्रादयो वस्तुमात्रैश्वर्यवन्तः सन्तः सलज्जाश्चिरं तिष्ठन्त्वित्यर्थः ॥ ६६ ॥

क्षीराब्धेरपि शैलराजतनये त्वन्मन्दहासस्य च
श्रीकामाक्षि वलक्षिमोदयनिधेः किंचिद्भिदां ब्रूमहे ॥
एकस्मै पुरुषाय देवि स ददौ लक्ष्मीं कदाचित्पुरा
सर्वेभ्योपि ददात्यसौ तु सततं लक्ष्मीं च वागीश्वरीम् ॥ ६७ ॥

अन्वयः ॥ हे कामाक्षि ! हे शैलराजतनये ! हे देवि ! वलक्षिमोदयनिधेस्त्वन्मन्दहासस्य क्षीरसमुद्रस्य किंचिद्भिदां ब्रूमहे । सक्षीरसिन्धुरेकस्मै पुरुषाय लक्ष्मीं पुरा कदाचिद्ददौ । असौ तु सर्वेभ्यो लक्ष्मीं वागीश्वरीं च सततमद्यापि ददातीत्यन्वयः ॥ ६७ ॥

टीका ॥ हे कामाक्षि ! हे शैलराजतनये ! हे देवि ! वलक्षिम्णः श्वेतत्वस्योदयस्यैश्वर्यस्य निधेः त्वन्मन्दहासस्य च क्षीरसमुद्रस्य किंचिद्भिदां भेदं त्वत्कृपाभाजो वयं यथार्थवक्तारो ब्रूमो वदामः सः क्षीरसमुद्र एकस्मै कस्मैचित् पुरुषाय पुरा भूतकाले कस्मिंश्चित्समये लक्ष्मीं एकवारमेव ददौ असौ त्वन्मन्दहासस्तु पुनः सर्वेभ्यो जनेभ्योऽपि लक्ष्मीं श्रियं पुनर्वागीश्वरीं सरस्वतीं चाद्यापि वर्त्तमानकालेपि ददातीत्यर्थः ॥ अस्मिन्पद्ये किंचित् भिदामित्युक्तिस्तु क्षीराब्धेः परिहासकारिणी कुतो मन्दहासस्य क्षीरसमुद्रतोऽत्याधिकवर्णनात् ॥ बाहुल्यभेदे किंचिदिति साक्षेपोक्तिः कवेः यथायं ब्रह्महा लघुपातकीतिवत् ॥ ६७ ॥

श्रीकाञ्चीपुररत्नदीपकलिके नान्यानि विश्वान्तरे
चाकोराणि चराचरेश्वरि परं धन्यानि मन्यामहे
कम्पातीरकुटुम्बचङ्क्रमकलाचञ्चूनि चञ्चूपुटै—
र्नित्यं यानि तव स्मितेन्दुमहसामास्वादमातन्वते ॥ ६८ ॥

अन्वयः ॥ हे श्रीकाञ्चीपुररत्नदीपकलिके ! हे चराचरेश्वरि ! विश्वान्तरे यानि कम्पातीर-कुटुम्बचङ्क्रमकमलाचञ्चूनि चाकोराणि चञ्चूपुटैर्नित्यं तव मुखेन्दुमहसामास्वादमातन्वते । तानि वयं धन्यानि मन्यामहे नान्यानीत्यन्वयः ॥ ६८ ॥

टीका ॥ श्रिया शोभया युक्ता या काञ्ची सैव पुरं तस्य रत्नमेव दीपस्तद्रूपा कलिका तत्संबुद्धौ हे तथोक्ते ! चराणामचराणां चेश्वरी तत्संबुद्धौ तथोक्ते ! कम्पातीरे कुटुम्बेन सह चंङ्क्रमस्तस्य कला शिक्षा तस्यां चतुराणि यानि चकोराणामपत्यानि चञ्चूपुटैर्नित्यं तव मुखेन्दु-तेजसामास्वादं रसानुभवमातन्वते । तानि विश्वान्तरे वयं परं श्रेष्ठं यथा स्यात्तथा धन्यानि मन्यामहे । त्वन्मुखेन्दुकिरणरसामृतास्वादिभ्योऽन्यान्यभाग्यवन्तीति जानीम इति भावः ॥ ६८ ॥

शैत्यप्रक्रममाश्रितोपि नमतां जाड्यप्रथां धूनयन्
रागव्यञ्जनपेशलोपि गिरिजे वैमल्यमुल्लासयन्
लीलालापपुरः सरोपि सततं वाचंयमान्प्रीणयन्
कामाक्षि स्मितरोचिषां तव समुल्लासः कथं वर्ण्यते ॥ ६९ ॥

अन्वयः ॥ हे गिरिजे! हे कामाक्षि! शैत्यप्रक्रममाश्रितोपि नमतां भक्तानां जाड्यप्रथां धूनयन् रागव्यञ्जनपेशलोपि वैमल्यमुल्लासयन् लीलालापपुरःसरोऽपि वाचंयमान् प्रीणयन् तव स्मितरोचिषां समुल्लासो मयाकथं वर्ण्यत इत्यन्वयः ॥ ६९ ॥

टीका ॥ हे गिरिजे! हे पार्वती! शीतस्य भावः शैत्यं तस्य यः प्रकृष्टः क्रमः प्रारम्भस्तमाश्रितोपि नमतां भक्तानां जडस्य भावो जाड्यं तस्य प्रथां प्रणालिकां धूनयन्कम्पयन्नाशयन्निति यावत्। रागस्य रक्तवर्णस्य प्रीतेश्च व्यञ्जने प्रकाशने पेशलश्चतुरोऽपि विमलस्य भावो वैमल्यं सन्ततमुल्लासयन्नितान्त विलासयन् सततं लीलया लीलाया वा आलापस्तस्य पुरः सरति विचरतीति तथोक्तोऽपि। वाचं यच्छन्तीति वाचंयमास्तान्वाचंयमान्मुनीन्प्रीणयन् संतर्पयन्नतो हेतोस्तव स्मितरोचिषां मन्दहासकान्तीनां समुल्लासो विलसनं कथं केन प्रकारेण वर्ण्यते स्तूयत इत्यर्थः मया कविभिर्वेति शेषः ॥ ६९ ॥

श्रोणीचञ्चलमेखलामुखरितं लीलागतं मन्थरं
भ्रूवल्लीचलनं कटाक्षवलनं मन्दाक्षवीक्षाचणम् ॥
यद्वैदग्ध्यमुखेन मन्मथरिपुं संमोहयत्यञ्जसा
श्रीकामाक्षि तव स्मिताय सततं तस्मै नमस्कुर्महे ॥ ७० ॥

अन्वयः ॥ हे श्री कामाक्षि! श्रोणीचञ्चलमेखलामुखरितं लीलागतं मन्थरं भ्रुवल्लीचलनं कटाक्षवलनं मन्दाक्षवीक्षाचणं यत्स्मितं वैदग्ध्यमुखेन मन्मथरिपुमञ्जसा संमोहयति तस्मै तव स्मिताय नमस्कुर्महे वयमिति शेषः ॥ ७० ॥

टीका ॥ हे श्रीकामाक्षि! श्रोण्यां चञ्चला मेखला मुखरिता शब्दायमाना यस्मिन् तत् लीलया लीलाया वा गतं गमनं यस्मिन् तत् लीला प्राप्ता वा यस्मिन् तत् मन्थरं मन्दम् भ्रूवल्ली भ्रूवल्लरी तस्याश्चलनं यस्मिंस्तत्कटाक्षवलनं कटाक्षोत्थापनं निरीक्षणं वक्रं यस्मिन् तत् मन्दाक्षवीक्षाचणं मन्दाक्षेण लज्जया युक्ता वीक्षा निरीक्षणं तया वित्तं तत् ईदृशं यत्स्मितं मन्दहासः वैदग्ध्यमुखेन वैदग्ध्येन युक्तं मुखं तथोक्तं तेन साधनेन मन्मथः कामस्तस्य रिपुं श्रीमहादेवमञ्जसा सम्यक् शीघ्रं वा मोहयति वशं नयति तस्मै तव स्मिताय मन्दहासाय सततं नित्यं नमस्कुर्महे वयमिति शेषः ॥ ७० ॥

श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिष्प्ररोहे तव
स्फीतश्वेतिमसार्वभौमसरणिप्रागल्भ्यमभ्येयुषि ॥
चन्द्रोयं युवराजतां कलयते चेटीधुरं चन्द्रिका
गङ्गा सा च सुधाझरी सहचरीसाधर्म्यमालम्बते ॥ ७१ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! स्फीतश्वेतिमसार्वभौमसरणिप्रागल्भ्यमभ्येयुषि तव मनोज्ञमन्दहसितज्योतिष्प्ररोहे जाते सत्ययं चन्द्रो युवराजतां कलयते चन्द्रिका चेटीधुरं कलयते सा गङ्गा सुधाझरीचसहचरीसाधर्म्यमालम्बत इत्यन्वयः ॥ ७१ ॥

टीका ॥ हे श्रीकामाक्षि ! स्फीतः पुष्टो यः श्वेतिमा स एव सार्वभौमश्चक्रवर्ती राजा तस्य या सरणिर्मार्गस्तस्य यत्प्रागल्भ्यमौद्धत्यं प्रौढ्यं वा समन्तादीयुषि प्राप्तवति सति तव मनोज्ञं मनोहरं मन्दहसितं तस्य यज्ज्योतिस्तेजस्तस्य प्ररोहे उद्गमे जाते सति अयं चन्द्रो जगत्प्रकाशकः युवराजतां राज्ञामष्टौ प्रकृतयस्तासु प्रथमा मुख्या प्रकृतिर्युवराजस्तस्य भावस्तत्ता तां कलयति प्राप्नोति चन्द्रिका ज्योत्स्ना चेट्या दास्या धुरं भारमग्रं वा कलयते सा पापतापहारिणी शैत्यकारिणी तृषानाशिनी शिवशिरोधिरूढा सौन्दर्यवती गङ्गा च पुनः सुधाया झरी वृष्टिः अतिमिष्टा जरामरणहारिणी सहचर्य्या अन्तरङ्गसख्याः सादृश्यमासमन्ताल्लम्बत आश्रयत इत्यर्थः ॥ ७१ ॥

ज्योत्स्ना किं तनुते फलं तनुमतामौष्ण्यप्रशान्तिं विना
त्वन्मन्दस्मितरोचिषा तनुमतां कामाक्षि रोचिष्णुना ॥
संतापोपि निवार्य्यते नववचः प्राचुर्यमङ्कूर्यते
सौन्दर्यं परिपूर्यते जगति सा कीर्त्तिश्च संचार्यते ॥ ७२ ॥

अन्वयः ॥ हे कामाक्षि ! ज्योत्स्ना तनुमतामौष्ण्यप्रशान्तिं विना किं फलं तनुते अपि तु नान्यत्किमपि तनुते रोचिष्णुना त्वन्मन्दास्मितरोचिषा तनुमतां संतापोपि निवार्यते नववचः प्राचुर्यमङ्कूर्यते सौदर्यं परिपूर्यते जगति सा कीर्त्तिश्च संचार्यत इत्यन्वयः ॥ ७२ ॥

टीका ॥ हे कामाक्षि ! ज्योत्स्ना चन्द्रिका तनुमतां शरीरिणामुष्णस्य भाव औष्ण्यं तस्य या प्रशान्तिः प्रशमनं तां विना तद्व्यतिरिक्तंफलं किमिति प्रष्णे तनुते विस्तारयति। अपि तु नान्यत्फलं ददाति रोचिष्णुना प्रकाशशीलेन त्वन्मन्दस्मितरोचिषा तव मन्दहासदीप्त्या तनुमतां सकामभक्तानां संतापः सांसारिकभोगचिन्तया जातः कामपूर्णेन निष्कामभक्तानां च स्वपददर्शनेनाध्यात्मिकादि त्रिविधसंतापोपि निवार्यते। तेषां भक्तानां नवीनवचसां अर्थादद्भुतचमत्कारकारिकाव्यानां यत्प्राचुर्यं बाहुल्यं तदङ्कूर्यते प्रकटीक्रियते सौन्दर्यं सुभगता

परिपूर्यते संपूर्यते । भोगमोक्षदानेन सौन्दर्यसूक्तिदानेन चैतद्गुणगणविशिष्टा मन्दस्मितकान्तिरित्याख्यातिरूपा कीर्तिश्च सा प्रसिद्धा स्वकीयभक्तानां च संचार्यते सम्यक् चार्यते विस्तीर्यत इत्यर्थः ॥ ७२ ॥

वैमल्यं कुमुदश्रियां हिमरुचः कान्त्यैव संधुक्षते
ज्योत्स्नारोचिरपि प्रदोषसमयंप्राप्यैव संपद्यते ॥
स्वच्छत्वं नवमौक्तिकस्य परमं संस्कारतो दृश्यते
कामाक्ष्याः स्मितदीधितेर्विशदिमा नैसर्गिकीभासते ॥ ७३ ॥

अन्वयः ॥ कुमुदश्रियां वैमल्यं हिमरुचः कान्त्यैव संधुक्षते ज्योत्स्नारोचिरपि प्रदोषसमयमेव प्राप्य संपद्यते नवमौक्तिकस्य स्वच्छत्वं संस्कारतो दृश्यते कामाक्ष्याः स्मितदीधितेर्विशदिमा नैसर्गिकी भासत इत्यन्वयः ॥ ७३ ॥

टीका ॥ कुमुदानां रजनिविकाशिशुक्लकमलानां याः श्रियः शोभास्तासां वैमल्यं नैर्मल्यं प्रफुल्लता च हिमरुचः शीतकान्तेश्चन्द्रस्य कान्त्यैव संधुक्षते संदीप्यते न तु स्वतः ज्योत्स्नारोचिरपि प्रदोषसमयं "प्रदोषो रजनीमुखम्" इति रात्रिप्रारम्भमेवेत्यवधारणे प्राप्य संपद्यते न तु स्वैरं नवीनमुक्ताफलस्य स्वच्छत्वं शुभ्रत्वं संस्कारतः सम्यक्करणतो दृश्यते न तु स्वच्छन्दतया कामाक्ष्याः श्रीत्रिपुरसुन्दर्य्याः स्मितदीधितेर्मन्दहासकिरणस्य विशदिमा श्वेतता नैसर्गिकी स्वाभाविकी भासते प्रकाशत इत्यर्थः ॥ ७३ ॥

प्राकाश्यं परमेश्वरप्रणयिनि त्वन्मन्दहासश्रियः
श्रीकामाक्षि मम क्षिणोतु ममता वैचक्षिणीमक्षयाम् ॥
यद्भीत्येव निलीयते हिमकरो मेघोदरे शुक्तिका
गर्भे मौक्तिकमण्डली च सरसो मध्ये मृणाली चसा ॥७४॥

अन्वयः ॥ हे परमेश्वरप्रणयिनि ! हे श्रीकामाक्षि ! त्वन्मन्दहासश्रियः प्राकाश्यं मम ममता वैचक्षिणीमक्षयां क्षिणोतु यद्भीत्या हिमकरो मेघोदरे विलीयत इव च पुनः मौक्तिकमण्डली शुक्तिकागर्भे विलीयत इव यद्भीत्या मृणाली सरसो मध्ये विलीयत इव वर्त्तत इत्यन्वयः ॥ ७४ ॥

टीका ॥ हे परमेश्वरप्रणयिनि ! हे श्रीकामाक्षि ! तव मन्दहासशोभायाः प्राकाश्यं प्रकाशत्वं ममाक्षयां क्षयशून्यां ममतावैचक्षिणीं ममत्ववैदग्ध्यं क्षिणोतु नाशयतु । यद्भीत्या त्वन्मन्दहासशोभाभयेन हिमकरःशीतकरश्चन्द्रो मेघोदरे मेघमध्ये निलीयत इव नितरां लीयत इव यद्भीत्या मौक्तिकानां मण्डलीशुक्तिकागर्भे नितरां लीयत इव यद्भीत्या सरसो मध्ये साऽतितुच्छाप्रसिद्धा नलिनी नितरां लीयत इवेत्यर्थः ॥ ७४ ॥

हेरम्बे च गुहे च हर्षभरितं वात्सल्यमङ्कूरंयन्
मारद्रोहिणि पूरुषे सह भुवं प्रेमाङ्कुरं व्यञ्जयन् ॥
आनम्रेषु जनेषु पूर्णकरुणावैदग्ध्यमुत्तालयन्
कामाक्षि स्मितमञ्जरी तव कथंकारं मया कथ्यते ॥ ७५ ॥

अन्वयः ॥ हे कामाक्षि! हेरम्बे गुहे च हर्षभरितं वात्सल्यमङ्कूरयन् सहभुवं प्रेमाङ्कुरं मारद्रोहिणि पूरुषे च व्यञ्जयन् पूर्णकरुणावैदग्ध्यमानम्रेषु जनेषूत्तालयन्नतस्तव स्मितमञ्जरी मया कथंकारं कथ्यत इत्यन्वयः ॥ ७५ ॥

टीका ॥ हे कामाक्षि ! तव स्मितमञ्जरी हेरम्बे गणेशे च पुनः गुहे कार्तिकेये वात्सल्यं वत्सलतामङ्कूरयन्नवोद्गमं प्रतिक्षणं प्रकटयन्ती मारद्रोहिणि पूरुषे पूर्षु शरीरेषु जीवरूपेण शेत इति तथा यद्वा पूरणात्पूरुषः "पूरणात्पुरुषतामुपेयुषि" इत्यभियुक्तोक्तिः सर्वव्यापके तस्मिन् परमेश्वरे च सहभुवं स्वाभाविकं प्रेम्णोऽङ्कुरं । यद्वा प्रेमाङ्कुरं च पुनः सहभुवं कामम् । यद्वा प्रेम्णः स्नेहस्याङ्कुरो यस्मिन्सप्रेमाङ्कुरस्तं सह भवति इति तथोक्तस्तं कामदेवं स्फुटयन् भासयन्ती आसमंताद्भक्तजनेषु पूर्णकरुणा पूर्ण कृपा तस्या यद्वैदग्ध्यं पाण्डित्यं तदुत्तालयन् उच्चैः विस्तारयन्ती उल्लासयन्निति पाठे उच्चैः शोभां प्रापयन्ती अतस्तव स्मितमञ्जरी मन्दहासपुष्पस्तबकं कथंकारं केन प्रकारेण मया कथ्यते वर्ण्यते । एका स्मितमञ्जरी वात्सल्यं हेरम्बे गुहे च शृङ्गारं शिवे करुणावैदग्ध्यं भक्तेष्वनेकान्विषयीकृत्यानेकविधान् रसानुत्पादयन्तीत्यतो मयाऽवर्ण्याऽवाग्विषयेयमिति भावः ॥ ७९ ॥

संक्रुद्धद्विजराजकोप्यविरतं कुर्वन्द्विजैः संगमं
वाणीपद्धतिदूरतोपि सततं तत्साहचर्यं वहन् ॥
अश्रान्तं पशुदुर्लभोपि कलयन् पत्यौ पशूनां रतिं
श्रीकामाक्षि तव स्मितामृतरसस्पन्दो मयि स्पन्दताम् ॥ ७६ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! संक्रुद्धद्विजराजकोऽप्यविरतं द्विजैः संगमं कुर्वन् सन् वाणीपद्धतिदूरतोपि सततं तत्साहचर्यं वहन् पशुदुर्लभोपि पशूनां पत्यौ अश्रान्तं यथा स्यात्तथा रतिं कलयन् तव स्मितामृतरसस्पन्दो मयि स्पन्दतामित्यन्वयः ॥ ७६ ॥

टीका ॥ हे श्रीकामाक्षि ! संक्रुद्धो द्विजराजश्चन्द्रो यस्मिन् । यद्वा अतिकुपितो द्विजराजेक चन्द्रे यः स अपि अविरतं निरन्तरं द्विजै रदनैर्विप्रैश्च संगमं संयोगं कुर्वन् ब्रह्मादीनां वाण्या वाचो या पद्धतिर्मार्गस्तस्या दूरतोपि "सार्वविभक्तिकस्तसिल्" इत्यनेन प्रथमार्थे तसिल् । दूरस्थोपि अर्थाद्वागविषयोपि तत्साहचर्य्यं तस्याः वाण्याः सहचरतीति सहचरस्तस्य भावः

साहचर्यं सह विहारं वहन् श्रीमत्या मन्दहासेन सह संभाषणात् पशुदुर्लभोपि पशुशब्देन गवादयः आगमोक्तदीक्षयाऽसंस्कृता नराः पशवश्च । यद्वा ज्ञानहीनाः पशवः ज्ञानं श्रीपूज्यचरणाधीनं तेनापि गुरुविहीना एव पशवस्तेषां बहिर्मुखानां दुर्लभोप्यश्रान्तं यथा भवति तथा पशूनां जीवानां वृषभस्य च पत्यौ स्वामिनि श्रीशिवे रतिं प्रीतिं कलयन्सन् तव स्मितामृतरसस्पन्दो मन्दहाससुधारसस्य किंचित्क्षरणं तन्मयि स्पन्दतां शनैर्भवतु एतावतैवाहं कृतकृत्यो भविष्यामीति भावः ॥ ७६ ॥

श्रीकामाक्षि महेश्वरे निरुपमप्रेमाङ्कुरप्रक्रमं
नित्यं या प्रकटीकरोति सहजामुन्निद्रयन्माधुरीम् ॥
तत्तादृक्तव मन्दहाससुषमा मातः कथं मानितां
तन्मूर्ध्ना सुरनिम्नगां च कलिकामिन्दोश्च तां निन्दति ॥७७॥

अन्वयः ॥ हे श्रीकामाक्षि ! हे मातः ! या सहजां माधुरीमुन्निद्रयन्महेश्वरे निरुपमप्रेमाङ्कुरप्रक्रमं नित्यं प्रकटीकरोति तत्तादृक् तव मन्दहाससुषमा तन्मूर्ध्ना मानितां सुरनिम्नगां इन्दोः कलां च कथं निन्दतीत्यन्वयः ॥ ७७ ॥

टीका ॥ हे श्रीकामाक्षि ! हे मातः ! या तव मन्दहाससुषमा महेश्वरे श्रीपरशिवे सहजां स्वामाविकीं माधुरीं मधुरतामुन्निद्रयन्प्रकाशयन्सन्निरुपमप्रेमाङ्कुरप्रक्रममनौपम्यस्नेहाङ्कुरस्योद्गतिं नित्यमुद्भावयति तत्तस्मात्तादृशी भूत्वा तन्मूर्ध्ना तस्य शिवस्य शिरसा मानितां देवनदीं गङ्गां च पुनरिन्दोः कलां चन्द्रकलां कथं केन प्रकारेण निन्दति तिरस्करोति । अर्थाद्भगवत्या मन्दस्मितं गङ्गातश्चन्द्रतश्चात्यन्तसुन्दरप्रकाशशुक्लपवित्रशिवमनोहरणगुणवदित्यर्थः ७७

ये माधुर्यविहारमण्डपभुवो ये शैत्यमुद्राकरा
ये वैशद्यदशाविशेषसुभगाः श्रीमन्दहासाङ्कुराः ॥
कामाक्ष्याः सहजं गुणत्रयमिदं पर्यायतः कुर्वतां
वाणीडम्बरगुम्फने च हृदये कीर्तिप्ररोहे च ते ॥ ७८ ॥

अन्वयः ॥ ये माधुर्यविहारमण्डपभुवो ये शैत्यमुद्राकरा ये वैशद्यदशाविशेषसुभगास्ते कामाक्ष्या मन्दहासाङ्कुराः सहजं गुणत्रयमिदं पर्यायतो मे मम वाणीडम्बरगुम्फने च हृदये च कीर्तिप्ररोहे कुर्वताम् ॥ ७८ ॥

टीका ॥ कामाक्ष्या मधुरस्य भावो माधुर्यं तस्य यो विहारो विहरणं तस्य यो मण्डपः स्थानं तस्य भुवो भूमयः अथ च शीतस्य भावः शैत्यं तस्य या मुद्राऽकारः तस्या आकाराः खनयः अथ च विशदस्य शुभ्रस्य भावो वैशद्यं तस्य या दशावस्था तस्या यो

विशेषस्तेन सुभगाः सुन्दरा इति यावत्ते तादृशाः प्रसिद्धा मन्दहासाङ्कुराः सहजं गुणानां त्रयमिदं पर्यायतोऽनुक्रमान्मे मम वाण्याडम्बरगुम्फने गद्यपद्यमयग्रन्थरचनैश्वर्ये च पुनर्हृदये मनसि च पुनः कीर्तिप्ररोहे कीर्त्युद्गमे माधुर्यं शैत्यं वैशद्यं कुर्वन्त्वित्यर्थः। गद्यपद्यात्मकग्रन्थरचनायां पदलालित्यार्थचमत्कृत्यनुप्रासादिश्रवणसुखकरणकमाधुर्यगुणं हृदि च परमेश्वर्योः स्वरूपानन्दप्रदानेन शान्तिरूपशीतलगुणं कीर्त्तौ च सर्वगुणसंपन्नतया दोषरूपमालिन्यहरणपूर्वकौज्ज्वल्यं गुणं कुर्वन्तामिति स्फुटार्थः ॥ ७८ ॥

कामाक्ष्या मृदुलस्मितांशुनिकरा दाक्षान्तके वीक्षणे
मन्दाक्षग्रहिला हिमद्युतिमयूखाक्षेपदीक्षाङ्कुराः ॥
दाक्ष्यं पक्ष्मलयन्तु माक्षिकगुडद्राक्षाभवं वाक्षु मे
सूक्ष्मं मोक्षपथं निरीक्षितुमपि प्रक्षालयेयुर्मनः ॥ ७९ ॥

अन्वयः ॥ दाक्षान्तके वीक्षणे कामाक्ष्या हिमद्युतिमयूखाक्षेपदीक्षाङ्कुरा मन्दाक्षग्रहिला मृदुलस्मितांशुनिकरा मे मम वाक्षु माक्षिकगुडद्राक्षाभवं दाक्ष्यं पक्ष्मलयन्तु सूक्ष्मं मोक्षपथं निरीक्षितुमपि मनः प्रक्षालयेयुरित्यन्वयः ॥ ७९ ॥

टीका ॥ दक्षान्तकस्य श्रीशिवस्येदं दाक्षान्तकं तस्मिन् वीक्षणे जाते सति कामाक्ष्या मृदुलं च तत्स्मितं च तथोक्तं तस्यांशवः किरणास्तेषां निकराः मन्दाक्षं लज्जां गृह्णन्तीत्येवंशीलाः मन्दाक्षग्रहिलाः हिमद्युतिमयूखाश्चन्द्रकरास्तेषां य आक्षेपस्तिरस्कृतिस्तस्य या दीक्षा संस्कारक्रिया तस्या अङ्कुराः प्रथमोद्गमा माक्षिकं च गुडं च द्राक्षाश्च तथोक्तास्ताभ्यो भवतीति तथोक्तं दाक्ष्यं चातुर्यं मे मम वाक्षु वाणीषु पक्ष्मलयन्तु विस्तारयन्त्विति यावत्। अतिमाधुर्यगुणवतीं वाणीं कुर्वन्तु। सूक्ष्मं मोक्षपथं मुक्तिमार्गमपि निरीक्षितुं द्रष्टुं मनः प्रक्षालयेयुः शुद्धं संपादयन्त्वित्यर्थः ॥ ७९ ॥

जात्या शीतलशीतलानि मधुराण्येतानि पूतानि ते
गाङ्गानीव पयांसि देवि पटलान्यल्पस्मितज्योतिषाम् ॥
एनः पङ्कपरंपरामलिनतामेकाम्रनाथप्रिये
प्रज्ञानात्सुतरां मदीयधिषणां प्रक्षालयेयुर्मनः ॥

अन्वयः ॥ हे देवि ! एकाम्रनाथप्रिये ! ते तवाल्पस्मितज्योतिषामेतानि पटलानि गाङ्गानि पयांसीव जात्या शीतलशीतलानि मधुराणि पूतानि प्रज्ञानात् एनः पङ्कपरंपरामलिनतां मदीयधिषणां मनश्च सुतरां प्रक्षालयेयुरित्यन्वयः ॥ ८० ॥

टीका ॥ हे देवि ! हे एकाम्रनाथप्रिये ! ते तवाल्पं च तत्स्मितं चाल्पस्मितं तस्य

ज्योतिषां तेजसां पटलानि समूहाः गाङ्गानि पयांसीव जलानीवैतानि जात्या स्वभावेन शीतला-च्छीतलानि मधुराणि मिष्टानि पूतानि पवित्राणि एनश्च तत्पङ्कं च एनःपङ्कं तस्य या परंपरा प्रणालिका तया मलिनता यस्यास्तां मदीया चासौ धिषणा च तथोक्ता तां मनश्च प्रज्ञानात् प्रकृष्टं ज्ञानं प्रज्ञानं ब्रह्म विषयकं तस्मात्सुतरां सुष्टूच्चैः प्रकर्षेण क्षालयन्त्वित्यर्थः ॥ ८० ॥

अश्रान्तं परतन्त्रितः पशुपतिस्त्वन्मन्दहासाङ्कुरैः
श्रीकामाक्षि तदीयवर्णसमतासङ्गेन शङ्कामहे ॥
इन्दुं नाकधुनिं च शेखरयते मालां च धत्ते नवै-
र्वैकुण्ठैरवकुण्ठनं च कुरुते धूलीचयैर्भास्मनैः ॥ ८१ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! अश्रान्तं यथा स्यात्तथा त्वन्मन्दहासाङ्कुरैः परतन्त्रितः पशुपतिस्तदीयवर्णसमतासङ्गेनेन्दुं च नाकधुनीं च शेखरयते नवैर्वैकुण्ठैश्च मालां धत्ते धूलीचयैर्भास्मनैरवगुण्ठनं च कुरुत इति वयं शङ्कामह इत्यन्वयः ॥ ८१ ॥

टीका ॥ हे श्रीकामाक्षि ! त्वन्मन्दहासाङ्कुरैः परतन्त्रितः परवशितः पशुपतिः शिव स्तदीयवर्णसमतासङ्गेन मन्दस्मितवर्णतुल्यसङ्गेन स्मितस्य मान्यत्वात्प्रियत्वादिन्दुं चन्द्रं नाकधुनीं स्वर्गनदीं गङ्गां च अश्रान्तं यथा स्यात्तथा शेखरं करोतीति तथा शिरसि धत्त इत्यर्थः । च पुनर्नवैर्नवीनैर्वैकुण्ठैः प्रफुल्लितश्वेतवर्णपुष्पैर्मालां च हृदये प्रियत्वाद्धत्ते । धूलीचयैर्धूलीसमूहैर्भस्मन इमे भास्मनास्तैरतिप्रीत्या सर्वाङ्गेऽवगुण्ठनमुद्धूलनमङ्गरागं सर्वाङ्गलेपनं कुरुते । केवलं स्मितवर्णसमतया इन्दुं च गङ्गां च शेखरयते प्रफुल्लितमालत्यादिमालां हृदि दधाति । भस्माङ्गरागं च कुरुत इति वयं शङ्कामहे ॥ सर्वजीवपतिः सर्वज्ञोपि शिवः तवातिस्नेहात्सततं परतन्त्रितः अश्रान्तं यथा स्यात्तथा नित्यदा तव स्मितसदृशवर्णान् गङ्गाद्यान्मत्वा तादृग्विधानेनाङ्गीकरोतीति शङ्कामहे ॥ ८१ ॥

श्रीकाञ्चीपुरदेवते मृदुवचःसौरभ्यमुद्रास्पदं
प्रौढप्रेमलतानवीनकुसुमं मन्दस्मितं तावकम् ॥
मन्दं कन्दलति प्रियस्य वदनालोके समाभाषणे-
श्लक्ष्णे कुड्मलति प्ररूढपुलके चाश्लेषणे फुल्लति ॥ ८२ ॥

अन्वयः ॥ हे श्रीकाञ्चीपुरदेवते मृदुवचःसौरभ्यमुद्रास्पदं प्रौढप्रेमलतानवीनकुसुमं तावकं मन्दस्मितं प्रियस्य वदनालोके कन्दलति च श्लक्ष्णे समाभाषणे कुड्मलति च पुनः प्ररूढपुलके आश्लेषणे फुल्लतीत्यन्वयः ॥ ८२ ॥

टीका ॥ श्रिया शोभया युक्ता काञ्ची सैव पुरं राजधानी तस्य देवता तथोक्ता संबोधने हे तादृशे ! तत्प्रकाशिके ! तावकं मृदु कोमलं यद्वचस्तस्य सौरभ्यं सौगन्ध्यं मनोहरता च तस्य यामुद्रा चिन्हं तस्य आस्पदं स्थानं प्रौढस्तरुणो यः प्रेमा तस्य या लता प्रसरणशील-त्वात् । यद्वा प्रेमैव लता तस्या नवीनं नूत्नं कुसुमं पुष्पं मन्दस्मितं प्रियस्य पत्युः शिव-स्य वदनालोके मन्दं यथा स्यात्तथा कन्दल इवाचरतीति तथा । च पुनः श्लक्ष्णे स्नेहयुक्ते समा-भाषणे कुड्मलति कोरक इवाचरति पुनः प्ररूढपुलके आरूढरोमाञ्चे आश्लेषणे गाढलिङ्गने फुल्लति विकसतीत्यर्थः ॥ ८२ ॥

किं त्रैस्रोतसमम्बिके परिणतं स्रोतश्चतुर्थं नवं
पीयूषस्य समस्ततापहरणं किं वा द्वितीयं वपुः ॥
किंस्विन्नैकटिकं गिरो मधुरिमाभ्यासाय नव्यं पयः
श्रीकाञ्चीपुरनायकप्रियतमे मन्दस्मितं तावकम् ॥ ८३ ॥

अन्वयः ॥ हे श्रीकाञ्चीपुरनायकप्रियतमे ! हे अम्बिके तावकं मन्दस्मितं त्रैस्रोतसं किं परिणतं चतुर्थं नवं स्रोतः किं वा पीयूषस्य समस्ततापहरणं द्वितीयं वपुः गिरो मधुरिमा-भ्यासाय नैकटिकं नव्यं पयः किंस्विदित्यन्वयः ॥ ८३ ॥

टीका ॥ हे श्रीकाञ्चीपुरनायकप्रियतमे ! हे अम्बिके ! तावकं मन्दस्मितं त्रिस्रोतस इदं त्रैस्रोतसं गाङ्गं नवं नूत्नं परिणतं स्वरूपतोऽन्यदशां प्राप्तं चतुर्थं किं स्रोतः प्रवाहः । किंवाथवा समस्ततापहरणं समस्तानां स्थावरजङ्गमानां यस्तापस्तस्य हरणम् । यद्वा समस्ताश्चैते तापाश्च तथोक्तास्तेषां हरणं येन तत् अमृतस्य द्वितीयं वपुः शरीरम् । गिरो वाण्या मधुरिम्णो मिष्टत्व-स्याभ्यासाय निकटे भवं नैकटिकं नव्यं नवीनं किंस्विदिति तर्के पयो दुग्धं अस्तीति शेषः ॥८३॥

भूषा वक्त्रसरोरुहस्य सहजा वाचां सखी शाश्वती
नीवी विभ्रमसन्ततेः पशुपतेः सौधी दृशां पारणा ॥
जीवातुर्मदनश्रियः शशिरुचेरुच्चाटनी देवता
श्रीकामाक्षि गिरामभूमिमयते हासप्रभामञ्जरी ॥ ८४ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! वक्त्रसरोरुहस्य सहजा भूषा, वाचां शाश्वती सखी, पशुपते-र्विभ्रमसंततेर्नीवी, दृशां सौधी पारणा, मदनश्रियो जीवातुः, शशिरुचेरुच्चाटनी देवतैतादृशी हासप्रभामञ्जरी गिरामभूमिमयते ॥ ८४ ॥

टीका ॥ हे कामाक्षि ! हे अम्ब ! वक्त्रसरोरुहस्य सह जायत इति सहजा भूषा स्वाभा-विकाऽऽभरणम् । तव वाचां वाणीनां शाश्वती सदातनी सखी । पशुपतेः श्रीशंभोर्विभ्रमस्य हर्षस्य

विलासस्य वा संततेर्विस्तारस्य नीवी मूलधनम् । पशुपतेः दृशां दृष्टीनां सौधी पारणा अमृतभोजनम् । मदनस्य श्रियः शोभायाः संपदश्च जीवातुः संजीविन्योषधिः । शशिरुचेश्चन्द्रकान्तेरुच्चाटनी देवता तव हासप्रभामञ्जरी हासस्य या प्रभा दीप्तिस्तद्रूपा मञ्जरी गिरां वाणीनामभूमिमविषयमयते गच्छत्येतादृशी हासप्रभामञ्जरी सर्वेषां वागगोचरेति भावः ॥ ८४ ॥

सूतिः श्वेतिमकन्दलस्य वसतिः शृङ्गारसारश्रियः
पूर्तिः सूक्तिझरीरसस्य लहरी कारुण्यपाथोनिधेः ॥
वाटी काचन कौसुमी मधुरिमस्वाराज्यलक्ष्म्यास्तव
श्रीकामाक्षि ममास्तु मङ्गलकरी हासप्रभाचातुरी ॥ ८५ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! श्वेतिमकन्दलस्य सूतिः शृङ्गारसारश्रियो वसतिः सूक्तिझरीरसस्य पूर्तिः कारुण्यपाथोनिधेर्लहरी मधुरिमस्वाराज्यलक्ष्म्याः काचन कौसुमी वाटी तव हासप्रभाचातुरी मम मङ्गलकर्यस्तु इत्यन्वयः ॥ ८५ ॥

टीका ॥ हे श्रीकामाक्षि ! श्वेतस्य भावः श्वेतिमा स एव कन्दलश्च तथोक्तः । यद्वा श्वेतिम्नः कन्दलः श्वेतिमकन्दलस्तस्य सूतिः श्वेतवर्णस्य श्वेतवर्ण एव वा कन्दलस्तस्योद्भाविनीत्यर्थः । शृङ्गारो दंपतिप्रीतिविषयो रसस्तस्य श्रियः शोभाया वसतिः स्थानम् । सुष्टूक्तिः सूक्तिस्तस्या झरी तद्रूपा धारा वा तस्या यो रसस्तस्य पूर्त्तिः पूर्णता । करुणाया भावः कारुण्यं तदेव पाथो जलं तस्य निधेः कोशस्य लहरी तरङ्गः करुणारससमुद्रलहरीत्यर्थः ॥ मधुरिमैव स्वाराज्यमेकच्छत्रं राज्यं तस्य लक्ष्म्याः काचनाऽनिर्वचनीया कुसुमसंबन्धिनी वाट्याराम एतादृशी तव स्मितप्रभायाश्चातुरी चातुर्यं मम मङ्गलकरी अस्तु मङ्गलं ह्यैश्वर्याभ्युदयरूपं मोक्षरूपं च तत्संपादिनी भवत्वित्यर्थः ॥ ८५ ॥

उत्तुङ्गस्तनमण्डलस्य विलसल्लावण्यलीलानटी
रङ्गस्य स्फुटमूर्ध्वसीमनि मुहुः प्राकाश्यमभ्येयुषी ॥
श्रीकामाक्षि तव स्मितद्युतितति र्बिम्बोष्ठकान्त्यंकुरै-
श्चित्रां विद्रुममुद्रिकां वितनुते मौक्तीं वितानश्रियम् ॥ ८६ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! उत्तुङ्गस्तनमण्डलस्य विलसल्लावण्यलीलानटी रङ्गस्य ऊर्ध्वसीमनि स्फुटं प्राकाश्यं मुहुरभ्येयुषी तव स्मितद्युतिततिर्बिम्बोष्ठकान्त्यङ्कुरैश्चित्रां विद्रुममुद्रिकां मौक्तीं वितानश्रियं वितनुत इत्यन्वयः । यद्वा विलसल्लावण्यलीलानटोति स्मितद्युतिततिरित्यस्य विशेषणम् ॥ ८६ ॥

टीका ॥ हे श्रीकामाक्षि ! उत्तुङ्गौ च तौ स्तनौ तथोक्तौ तयोर्यन्मण्डलं वर्तुलाकारस्तस्य

तस्मिन् वा विलसत् उल्लसत् यल्लावण्यं मनोहरता तस्य या लीला केलिः सैव नटी तस्या रङ्गस्य खेलाङ्गणस्य ऊर्द्धसीमनि कुचमण्डलोपरि स्फुटं प्रकटं मुहुर्वारंवारमभ्येयुषी समन्ताद्यान्ती तव स्मितस्य मन्दहासस्य द्युतेर्दीप्तेस्ततिर्विस्तारो बिम्बोष्ठस्य या कान्तिस्तस्या अङ्कुरैरभिनवोद्गमैश्चित्रामाश्चर्यरूपां विचित्ररूपां वा विद्रुमस्य प्रवालस्य मुद्रिकामाकृतिं प्रवालाङ्गुलीयाभरणं च मुक्ताफलसंबन्धिनीं वितानस्य उल्लोचस्य श्रियं शोभां वितनुते विस्तारयत इत्यर्थः ॥ ८६ ॥

जन्तूनां जनिदुःखमृत्युलहरीसंतापनं कृन्ततः
प्रौढानुग्रहपूर्णशीतलरुचो नित्योदयं बिभ्रतः ॥
श्रीकामाक्षि विसृत्वरा इव करा हासाङ्कुरास्ते हठा—
दालोकेन निहन्युरन्धतमसः स्तोमस्य मे संततिम् ॥ ८७ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! जन्तूनां जनिदुःखमृत्युलहरीसंतापनं कृन्ततः प्रौढानुग्रहपूर्णशीतलरुचो नित्योदयं बिभ्रतो विसृत्वराः करा इव ते हासाङ्कुरा आलोकेन मेऽन्धतमसः स्तोमस्य संततिं हठान्निहन्युरित्यन्वयः ॥ ८७ ॥

टीका ॥ हे श्रीकामाक्षि ! जन्तूनां जनिमृत्युदुःखलहरीसंतापनं कृन्ततः जीवानां जनिर्जन्म मृत्युर्मरणं तयोर्यद्दुःखं तस्य लहर्यस्तरङ्गास्तासां संतापनं कृन्ततो भिन्दन्त इव प्रौढश्चासावनुग्रहश्च तथाविधस्तेन पूर्णा शीतला रुचो येषां ते तादृशाः नित्यं य उदय ऐश्वर्यं मङ्गलं वा तं धारयन्तः विसृत्वरा विसरणशीलाः कराः किरणा हस्ताश्च इव ते तव हासाङ्कुरा आलोकेन दर्शनेन मे ममान्धतमसो निविडाज्ञानरूपगाढान्धकारसमूहस्य संततिं संतानं बलान्निहन्युर्विहिंस्युरित्यर्थः ॥ ८७ ॥

स्वाभाव्यात्तव वक्रमेव ललितं संतोषसंपादनं
शंभोः किं पुनरञ्चितस्मितरुचः पाण्डित्यपात्रीकृतम् ॥
अम्भोजं स्वत एव सर्वजगता चक्षुःप्रियं भावुकं
कामाक्षि स्फुरितं शरद्विकसिते कीदृग्विधं भ्राजते ॥ ८८ ॥

अन्वयः ॥ हे कामाक्षि तव वक्रं स्वाभाव्याल्ललितं शंभोः संतोषसंपादनं किं पुनरञ्चितस्मितरुचः पाण्डित्यपात्रीकृतमम्भोजं स्वत एव सर्वजगतां चक्षुःप्रियं भावुकं किं पुनः शरद्विकसिते स्फुरितं कीदृग्विधं भ्राजत इत्यन्वयः ॥ ८८ ॥

टीका ॥ हे कामाक्षि ! तव वक्रं श्रीमुखं स्वाभाव्यात्स्वभावतो ललितं मनोहरं अत एव

शंभोः संतोषसंपादनं किं पुनरञ्चितस्मितरुचः श्लाघितं प्राप्तं च तत् स्मितं च तथोक्तं तस्य या रुक् तस्याः । यद्वा पूजिता श्लाघिता स्मितस्य या रुक् दीप्तिस्तस्याः पाण्डित्यं तस्य पात्रीकृतं श्लाघितमन्दहासचातुर्यभाजनीकृतं तस्य शोभा किमु वर्ण्यत इति भावः । तथा अम्भोजं स्वतः स्वतन्त्रतया सर्वजगतां चक्षुःप्रियं नेत्रानन्दकरं भावुकं रमणीयं पुनः शरद्विकसिते शरदृतोः सम्यक् प्रचारे जाते सति स्फुरितं प्रफुल्लितं अम्भोजं कीदृग्विधं भ्राजते शोभत इत्यर्थः ॥ अर्थादम्भोजं यथा नेत्रानन्दकरं सर्वजगतां चक्षुःप्रियं परं तु शरद्विकसिते स्फुरितं अतिशोभितं भवति । तथा तव श्रीमन्मुखं स्वतो ललितं शंभोर्नेत्रानन्दकरं भावुकं शुद्धं च सदैवास्ति किं पुनः श्लाघितरसविलासमन्दहासचातुर्यभाजनीकृतमिति भावः । अस्मिन् श्लोके स्फुरिते इति मुद्रितपुस्तके पाठो दृष्टः परं तु स्फुरितमिति अम्भोजमित्यस्य विशेषणं संभवत्यतः प्रथमान्तमेव रक्षितं तत्सुधीभिरालोच्य संविधेयम् ॥ ८८ ॥

पुंभिर्निर्मलमानसैर्विदधते मैत्रीरसं निर्मलं
कर्तुं कर्मलयं च निर्मलतमां कीर्तिं लभन्तेतराम् ।
सूक्तिं पक्ष्मलयन्ति निर्मलगुणां यत्तावकाः सेवका-
स्तत्कामाक्षि तव स्मितस्य कलया नैर्मल्यसीमानिधेः ॥ ८९ ॥

अन्वयः ॥ हे कामाक्षि ! यत्तावकाः सेवकाः कर्मलयं कर्तुं निर्मलमानसैः पुंभिर्निर्मलं मैत्रीरसं विदधते निर्मलतमां कीर्तिं लभन्तेतरां, निर्मलगुणां सूक्तिं पक्ष्मलयन्ति तन्नैर्मल्यसीमानिधेस्तव स्मितस्य कलयाऽहं जानामीत्यन्वयः ॥ ८९ ॥

टीका ॥ हे श्रीकामाक्षि ! यस्मात्तावकाः सेवकाः क्रियते इति कर्म तच्च शारीरिकवाचिकमानसभेदेन च त्रिविधं, कर्माकर्मविकर्मरूपं वा त्रिविधं, यद्वेदशास्त्रविहितं तत्कर्म । यदविहितं तदकर्म । यत्प्रतिकूलाचरणं तद्विकर्म । एतेषां त्रिविधानां कर्मणां लयं नाशं कर्तुं त्वदुपासनया निर्मलं मानस येषां ते तथोक्तास्तैः पुंभिः पुरुषैः सह तव भक्तैरिति यावत् । निर्मलं मलरहितं मैत्रीरसं मित्रस्य भावो मैत्री तद्रूपस्तस्या वा रसस्तं विशेषेण दधते बिभ्रते । अत एव निर्मलतमामतिशयेन निर्मलेति निर्मलतमा तां शरज्ज्योत्स्नावदुज्ज्वलां कीर्त्तिं लभन्तेतराम् । सुष्टूक्तिः सूक्तिर्निर्मला दोषरहिता कविता माधुर्यादिगुणवती ताम् । यद्वा कार्यविध्वंसकशब्दरहिता व्यावहारिकी । धर्मार्थकाममोक्षसंपादिका वा तां । सूक्तिं गद्यपद्यमयीं नवरसालंकारादिगुणवतीं च पक्ष्मलयन्ति विस्तीर्णां कुर्वंति तत्तस्मान्निर्मलस्य कामक्रोधादिरहितस्य भावो नैर्मल्यं तस्य शुक्लतायाश्च सीमानिधेः तव स्मितस्य मन्दहासस्य कलयांशेनाहं जानामि । यत्तव दासानां चरणपूजकानां सद्भिः सह मैत्री तया च सर्वविधकर्मनाशः हिमांशूज्ज्वलकीर्त्तिलाभः सर्वज-

नमनःकर्णहरा सूक्तिस्तस्याः प्राप्तिश्च । एतत्सर्वं शुद्धप्रकाशमत्तरस्य तव श्रीमत्स्मितस्य कलया लेशमहिम्नैव भवतीतिभावः ॥ ८९ ॥

आकर्षन्नयनानि नाकिसदसां शैत्येन संस्तम्भय-
न्निन्दुं किं च विमोहयन् पशुपतिं विश्वार्तिमुच्चाटयन् ॥
हिंसन्संसृतिडम्बरं तव शिवे हासाह्वयो मान्त्रिकः
श्रीकामाक्षि मदार्तितापतमसो विद्वेषणे चेष्टताम् ॥ ९० ॥

अन्वयः ॥ हे श्रीकामाक्षि ! हे शिवे ! नाकिसदसां नयनान्याकर्षन्शैत्येनेन्दुं संस्तम्भयन्-किंच पशुपतिं विमोहयन् विश्वार्तिमुच्चाटयन् संसृतिडम्बरं हिंसन् तव हासाह्वयो मान्त्रिको मदार्तितापतमसो विद्वेषणे चेष्टतामित्यन्वयः ॥ ९० ॥

टीका ॥ हे श्रीकामाक्षि ! हे शिवे ! नाकः स्वर्गो वासत्वेन एषामस्तीति तथोक्तास्तेषां सदसां सभानां नयनानि स्वसौन्दर्येणाकर्षन् शैत्येन शीतलत्वेनेन्दुं चन्द्रं सम्यक् स्तम्भयन् गतिं कुण्ठयन् सर्वाङ्गं जडीकुर्वन्किंच पशुपतिं शिवं विशेषेण मोहयन् विश्वेषां जगतामार्तिं सर्वप्रकारिकां पीडामुच्चाटयन्निरासयन् संसृतिः संसारस्तस्य यो डम्बरः परिकरस्तं हिंसन्नाशयंस्तव हासाह्वयो मन्दस्मितनामा मान्त्रिको मन्त्रेषु प्रभवतीति स सिद्धमन्त्रो मम आर्तिः आध्यात्मिकाधिदैविकाधिभौतिका त्रिविधा जन्ममरणजा वा पीडा तस्या यस्तापो दुःखं तद्रूपं यत्तमो वस्तुज्ञानावरोधकं तस्य विद्वेषणे नाशने चेष्टतां यततामित्यर्थः ॥ ९० ॥

क्षेपीयः क्षपयन्तु कल्मषभयान्यस्माकमल्पस्मित-
ज्योतिर्मण्डलचङ्क्रमास्तव शिवे कामाक्षि रोचिष्णवः ॥
पीडाकर्मठकर्मघर्मसमयव्यापारतापानल-
श्रीपाता नवहर्षवर्षणसुधास्रोतस्विनीसीकराः ॥ ९१ ॥

अन्वयः ॥ हे शिवे ! हे कामाक्षि ! रोचिष्णवः पीडाकर्मठकर्मघर्मसमयव्यापारतापानलश्रीपाता नवहर्षवर्षणसुधास्रोतस्विनीसीकरास्तवाल्पस्मितज्योतिर्मण्डलचङ्क्रमाः क्षेपीयो यथा भवति तथाऽस्माकं कल्मषभयानि क्षपयन्तु ॥ ९१ ॥

टीका ॥ हे शिवे ! हे कामाक्षि ! रोचिष्णवः दीप्तिशालिनः पीडाकर्मठकर्मघर्मसमयव्यापारतापानलश्रीपाताः पीडाकरणे कर्मठं कुशलं यत्कर्म तेन यो घर्मः प्रस्वेदस्तापो वा तस्य यः समयः कालस्तस्मिन्यो व्यापारः क्रिया स एव तेन वा तापो दुःखं स एवानलोऽग्निस्तस्य याः श्रियः संपदस्तासां पातो यैस्ते तथोक्ताः । नवो नवीनो हर्षस्तस्य

यद्वर्षणं वृष्टिः सैव सुधा तस्याः स्रोतस्विनी नदी तस्याः शीकराः कणास्ते तथोक्ताः तवाल्पं च यत्स्मितं चाल्पस्मितं तस्य यज्ज्योतिस्तेजस्तस्य यन्मण्डलं चक्राकारस्तस्य चङ्क्रमाः पुनः-पुनर्भ्रमणान्यतिशयेनेतस्ततो भ्रमणानि वास्माकं कल्मषमयानि पापमयानि अतिशयेन क्षिप्रमिति क्षेपीयः क्षेपीयो यथा भवति तथा क्षपयन्तु प्रक्षेपयन्तु नाशयन्त्वित्यर्थः ॥ ९१ ॥

श्रीकामाक्षि तव स्मितैन्दवमहःपूरे परिस्फूर्जति
प्रौढ्यं वारिधिचातुरीं कलयते भक्तात्मनां प्रातिभम् ॥
दौर्गत्यप्रसरास्तमःपटलिकासाधर्म्यमाबिभ्रते
किं किं कैरवसाहचर्यपदवीरीत्यां न धत्ते पदम् ॥ ९२ ॥

अन्वयः ॥ हे श्रीकामाक्षि ! तव स्मितैन्दवमहःपूरे परिस्फूर्जति सति भक्तात्मनां प्रातिभं प्रौढ्यं वारिधिचातुरीं किं किं न कलयते कैरवसाहचर्यपदवीरीत्यां पदं किं किं न धत्ते दौर्गत्यप्रसरास्तमःपटलिकासाधर्म्यं किं किं नाबिभ्रते ॥ ९२ ॥

टीका ॥ हे श्रीकामाक्षि ! तव स्मितं तदेवेन्दोरिदमैन्दवं तच्च यन्महस्तेजः स्मितैन्दवमहस्तस्य पूरे भरे परितोऽमितः स्फूर्जति चेष्टमाने विजृम्भमाणे इति यावत् । भक्ताश्च त आत्मानो जीवाश्च भक्तात्मानः स्वरूपभूता वा तेषां प्रतिभाया बुद्धेर्ज्ञानस्य इदं प्रातिभं प्रौढस्य प्रबलस्य भावः प्रौढ्यं वारिधेः समुद्रस्य चातुर्यं किं किं किमिति प्रश्ने किं न कलयते अपित्वमितोऽतिप्रसरणातिवर्द्धनादिरूपं सर्वं रचयत एव । कैरवं रात्रिविकासि कमलं तेन सह चरति गच्छतीति सहचरस्तस्य भावः साहचर्यं तस्य साधर्म्यं विकसनं तस्य पदवी स्थानं तस्य रीत्यां परिपाट्यां पदं चरणं किं किं न धत्ते अपि तु धत्त एव । कैरवाणि यथा प्रफुल्लितानि सुशोभितानि सुरम्यादिगुणोपेतानि जायन्ते तथा भक्तात्मनां प्रातिभं प्रौढ्यमपि उद्भवति प्रस्फुरति अलंकारादिकविताचातुर्य्येण शोभनीयं च भवत्येव । दुर्गतेर्जन्ममरणाद्यनेकविधदुःखरूपाया भावो दौर्गत्यं तस्य ये प्रसरा विस्तारास्तमसोन्धकारस्य या पटलिका समूहस्तस्याः साधर्म्यं किंकिमिति प्रश्ने नाबिभ्रते अपित्वाद्धत एव । इन्दुप्रकाशे सति तमो विनशनं यथा प्राप्नोति तथा भक्तात्मनां दौर्गत्यप्रसरा विलयमाप्नुवन्तीत्यर्थः ॥ ९२ ॥

मन्दारादिषु मन्मथारिमहिषि प्राकाश्यरीतिं निजां
कादाचित्कतया विशङ्क्य बहुशो वैशद्यमुद्रागणः ॥
श्रीकामाक्षि तदीयसंगमकलामन्दीभवत्कौतुकः
सातत्येन तव स्मिते वितनुते स्वैरासनावासनाम् ॥ ९३ ॥

अन्वयः ॥ हे मन्मथारिमहिषि ! हे कामाक्षि ! वैशद्यमुद्रागुणो मन्दारादिषु निजां प्राकाश्यरीतिं कादाचित्कतया बहुशो विशङ्क्य तदीयसंगमकलामन्दीभवत्कौतुकस्तव स्मिते सातत्येन स्वैरासनावासनां वितनुते ॥ ९३ ॥

टीका ॥ हे मन्मथारिमहिषि ! हे कामशत्रुपट्टराज्ञि ! हे कामाक्षि ! वैशद्यमुद्रागुणः अर्थाच्छुक्लत्वाकृतिस्वरूपे गुणः मन्दारादिषु मन्दारः कल्पवृक्षजातिभेदः श्वेतकुसुमवृक्षः तन्नामग्रहणेन तत्कुसुमफलानां ग्रहणं भवत्येव लोकेऽप्याम्रं देहीति वदते जनायाम्रफलं ददाति कार्यकारणयोरभेदादतो मन्दारपुष्पाण्यादौ येषां ते तथाविधा यूथिकामल्लिकापुण्डरीकादयो येषु तेषु कादाचित्कतया कदाचिद्भवतीति कादाचित्कस्तस्य भावः कादाचित्कता तया निजां प्राकाश्यरीतिं प्रकाशत्वपरिपाटीं प्रणालिकामिति यावत् । बहुशः पुनःपुनर्विशङ्क्य तदीयसंगमकलामन्दीभवत्कौतुकः तदीयानां मन्दारपुष्पादीनां या संगमकला तया अमन्दं मन्दं भवतीति मन्दीभवत् मन्दीभवत् कौतुकं यस्य स तथाविधः शुक्लत्वगुणसातत्येन नैरन्तर्येण तव स्मिते मन्दहासे स्वैरा यथेष्टाआसनस्थिते याऽऽसमन्ताद्वासना लिप्साऽन्तःकरणाभिप्रायस्तां वितनुते विस्तारयतीत्यर्थः ॥ ९३ ॥

इन्धाने भववीतिहोत्रनिवहे कर्मौघचण्डानिल-
प्रौढिम्ना बहुलीकृते निपतितं संतापचिन्ताकुलम् ॥
मातर्मां परिषिञ्च किंचिदमलैः पीयूषवर्षैरिव-
श्रीकामाक्षि ! तव स्मितद्युतिकणैः शैशिर्यलीलाकरैः ॥ ९४ ॥

अन्वयः ॥ हे मातः ! हे श्रीकामाक्षि ! कर्मौघचण्डानिलप्रौढिम्ना बहुलीकृते इन्धाने भववीतिहोत्रनिवहे निपतितं संतापचिन्ताकुलं मां तव पीयूषवर्षैरेव शैशिर्यलीलाकरैरमलैः स्मितद्युतिकणैः किंचित् परिषिञ्चेत्यन्वयः ॥ ९४ ॥

टीका ॥ हे मातः ! हे श्रीकामाक्षि ! कर्मणामोघः समूहः स एव दारुणो वायुस्तस्याधिक्येनाऽधिकीकृते इन्धाने दीप्ते वृद्धे । भवः संसार एव वीतिहोत्रोऽग्निस्तस्य निवहे निकरे निपतितं संतापेन या चिन्ता तया व्याकुलं माममृतवृष्टिभिरिव शिशिरस्य शीतलस्य भावः शैशिर्यं तस्य या लीला क्रीडा तां करोतीति तथा तै रमलैः शुक्लै रतिशीतलैस्तव मन्दहासदीप्तिकणैः किंचित् सर्वतः परिषिञ्च । किंचिदित्युक्त्या मन्दहासस्यातिमाहात्म्यबाहुल्यं सूचितम् । येषामल्पाभिषेचनेनापि सर्वसंतापाभिशान्तिरित्यलम् ॥ ९४ ॥

भाषाया रसनाग्रखेलनजुषः शृङ्गारमुद्रासखी
लीलाजातरतेः सुखेन नियमस्नानाय मेनात्मजे ॥

श्रीकामाक्षि सुधामयीव शिशिरा स्रोतस्विनी तावकी
गाढानन्दतरङ्गिता विजयते हासप्रभाचातुरी ॥ ९५ ॥

अन्वयः ॥ हे मेनात्मजे ! हे श्रीकामाक्षि ! रसनाग्रखेलनजुषो लीलाजातरतेर्भाषायाः सुखेन नियमस्नानाय शृङ्गारमुद्रासखी गाढानन्दतरङ्गिता शिशिरा सुधामयी स्रोतस्विनीव तावकी हासप्रभाचातुरी विजयते ॥ ९५ ॥

टीका ॥ हे मेनात्मजे ! हे हिमगिरिराजमहिष्यात्मजे ! हे श्री कामाक्षि ! रसनाया जिह्वाया योग्रस्तस्मिन् खेलनं जुषते सेवत इति तथा तस्याः लीलया लीलायां वा जाता रतिः प्रीतिर्यस्याः सा तस्याः भाषायाः वाण्याः सुखेन अनायासेन नियमस्नानाय नित्यस्नानाय शृङ्गाररसस्य मुद्राऽऽकृतिराकारः । यद्वा शृङ्गारस्य षोडशविधस्य मज्जनाञ्जनादेर्देहसंस्कारभूषारूपस्य या मुद्रा तस्याः सखी प्रियसहचरी सुधामयी स्रोतस्विनी नदीव शिशिरा शीतला, गाढो य आनन्दस्तेन तरङ्गितोद्वेलिता तावकी त्वत्संबन्धिनी हासस्य या प्रभा दीप्तिस्तस्याश्चातुरी चातुर्यं विशेषेण जयते सर्वोत्कृष्टतया वर्त्तते ॥ ९१ ॥

संतापं विरलीकरोतु सततं कामाक्षि मच्चेतना
मज्जन्ती मधुरस्मितामरधुनीकल्लोलजालेषु ते ॥
नैरन्तर्यमुपेत्य मन्मथमरुल्लोलेषु येषु स्फुटं
प्रेमेन्दुः प्रतिबिम्बितः प्रचलितः कौतूहलं धूर्जटेः ॥ ९६ ॥

अन्वयः ॥ हे कामाक्षि ! ते तव येषु मन्मथमरुल्लोलेषु मधुरस्मितामरधुनीकल्लोलजालेषु धूर्जटेः प्रतिबिम्बितः प्रेमेन्दुः स्फुटं नैरन्तर्यमुपेत्य कौतूहलं वितनुते तेषु मच्चेतना मज्जन्ती सती संतापं विरलीकरोत्वित्यन्वयः ॥ ९६ ॥

टीका ॥ हे कामाक्षि ! ते तव येषु मन्मथः कामः स एव मरुत्पवनस्तेन लोलेषु चपलेषु, मधुरस्मितं तदेवामरधुनी देवनदी गङ्गा तस्याः कल्लोला महातरङ्गास्तेषां जालेषु समूहेषु धूर्जटेः शिवस्य प्रतिबिम्बितः प्रेमेन्दुः निरन्तरस्य भावो नैरन्तर्यमेकतामुपेत्य प्राप्य स्फुटं यथा भवति तथा कौतूहलमाश्चर्यं वितनुते । तेषु पूर्वोक्तेषु मच्चेतना मदीया मतिर्मज्जन्ती स्नानं कुर्वती सती संतापं विरलीकरोतु नाशयत्वित्यर्थः ॥ ९६ ॥

सूक्तिः शीलयते किमद्रितनये मन्दस्मितात्ते मुहु–
र्माधुर्यागमसंप्रदायमथवा सूक्तेस्तु मन्दस्मितम् ॥
इत्थं कामपि गाहते मम मनः संदेहमार्गभ्रमीं
श्रीकामाक्षि न पारमार्थ्यसरणिस्फूर्त्तौ निधत्ते पदम् ॥ ९७ ॥

अन्वयः ॥ हे अद्रितनये ! हे श्रीकामाक्षि ! ते सूक्तिर्माधुर्यागमसंप्रदायं मन्दस्मितान्मुहुः शीलयते । किमथवा मन्दस्मितं सूक्तेः शीलयत इत्थं कामपि संदेहमार्गभ्रमीं मम मनो गाहते पारमार्थ्यसरणिस्फूर्त्तौ पदं न निधत्त इत्यन्वयः ॥ ९७ ॥

टीका ॥ हे अद्रितनये ! हे श्रीकामाक्षि ! ते तव सुष्टूक्तिः सूक्तिर्वचनरचना माधुर्यस्यागम आगमनं शास्त्रं वा तस्य यः संप्रदायः शास्त्रविहिताचारप्रणालिका विधिपूर्वक आचारस्तं मुहुः किमिति प्रश्ने मन्दस्मिताच्छीलयते अभ्यस्यति अथानन्तरं वा विकल्पे । सूक्तेः सकाशात्तु पुनः मन्दस्मितं माधुर्यागमसंप्रदायं मुहुर्वारंवारमावर्त्तयति इत्थममुना प्रकारेण मम मनः कामपि संदेहमार्गभ्रमीं सदेहस्य यो मार्गः सरणिः तस्मिन् भ्रमीं भ्रमणं गाहते प्राप्नोति तत्त्वतो न निश्चिनोतीत्यर्थः । परमार्थस्य भावः पारमार्थ्यं तस्य या सरणिर्मार्गस्तया स्फूर्त्तिः स्फुरणं प्रकाश इति यावत् । तस्मिन्पदं स्थानं निश्चयं न निधत्ते । तव मन्दस्मितस्य माधुर्यशिक्षणे गुरुः तव सूक्तिरथवा सूक्तेर्गुरुर्मन्दस्मितमिति सिद्धान्तं मनो नैव लभत इत्यर्थः ॥ ९७ ॥

चेतःक्षीरपयोधिमन्थनचलद्रागाख्यमन्थाचल-
क्षोभव्यापृतिसंभवां जननि ते मन्दस्मितश्रीसुधाम् ॥
स्वादंस्वादमुदीतकौतुकरसं नेत्रत्रयी शांकरी
श्रीकामाक्षि निरन्तरं परिणमत्यानन्दवीचीमयी ॥ ९८ ॥

कर्मक तेदि त्वा- नेपदं मुक्त

अन्वयः ॥ हे श्रीकामाक्षि ! हे जननि ! ते चेतःक्षीरपयोधिमन्थनचलद्रागाख्यमन्थाचलक्षोभव्यापृतिसंभवां मन्दस्मितश्रीसुधां स्वादंस्वादमुदीतकौतुकरसं निरन्तरं शांकरी नेत्रत्रयी आनन्दवीचीमयी परिणमतीत्यन्वयः ॥ ९८ ॥

टीका ॥ हे श्री कामाक्षि ! हे जननि ! ते तव चेतः क्षीरपयोधिः दुग्धसमुद्रस्तस्य मन्थने चलन्विचरन्यो रागाख्यः स्नेहनामकमन्थाचलो मन्दरपर्वतस्तेन जातो यः क्षोभस्वरूपानवस्थितिस्तस्य यो व्यापारः क्रिया तेन (तस्मात्) संभव उत्पत्तिर्यस्याः सा तां मन्दहासस्य शोभैव सुधा तां स्वादंस्वादं पुनः पुनः रसयित्वोदीतो जातोदय उच्चैःप्राप्तश्च तत्कौतुकरसो हर्षरूपरसो हर्षस्य रसो वा यस्मिन्कर्म्मणि बत् यथा भवति तथा शांकरी नेत्रत्रयी शिवनेत्रत्रिकं निरन्तरं नित्यं आनन्दस्य वीचयस्तरङ्गास्तन्मयी परिणमति तद्रूपा भवतीत्यर्थः ॥ ९८ ॥

आलोके तव पञ्चशायकरिपोरुद्दामकौतूहल-
प्रेङ्खन्मारुतघट्टनप्रचलितादानन्ददुग्धाम्बुधेः ॥
काचिद्वीचिरुदञ्चति प्रतिनवा संवित्प्ररोहात्मिका
तां कामाक्षि कवीश्वराः स्मितमिति व्याकुर्वते सर्वदा ॥ ९९ ॥

अन्वयः ॥ हे कामाक्षि ! पञ्चशायकरिपोरालोके तव उद्दामकौतुहलप्रेङ्खन्मारुतघट्टनप्रचलितादानन्ददुग्धाम्बुधेः काचित्प्रतिनवा संवित्प्ररोहात्मिका वीचिरुदञ्चति तां कवीश्वरास्तव स्मितमिति सर्वदा व्याकुर्वत इत्यन्वयः ॥ ९९ ॥

टीका ॥ हे श्रीकामाक्षि ! पञ्च शायका बाणा यस्य स तथाविधस्तस्य कामस्य रिपुः शत्रुः श्रीशिवस्तस्यालोके शिवदर्शने सति तवोद्दामं वृद्धं यत्कौतूहलं हर्षस्तदेव प्रेङ्खन् प्रचलन्यो मासतस्तस्य घट्टनात् संघर्षात् प्रचलितो य आनन्ददुग्धाब्धिः तस्मात्सुखक्षीरसमुद्रात्प्रतिनवा नित्यनवीना संवित् तस्याः संविदः शिवशक्त्योरैक्यरसरूपस्य ज्ञानस्य प्ररोह उद्गमः स एवात्मा यस्याः सा तथाविधा काचिदनिर्वचनीया वाङ्मनोऽगोचरा वीचिर्लहरी उदञ्चत्युत्पद्यते तां सर्वदा कवीनां य ईश्वरा मुख्याश्चतुर्विधपाण्डित्यपराक्रमेण परान् विजेतुं समर्था ज्ञानिनो वा ते तव स्मितमिदमित्यमुना प्रकारेण व्याकुर्वते कथयन्तीत्यर्थः ॥ ९९ ॥

क्रीडालोलकृपासरोरुहमुखीसौधाङ्गणेभ्यः कवि–
श्रेणीवाक्परिपाटिकामृतझरीसूतिगृहेभ्यः शिवे ॥
निर्वाणाङ्कुरसार्वभौमपदवीसिंहासनेभ्यस्तव
श्रीकामाक्षि मनोज्ञमन्दहसितज्योतिष्कणेभ्यो नमः ॥ १०० ॥

अन्वयः ॥ हे शिवे ! हे श्रीकामाक्षि ! क्रीडालोलकृपासरोरुहमुखीसौधाङ्गणेभ्यः कविश्रेणिवाक्परिपाटिकामृतझरीसूतिगृहेभ्यो निर्वाणाङ्कुरसार्वभौमपदवीसिंहासनेभ्यस्तव मनोज्ञमन्दहसितज्योतिष्कणेभ्यो नमः ॥ १०० ॥

टीका ॥ हे शिवे ! हे श्रीकामाक्षि ! क्रीडा केलिस्तया क्रीडया लोला चपला कृपा सैव सरोरुहमुखी कमलवदना स्त्री तस्याः सौधाङ्गणानि प्रासादाङ्गणानि तेभ्यः कवीनां श्रेणयस्तासां या वाचस्तासां या परिपाटिका प्रणालिका इति यावत् । सा एवामृतझरी सुधाझरी तस्याः सूतिगृहाणि जन्मस्थानानि तेभ्यः निर्गतो बाणो दुःखं यस्मात्तत् बवयोरैक्यान्निर्वाणं मोक्षः तस्याङ्कुरा नवोद्गमास्तेषां सार्वभौमपदवी साम्राज्यमेकातपत्रराज्यं तस्य सिंहासनानि । भवन्ति हि राज्ञामेकरूपा बहवः पदार्थाः । तेभ्यस्तव मनोज्ञं च तन्मन्दहसितं च मनोज्ञमन्दहसितं तद्रूपं ज्योतिस्तेजस्तस्य कणास्तेभ्यो नमः अहं नमस्करोमीत्यर्थः ॥ १०० ॥

इति श्रीमूककविसार्वभौमकृतपञ्चशतकेषु द्वितीयस्य मन्दहासशतकस्य सुवर्णमालाख्या टीका रावराजेन श्रीशोभनसिंहेन कृता समाप्ता ॥ २ ॥

---

महिम्नः पन्थानं मदनपरिपन्थिप्रणयिनि
प्रभुर्निर्णेतुं ते भवति यतमानोऽपि कतमः ।
तथाऽपि श्रीकाञ्चीविहृतिरसिके कोऽपि मनसो
विपाकस्त्वत्पादस्तुतिविधिषु जल्पाकयति माम् ॥ १ ॥

अन्वयः ॥ हे मदनपरिपन्थिप्रणयिनि ! हे श्रीकाञ्चीविहृतिरसिके ! ते महिम्नः पन्थानं निर्णेतुं यतमानोऽपि कतमः प्रभुर्भवति । तथाऽपि कोऽपि मनसो विपाकस्त्वत्पादस्तुतिविधिषु मां जल्पाकयति ॥ १ ॥

टीका ॥ मदनस्य कामस्य परिपन्थी शत्रुः शिवस्तस्य प्रणयः स्नेहोऽस्यामस्तीति तथोक्ता सत्संबुद्धौ हे तथाविधे ! श्रीकाञ्च्यां विहृतिर्विहारस्तस्मिन् रसिका तत्संबुद्धौ हे तादृशे ! ते तव महिम्नः महत्तायाः पन्थानं मार्गं निर्णेतुं तस्य निर्णयं कर्तुं यतमानो यत्नं कुर्वन्नपि कतमः को वा प्रभुः समर्थो भवति न कोपीति भावः । तथाऽपि कोऽपि मनसो विपाकः अनेकजन्मस्वन्यदेवताराधनेन स्वधर्माचरणेन वा मनसो यो विपाकः परिणामोऽवस्थान्तरप्राप्तिः स त्वत्पादस्तुतिविधिषु तव चरणगुणवर्णनाविधानेषु मां जल्पाकयति वाचालीकरोतीत्यर्थः । शिखरिणीवृत्तम् ॥ " रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी ॥ १ ॥

गलग्राही पौरंदरपुरवनीपल्लवरुचां
धृतप्राथम्यानामरुणमहसामादिमगुरुः ।
समिन्धे बन्धूकस्तवकसहयुध्वा दिशि दिशि
प्रसर्पन्कामाक्ष्याश्चरणकिरणानामरुणिमा ॥ २ ॥

अन्वयः ॥ पौरंदरपुरवनीपल्लवरुचां गलग्राही धृतप्राथम्यानामरुणमहसामादिमगुरुर्बन्धूकस्तवकसहयुध्वा कामाक्ष्याश्चरणकिरणानामरुणिमा दिशि दिशि प्रसर्पन्सन् समिन्धे ॥ २ ॥

टीका ॥ पुरंदरस्य इदं पौरंदरं तच्च तत् पुरं च तथोक्तं तस्य संबन्धिनी वनी कल्पवृक्षारामस्तस्या ये पल्लवास्तेषां रुचां कान्तीनां गलस्य कण्ठस्य ग्राहो ग्रहणमस्त्यस्य स तथाविधः कल्पवृक्षपल्लवकान्तीनामर्द्धचन्द्रप्रद इत्यर्थः । धृतमङ्गीकृतं प्रथमस्य भावः प्राथम्यं यैस्ते धृतप्राथम्यास्तेषामरुणानि यानि महांसि तेजांसि तेषामुद्यत्सूर्यादीनां आदौ भव आदिमः प्रथमः स चासौ गुरुश्च तथोक्तः अरुणिमशिक्षयिता बन्धूकानां बन्धुजीवकाख्यरक्तपुष्पाणां स्तबका गुच्छास्तैः सहयुध्वा सार्द्धयोद्धा युद्धकर्त्ता दिशि दिशि सर्वदिक्षु प्रकर्षेण सर्पन् गच्छन् सन् कामाक्ष्याश्चरणकिरणानामरुणिमा रक्तता समिन्धे सम्यग्दीप्यते इत्यर्थः ॥ २ ॥

मरालीनां यानाभ्यसनकलनामूलगुरवे
दरिद्राणां त्राणव्यतिकरसुरोद्यानतरवे ।

१३

तमस्काण्डप्रौढिप्रकटनतिरस्कारपटवे
जनोऽयं कामाक्ष्याश्चरणनलिनाय स्पृहयते ॥ ३ ॥

अन्वयः ॥ मरालीनां यानाभ्यसनकलनामूलगुरवे दरिद्राणां त्राणव्यतिकरसुरोद्यानतरवे तमस्काण्डप्रौढिप्रकटनतिरस्कारपटवे कामाक्ष्याश्चरणनलिनायायं जनः स्पृहयते ॥ ३ ॥

टीका ॥ मरालीनां हंसीनां यानस्य गमनस्य अभ्यसनं पुनःपुनः परिशीलनं शिक्षणं तस्य कलना रचना रीतिरिति यावत् । तस्या मूलभूतो गुरुस्तस्मै । श्रीमत्याश्चरणारविन्दस्यानुपमातिरमणीयायाः स्वकीयगत्याः हंसीषु शिक्षाकरणेन गुरुत्वमस्ति ये केपि कृपालवः सन्तस्ते मूर्खाणामपि स्वगुणशिक्षणे यत्नं श्रमं च कुर्वन्ति गुणागमस्तु स्वकर्म्माधीनं तद्वत् । श्रीमतीचरणातिरमणीयगतिरिव गतिप्राप्तिस्त्वसंभवैव तथापि तदनुकरणकारिणी हंसीनां या रमणीया गतिः सा त्वच्चरणगुरुणा शिक्षितेति भावः । दरिद्राणां धनरहितानां त्राणं रक्षणं तस्य व्यतिकरे अतिशये सुरोद्यानतरवे दारिद्र्यनाशकायेत्यर्थः । वस्तुनोऽप्रतिभानकारकत्वादज्ञानमेव तमस्तस्य काण्डः समूहः शाखा वा तस्य प्रौढिर्बाहुल्यं तस्य यस्तिरस्कारो धिक्कारस्तस्मिन्पटवे प्रवीणाय श्रीकामाक्ष्याश्चरणनलिनाय चरणकमलाय अयं जनो मूकनाम्ना ख्यातः स्पृहयते स्पृहां कुरुत इत्यर्थः ॥ ३ ॥

वहन्ती सैन्दूरीं सरणिमिव नम्रामरपुरी—
पुरंध्रीसीमन्ते कविकमलबालार्कसुषमा ॥
त्रयीसीमन्तिन्याः स्तनतटनिचोलारुणपटी
विभान्ती कामाक्ष्याः पदनलिनकान्तिर्विजयते ॥ ४ ॥

अन्वयः ॥ नम्रामरपुरीपुरंध्रीसीमन्ते सैन्दूरीं सरणिं वहन्तीव कविकमलबालार्कसुषमेव त्रयीसीमन्तिन्याः स्तनतटनिचोलारुणपटीव विभान्ती कामाक्ष्याः पदनलिनकान्तिर्विजयते ॥ ४ ॥

टीका ॥ नम्रा नता अमराणां देवानां पुरी अमरावती तस्याः पुरंध्र्यः स्त्रियस्तासां सीमन्ते केशवेशे सिन्दूरस्येयं सैन्दूरी तां सरणिं पद्धतिं वहन्ती धारयन्तीव कवय एव कमलानि कविकमलानि तेषु बालश्चासावर्कश्च तथोक्तः उद्यत्सूर्यस्तस्य सुषमेव परमशोभेव त्रयी ऋग्यजुःसामवेदत्रयी सैव सीमन्तिनी नारी तथोक्ता तस्यास्तनतटस्य निचोलः प्रच्छदपटः कञ्चुकी स एवारुणपटीव विभान्ती विशेषेण प्रकाशमाना सती कामाक्ष्याः पदनलिनकान्तिः स्तुतिघटकपदकमलच्छविः विजयते विशेषेण जयति सर्वोत्कर्षेण वर्तत इत्यर्थः ॥ ४ ॥

प्रणम्रीभूतस्य प्रणयकलहत्रस्तमनसः
स्मराराातेश्चूडावियति गृहमेधी हिमकरः ॥

ययोः सांध्यां कान्तिं वहति सुषमाभिश्चरणयो—
स्तयोर्मे कामाक्ष्या हृदयमपतन्द्रं विहरताम् ॥ ५ ॥

अन्वयः ॥ प्रणयकलहत्रस्तमनसः प्रणम्रीभूतस्य स्मराराते्श्चूडावियति गृहमेधी हिमकरो ययोः सुषमाभिः सांध्यां कान्तिं वहति तयोः श्रीकामाक्ष्याश्चरणयोर्मे अपतन्द्रं हृदयं विहरताम् ॥ ५ ॥

टीका ॥ प्रणयः स्नेहस्तत्संबन्धी यः कलहस्तेन त्रस्तं मनो यस्य तस्य प्रकर्षेण नम्रीभूतस्य स्मराराते: कामशत्रोः शिवस्य चूडारूपे वियत्याकाशे गृहमेधी गृहस्थाश्रमी हिमकरश्चन्द्रो ययोः सुषमाभिः शोभाभिः संध्यायां भवा सांध्या तां कान्तिं प्रकाशवत्पीतारुणवर्णत्वं वहति धत्ते तयोः श्रीकामाक्ष्याश्चरणयोर्मे मम अपगता तन्द्राऽऽलस्यं यस्य तत्तथोक्तं हृदयं मनः " स्वान्तं हृन्मानसं मनः " इत्यमरः । विहरतां क्रीडत्वित्यर्थः ॥ ५ ॥

ययोः पीठायन्ते विबुधमुकुटीनां पटलिका
ययोः सौधायन्ते स्वयमुदयभाजो भणितयः ॥
ययोर्दासायन्ते सरसिजभवाद्याश्चरणयो—
स्तयोर्मे कामाक्ष्या दिनमनु वरीवर्तु हृदयम् ॥ ६ ॥

अन्वयः ॥ विबुधमुकुटीनां पटलिकाः ययोः पीठायन्ते स्वयमुदयभाजो भणितयो ययोः सौधायन्ते सरसिजभवाद्याः ययोर्दासायन्ते तयोः श्रीकामाक्ष्याश्चरणयोरनुदिनं मे हृदयं वरीवर्तु ॥ ६ ॥

टीका ॥ विबुधानां देवानां मुकुट्यस्तासां पटलिकाः समूहाः ययोः पीठानीवाऽचरन्ति इति पीठायन्ते । ये ये देवा दर्शनार्थं सेवार्थं च समागच्छन्ति तेषां प्रार्थना ईदृशी भवति । " अस्माकं कल्याणाय हे हैयङ्गवीनहृदये ! हे जगन्मातः ! श्रीमत्या भवत्याश्चतुर्वर्गप्रदौ पङ्कजाङ्घ्री अस्माकं शिरस्सु स्थापय " इत्यतस्तत्तद्देवतानां मुकुटोपरि कृपया श्रीमतीपादारविन्दयोः स्थापनात् तन्मुकुटानां पीठत्वोक्तिरित्यर्थः । स्वयं स्वतः उदयं प्राकट्यं कवितागुणैश्वर्यं माङ्गल्यं संपदं वा कल्याणं वा वृद्धिं वा भजन्तीत्युदयभाजो भणितय उक्तयो ययोः सौधाः प्रासादा इवाऽचरन्तीति तथोक्ताः । उक्तीनां तद्वर्णनसंबन्धाच्चरणयोरुक्तिषु स्थितिमत्त्वसाधर्म्यादुक्तीनामपि सौधत्ववर्णनमित्यवगन्तव्यम् । सरसिजभवः कमलजो ब्रह्मा आद्यो येषां ते तथोक्ता देवा ययोर्दासा इवाचरन्तीति तादृशाः । ब्रह्मा तदुक्तं सृष्ट्याख्यं विष्णुः पालनाख्यं हरश्च संहाराख्यं कार्यं परमसावधानतया करोति तत्करणेन तेषां दासत्वमित्यवधेयम् । तयोः श्रीकामाक्ष्या भगवत्याश्चरणयोर्दिनमनु प्रतिदिनं मे मम हृदयं मन अतिशयेन पुनः पुनर्वा वर्ततां इति वरीवर्तु इत्यर्थः ॥ ६ ॥

नयन्ती संकोचं सरसिजरुचां दिक्परिसरे
सृजन्ती लौहित्यं नखकिरणचन्द्रार्द्धखचिता ॥
कवीन्द्राणां हृत्कैरवविकसनोद्योगजननी
स्फुरन्ती कामाक्ष्याश्चरणरुचिसंध्या विजयते ॥ ७ ॥

अन्वयः ॥ दिक्परिसरे लौहित्यं सृजन्ती सरसिजरुचां संकोचं नयन्ती नखकिरणचन्द्रार्द्धखचिता कवीन्द्राणां हृत्कैरवविकसनोद्योगजननी स्फुरन्ती कामाक्ष्याश्चरणरुचिसंध्या विजयते ॥ ९ ॥

टीका ॥ दिशां परिसरे दिगन्ते लोहितस्य भावो लौहित्यं सृजन्ती सती सरसिजरुचां कमलकान्तीनां संकोचं नयन्ती प्रापयन्ती नखकिरणचन्द्रार्द्धखचिता किरणैर्युक्ताश्चन्द्रार्द्धाः किरणचन्द्रार्द्धाः नखा एव किरणचन्द्रार्द्धास्तैः खचिता व्याप्ता कवीन्द्राणां हृत्कैरवविकसनोद्योगजननी कवीनामिन्द्राः श्रेष्ठाः कवीन्द्रास्तेषां हृत्कैरवाणि मनःपङ्कजानि तेषां प्रफुल्लनोद्योगजननी विकसनप्रयत्नसंभाविनी एवंविधा स्फुरन्ती चेष्टमाना प्रकाशयन्तीति यावत् । श्रीकामाक्ष्याश्चरणरुचिसंध्या चरणयोर्या रुचिश्चरणरुचिः सैव संध्या विशेषेण जयति सर्वोत्कृष्टतया वर्तत इत्यर्थः ॥ ७ ॥

विरावैर्माञ्जीरैः किमपि कथयन्तीव मधुरं
पुरस्तादानम्रे पुरविजयिनि स्मेरवदने ॥
वयस्येव प्रौढा शिथिलयति या प्रेमकलह—
प्ररोहं कामाक्ष्याश्चरणयुगली सा विजयते ॥ ८ ॥

अन्वयः ॥ या स्मेरवदने पुरस्तादानम्रे पुरविजयिनि सति माञ्जीरैर्विरावैः किमपि मधुरं कथयन्तीव प्रौढा वयस्येव प्रेमकलहप्ररोहं शिथिलयति सा कामाक्ष्याश्चरणयुगली विजयते ॥ ८ ॥

टीका ॥ या स्मेरं ईषद्धसनं तद्युक्तं वदनं यस्य स तथोक्तस्तस्मिन् पुरस्तादग्रत आनम्रे चरणयोः पादयोः पतिते पुरं त्रिपुरासुरं विशेषेण जयति इत्येवं शीलमस्यास्तीति तथोक्तस्तस्मिन् पत्यौ शिवे विशेषेण रावाः शब्दास्तैर्मञ्जीरयोर्भवा माञ्जीराः मञ्जीरसंबन्धिनस्तैः किमपि अनौपम्यं मधुरं श्रुतिरम्यं कथयन्तीव प्रौढा प्रगल्भा अतिचतुरा वयस्या उत्तमा सखीव प्रेम्णा स्नेहेन युक्तः यः कलहः स्नेहसंबन्धी वा तस्य प्ररोहमङ्कुरं शिथिलयति दूरीकरोति सा कामाक्ष्याश्चरणयुगली विशेषेण जयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥ ८ ॥

सुपर्वस्त्रीलोलालकपरिचितं षट्पदकुलैः
स्फुरल्लाक्षारागं तरुणतरणिज्योतिररुणैः ॥

भृतं कान्त्यम्भोभिर्विसृमरमरन्दैः सरसिजै-
र्विधत्ते कामाक्ष्याश्चरणयुगलं बन्धुपदवीम् ॥ ९ ॥

अन्वयः ॥ सुपर्वस्त्रीलोलालकपरिचितं स्फुरल्लाक्षारागं कान्त्यम्भोभिर्भृतं कामाक्ष्याश्चरणयुगलं षट्पदकुलैः तरुणतरणिज्योतिररुणैः विसृमरमरन्दैः सरसिजैर्बन्धुपदवीं विधत्ते ॥ ९ ॥

टीका ॥ सुपर्वाणो देवास्तेषां याः स्त्रियस्तासां पुनः पुनर्नमनाल्लोलाश्चपला ये अलकास्तैः परिचितं व्याप्तं पूजितं वा स्फुरन्सँल्लाक्षाया रागो रक्तिमा यस्मिंस्तत्तादृशं, कान्तयो दीप्तयस्ताएवाम्भांसि जलानि तैर्भृतं पूर्णं कामाक्ष्याश्चरणयुगलं षट्पदानां भ्रमराणां कुलं समूहो येषु तानि तथोक्तानि तैः तरुणश्चासौ तरणिश्च तरुणतरणिस्तस्य यज्ज्योतिस्तेजस्तेनारुणानि तैरारक्तैर्विसृमराः विसरणशीला मरन्दाः मकरन्दाः येषु येषां वा तथोक्तानि तैः सरसिजैः कमलैः सह कामाक्ष्याः जगदम्बायाश्चरणयुगलं बन्धुपदवीं बध्नन्ति। स्नेहादिना मनो ये सगोत्रा मित्राणि वा ज्ञातयो वा ते तथोक्ता भ्रातरोवा तेषां बन्धूनां पदवीं धत्ते तत्सादृश्यं दधातीत्यर्थः । देवरमणीलोलालकपरिचितत्वात् भृङ्गालीयुक्तैः, कान्त्यम्भोभृतत्वात् बहुलमकरन्दयुक्तैः, स्फुरदलक्तरसवत्त्वात्तरुणार्कतेजोरक्तैः पङ्कजैः धर्मसाम्यात् श्रीमत्याश्चरणयुगलं कमलसहोदरतां संधत्त इति भावः ॥ ९ ॥

रजःसंसर्गेऽपि स्थिरमरजसामेव हृदये
परं रक्तत्वेन स्थितमपि विरक्तैकशरणम् ।
अलभ्यं मन्दानां दधदपि सदा मन्दगतितां
विधत्ते कामाक्ष्याश्चरणयुगमाश्चर्यलहरीम् ॥ १० ॥

अन्वयः ॥ रजःसंसर्गेप्यरजसामेव हृदये स्थिरं परं रक्तत्वेन स्थितमपि विरक्तैकशरणं सदा मन्दगतितां दधदपि मन्दानामलभ्यं तत्कामाक्ष्याश्चरणयुगमाश्चर्यलहरीं विधत्ते ॥ १० ॥

टीका ॥ रजो धूली रजोगुणश्च तस्य संसर्गः संयोगो यस्य तत् न विद्यते रजोगुणो मनोमलिनकर्त्ता येषां ते तथोक्तास्तेषामेव हृदये मनसि स्थिरं अचलं परं इतोऽग्रे रक्तत्वेन अरुणतया रागतया च स्थितमपि विरक्तानां विरागिणां विषयविरक्तभक्तानां एकमेव शरणमाश्रयः मन्दा धीराल्पा चासौ गतिर्गमनं च तथोक्ता मन्देषु खलेषु मूर्खेषु च वा गतिः प्राप्तिस्तस्याभावस्तत्ता तां सदा सर्वस्मिन्काले दधत्सदपि मन्दानां नीचानामलभ्यं लब्धुमशक्यमीदृशं कामाक्ष्याश्चरणयुगमाश्चर्यलहरीं विशेषेण धत्ते दधातीत्यर्थः ॥ १० ॥

जटाला मञ्जीरस्फुरदरुणरत्नांशुनिकरै-
र्निषीदन्ती मध्ये नखरुचिझरीगाङ्गपयसाम् ।

परित्राणं कर्तुं जननि मम कामाक्षि नियतं
तपश्चर्यां धत्ते तव चरणपाथोजयुगली ॥ ११ ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि ! माञ्जीरस्फुरदरुणरत्नांशुनिकरैर्जटाला नखरुचिझरी गङ्गपयसां मध्ये निषीदन्ती मम नियतं परित्राणं कर्तुं तव चरणपाथोजयुगली तपश्चर्यां धत्ते ॥११॥

टीका ॥ हे कामाक्षि ! हे जननि ! मञ्जीरयोर्मेवाः माञ्जीराः । यद्वा मञ्जीरसंबन्धिनो ये स्फुरन्तोऽरुणरत्नानां माणिक्यानामंशवः किरणास्तेषां निकरैः समूहैर्जटाला जटायुक्ता सती नखानां या रुचयो दीप्तयस्तासां झर्य्यः धाराप्रवाहास्ता एव गङ्गासंबन्धिजलानि तेषां मध्ये निषीदन्ती स्थितिं कुर्वन्ती सती मम नित्यं परित्राणं रक्षणं कर्तुं तव चरणावेव पाथोजे कमले तयोर्युगली युगं तपश्चर्यां तपआचरणं धत्ते दधातीत्यर्थः । तद्वाचः पथामगोचरं वात्सल्यं यन्मत्कल्याणाय स्वरूपधारणं तवेति भावः ॥ ११ ॥

तुलाकोटिद्वन्द्वक्वणितभणिताभीतिवचसो-
र्विनम्रं कामाक्ष्या विसृमरमहःपाटलितयोः ।
क्षणं विन्यासेन क्षपिततमसोर्मे ललितयोः
पुनीयान्मूर्द्धानं पुरहरपुरंध्रीचरणयोः ॥ १२ ॥

अन्वयः ॥ तुलाकोटिद्वन्द्वक्वणितभणिताभीतिवचसोर्विसृमरमहःपाटलितयोः क्षपिततमसोर्ललितयोः पुरहरपुरंध्री कामाक्ष्याः चरणयोः क्षणं विन्यासेन मे विनम्रं मूर्द्धानं पुनीयात् ॥१२॥

टीका ॥ तुलाकोट्योर्माञ्जीरयोर्द्वन्द्वं युगलं तस्य क्वणितं शब्दितं तदेव भणितं कथितं अभीतिरूपं वचो याभ्यां तौ तथाविधौ तयोः विसृमरं च तन्महश्च तथोक्तं तेन पाटलौ जातौ यौ तौ पाटलितौ श्वेतरक्तौ "श्वेतरक्तस्तु पाटलः" इत्यमरः । तयोः पुरहरस्य शिवस्य पुरं शरीरं चतुर्दशभुवनात्मिका राजधानी वा ध्रियते यया सा। यद्वा पुरहरपुरं श्रीचक्रात्मकम् । "श्रीचक्रं शिवयोर्वपुः" इति शास्त्रात्। ध्रियते यया सा "निरञ्जनस्य देवस्य नामरूपविधायिनी" इतिशास्त्रात्। पुनः "कामेश्वरप्राणनाडीकामेश्वरप्राणनाथा" इति ब्रह्माण्डपुराणोक्तत्रिशत्युक्तनामप्रामाण्यात् पुरहरपुरंध्रीत्यत्र सुपांसुलुगित्यनेन षष्ठ्या लुका परमे व्योमनितिवत् तस्याः श्रीकामाक्ष्याश्चरणयोः क्षणं किंचित्कालं विन्यासेन स्थापनेन मे मम विनम्रं प्रणतं मूर्द्धानं मस्तकं पुनीयात् पवित्रीकरोत्वित्यर्थः ॥ १२ ॥

भवानि द्रुह्येतां भवनिविडितेभ्यो मम मुहु-
स्तमोव्यामोहेभ्यस्तव जननि कामाक्षि चरणौ ।

यथोर्लाक्षाबिन्दुस्फुरणदशया धूर्जटिजटा—
कुटीरा शोणाङ्कं वहति वपुरेणाङ्ककलिका ॥ १३ ॥

अन्वयः ॥ हे भवानि ! हे जननि ! हे कामाक्षि ! तव चरणौ मम भवनिबिडितेभ्यस्तमोव्यामोहेभ्यो मुहुर्द्रुह्येतां ययोर्लाक्षाविन्दुस्फुरणदशया धूर्जटिजटाकुटीरा एणाङ्ककलिका शोणाङ्कं वपुर्वहति ॥ १३ ॥

टीका ॥ भवत्यस्माज्जगत् भोगमोक्षौ वा इति भवः। भवति सर्वकाले सर्वदेशे यः स वा भवः शिवः तस्य स्त्री तथोक्ता तत्संबुद्धौ हे भवानि! हे परब्रह्ममहिषि! हे जगज्जननि! हे कामाक्षि! "एको न रमते पतिश्च पत्नी च" इति श्रुतिभ्यां परब्रह्मैव स्वतन्त्रतया क्रीडनाय शिवशक्त्यात्मकं दिव्यदंपतिरूपमभूदतो हे परब्रह्मरूपिणि! तव चरणौ मम तमसाऽज्ञानेन विशेषेण आसमन्तान्मोहा अनेकविधा अहंताममतात्मकास्तेभ्यः। किंरूपेभ्यः। भवे निबिडिताः संकलितास्तेभ्यः मुहुर्वारंवारं द्रुह्येतां युध्येतां नाशयेतां इति यावत्। ययोश्चरणयोः संबन्धी लाक्षाया अलक्तकस्य यो बिन्दुः स रतिसमये अतिप्रेमवशतया शिवेन स्वललाटे स्वयं धृतः। यद्वा श्रीमतीचरणारविन्दस्पर्शातिसुखेप्सुः शिवः सापराधः स्वयं भूत्वा स्वशिरसि चरणाहतिं कारितवान्। तत् सौन्दर्यलहर्यामुक्तम् "मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं ललाटे भर्तारं चरणयुगले ताडयति ते। चिरादन्तःशल्यं दहनकृतमुन्मीलितवता तुलाकोटिक्वाणैः किलकिलितमीशानरिपुणा" इति। यद्वा रतौ प्रेमकलहे स्वयं श्रीमत्या कृतं चरणलग्नालक्तकबिन्दुचिह्नं तस्य स्फुरणदशया प्रकाशावस्थया धूर्जटिजटाकुटीरा धूर्जटिः शिवः तस्य जटा सा एव कुटीर आलयो यस्याः सा तथाविधा एणाङ्ककलिका एणो मृगस्तद्रूपः श्यामवर्णोङ्को यस्यां सा तथोक्ता सा चासौ कलिका च तथाविधा अर्धचन्द्रस्य कलिकाऽकारत्वात्कलिका इति उक्तिः सा। शोणं रक्तं चिह्नं यस्मिंस्तत्तादृशं वपुः शरीरं वहति धरतीत्यर्थः। श्यामाङ्कं मलिनाङ्कं हित्वानयापि रागवद्वपुर्धृतमिति भावः ॥ १३ ॥

पवित्रीकुर्युर्नः पदतलभुवः पाटलरुचः
परागास्ते पापप्रशमनधुरीणास्तव शिवे ॥
कणं लब्धुं येषां निजशिरसि कामाक्षि नियतं
वदन्तो व्यातन्वन्त्यहमहमिकां वासवमुखाः ॥ १४ ॥

अन्वयः ॥ हे शिवे हे कामाक्षि तवपदतलभुवः पाटलरुचः परागाः पापप्रशमनधुरीणास्ते नः अस्मान्नियतं पवित्रीकुर्युः येषां कणं निजशिरसि लब्धुं वासवमुखा अहमहमिकां वदन्तः व्यातन्वन्ति ॥ १४ ॥

टीका ॥ हे शिवे कल्याणरूपे! हे कामाक्षि! तवपदतलभूर्भूमिर्येषां ते तथोक्ताः पाटलरुचः

श्वेतरक्तकान्तयः चरणारविन्दयोः रक्तकान्तिस्तन्नखानां श्वेतकान्तिस्तयोर्मिश्रत्वेनपाटला रुचो दीप्तयो येषां ते तादृशाः पापानां कायिकवाचिकमानसानां प्रशमने नाशने धुरीणा अग्रगण्याः परागाः चरणारविन्दरजांसि ते नोऽस्मान् पवित्रीकुर्युः येषां परागणां कणं निजशिरसि लब्धुं वासव इन्द्रो मुखो मुख्यो मुखेऽग्रे वा येषां ते तथोक्ताः शक्रादयो देवा नियतं निश्चितं अभिवादनं कुर्वन्तः अहमहमिकां अहंपूर्वं शिरसि दधे अहं पूर्वं शिरसि धारयामीप्सीतिरूपां वाणीं विशेषेण समन्तात्तन्वन्ति विस्तारयन्तीत्यर्थः ॥ १४ ॥

बलाकामालाभिर्नखरुचिमयीभिः परिवृते
विनम्रस्वर्नारीविकचकचकालाम्बुदकुले ॥
स्फुरन्तः कामाक्षि स्फुटदलितबन्धूकसुहृद—
स्तडिल्लेखायन्ते तव चरणपाथोजकिरणाः॥ १५ ॥

अन्वयः ॥ हे कामाक्षि ! बलाकामालाभिर्नखरुचिमयीभिः परिवृते विनम्रस्वर्नारीविकचकचकालाम्बुदकुले स्फुरन्तः स्फुटदलितबन्धूकसुहृदस्तवचरणपाथोजकिरणास्तडिल्लेखायन्ते ॥ १५ ॥

टीका ॥ हे कामाक्षि ! बलाकानां विषकन्ठिकानां बकीनां मालाभिः पंक्तिभिर्नखानां या रुचयः तन्मयीभिः परि समन्ताद्वृते आवृते विनम्राश्चरणयोः पतिताः स्वर्नार्य्यस्तासां विशिष्टा ललाटोपरि द्विधा स्थापिताः तथोक्तास्तैर्युक्तः कचाः यद्वा विकचाः विगतं कचं बन्धो येषां ते तादृशास्तएव कालाम्बुदाः सजलजलदास्तेषां कुले समूहे स्फुरन्तः प्रकाशमानाः स्फुटानि प्रकटानि तान्येव दलितानि विकसितानि बन्धूकवृक्षस्य पुष्पाणि तेषां सुहृदो मित्राणि तव चरणे च ते पाथोजे कमले तथोक्ते तयोः किरणाः तडिल्लेखा विद्युद्रेखा इवाचरन्तीति तडिल्लेखायन्त इत्यर्थः ॥ १९ ॥

सरागः सद्वेषः प्रसृमररजस्कः प्रतिदिनं
निसर्गादाक्रामद्विबुधजनमूर्द्धानमधिकम् ॥
कथंकारं मातः कथय पदपद्मस्तव सतां
नतानां कामाक्षि प्रकटयति कैवल्यसरणिम् ॥ १६ ॥

अन्वयः ॥ हे कामाक्षि ! हे मातः ! सरागः सद्वेषः प्रसृमररजस्कस्तव पदपद्मो विबुधजनमूर्द्धानमधिकं यथा भवति तथा प्रतिदिनं निसर्गादाक्रामत् नतानां सतां कैवल्यसरणिं कथंकारं प्रकटयति इति कथय त्वमिति शेषः ॥ १६ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! रागेण सह वर्त्तत इति सरागः सरक्तः सानुरागश्च सन् श्रेष्ठो वेषो यस्य सः । यद्वा द्वेषेण वैरेण सह वर्त्तत इति सद्वेषः प्रसृमरं विस्तृतं रजः परागो

पद्मः पदकमलं प्रतिदिनं नित्यं विबुधजनानां देवानां पण्डितानां च मूर्द्धानं मस्तकं निसर्गात्स्व-भावादधिकं यथा भवति तथाऽऽसमन्तात् अक्रामत् अगच्छत् अपीडयच्च। हे मातर्नमस्कुर्वतां सतां कैवल्यस्य मोक्षस्य सरणिं मार्गं कथंकारं केन प्रकारेण प्रकटयाति इति कथय। त्वमितिशेषः। एतच्चित्रमिति भावः॥ १६॥

जपालक्ष्मीशोणो जननि परमज्ञाननलिनी-
विकासव्यासङ्गो विफलितजगज्जाड्यगरिमा॥
मनःपूर्वाद्रिं नस्तिलकयतु कामाक्षि तरसा.
तमस्काण्डद्रोही तव चरणपाथोजरमणः॥ १७॥

अन्वयः॥ हे कामाक्षि! जननि! जपालक्ष्मीशोणः परमज्ञाननलिनीविकासव्यासङ्गः विफलितजगज्जाड्यगरिमा तमस्काण्डद्रोही तव चरणपाथोजरमणो नो मनःपूर्वाद्रिं तिलकयतु॥ १७॥

टीका॥ हे कामाक्षि! हे जननि! जपापुष्पस्य ओडारव्यस्य रक्तपुष्पस्य या लक्ष्मीः शोभा तद्वच्छोणस्तथोक्तः। परमं च तज्ज्ञानं ब्रह्मविषयकं च तथोक्तं तदेव नलिनी कमलिनी तस्या विकाशः तस्य विशेषेणासमन्तात्सङ्गः संयोगो विशेषासक्तिर्यस्मात् स तथाविधः। विफलितो निष्फलितो जगतो जाड्यस्य गरिमा गुरुत्वं येन सः तथाविधः। तमसोऽज्ञानस्य काण्डः समूहस्तस्य द्रोहोऽस्यास्तीति स ईदृक् पूर्वोक्तसंबन्धी तव चरण एव पाथोजरमणः कमलानां सरोजानां भक्तानां हृदयकमलस्य वा रञ्जकः उदयकारी सूर्यः नोऽस्माकं मन एव पूर्वाद्रिः उदयाचलस्तं तिलकयतु अलंकरोतु मनस्युदयभवनेन तत्सुशोभितं करोत्वित्यर्थः॥ १७॥

नमस्कुर्मः प्रेङ्खन्मणिकटकनीलोपलमहः-
पयोधौ रिङ्खद्भिर्नखकिरणफेनैर्धवलिते॥
स्फुटं कुर्वाणाय प्रबलचलदौर्वानलशिखा-
वितर्कं कामाक्ष्याः सततमरुणिम्ने स्पृहयते॥ १८॥

अन्वयः॥ प्रेङ्खन्मणिकटकनीलोपलमहःपयोधौ रिङ्खद्भिर्नखकिरणफेनैर्धवलिते प्रबलचलदौर्वानलशिखावितर्कं स्फुटं कुर्वाणाय कामाक्ष्याश्चरणयोररुणिम्ने सततं स्पृहयते॥ १८॥

टीका॥ प्रेङ्खन्तौ प्रचलन्तौ मणिभिर्युक्तौ कटकौ तथोक्तौ तयोर्ये नीलोपलाः नीलरत्नानि तेषां यन्महस्तदेव पयोधिः समुद्रस्तस्मिन् रिङ्खद्भिः शनैः सर्पद्भिर्नखकिरणाश्च ते फेनाश्च तथोक्तास्तैर्धवलिते श्वेतीकृते प्रबलाश्चलन्त्य और्वानलस्य वडवानलस्य याः शिखास्तासां वितर्कं विशेषेण संभावनां स्फुटं प्रकटं यथा भवति तथा कुर्वाणाय कामाक्ष्या जगदीश्वर्या-

श्चरणयोः अरुणिम्ने लौहित्याय स्पृहयत इच्छति । रागलौहित्ययोरैक्यात् रागं स्नेहं वा । "स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा । लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावनम्" इति तन्त्रराजवचनात् । विश्वविग्रहा ललिता देवता स्वात्मैव तद्विमर्शो देवीनिष्ठं लौहित्यमिति भावनरूपोपास्तिः, अत ईदृग्रूपं लौहित्यं चरणविमर्श एव । वाञ्छतीत्यर्थः । अयं जन इति शेषः ॥१८॥

शिवे पाशायेतामलघुनि तमःकूपकुहरे
दिनाधीशायेतां मम हृदयपाथोजविपिने ।
नभोमासायेतां सरसकवितारीतिसरिति
त्वदीयौ कामाक्षि प्रसृतकिरणौ देवि चरणौ ॥ १९ ॥

अन्वयः ॥ हे देवि ! त्वदीयौ प्रसृतकिरणौ चरणौ अलघुनि तमःकूपकुहरे पाशायेताम् । हे कामाक्षि ! मम हृदयपाथोजविपिने दिनाधीशायेताम् । हे शिवे ! सरसकवितारीतिसरिति नभोमासायेताम् ॥ १९ ॥

टीका ॥ हे देवि द्योतनशीले ! तव इमौ त्वदीयौ प्रसृताः किरणा ययोस्तौ चरणौ न लघु अलघु तस्मिन् अलघुनि तमःकूपकुहरे तमस्तमोगुणः अन्धकारश्च तदेव कूपरूपं कुहरं छिद्रम् । तमःकूपकुहरे इति पाठे तमसा रचितगर्तं तस्मिन् पाशौ इव आचरेतां इति पाशायेताम् । मां तमःकूपात्तत्र चरणौ निष्कासयेतामित्यर्थः । हे शिवे ! हे कल्याणि ! हृदयमेव पाथोजं कमलं तस्य विपिने वने । हृदयपाथोजस्य एकत्वेऽपि तत्पत्राणां बाहुल्यात् विपिनमित्युक्तिः । दिनाधीशः सूर्य इवाऽऽचरेतां इति दिनाधीशायेतां मम हृदयकमलं प्रफुल्लितं कुर्वातामिति भावः । हे कामाक्षि ! कामे कामेश्वरे अक्षिणी नेत्रे यस्याः सा तथोक्ता तत्संबुद्धौ हे कामाक्षि ! सरसकवितारीतिसरिति रसा नवरसाः शृङ्गारादयस्तैः सह वर्त्तमाना । यद्वा बहुविधश्चातुर्यरूपो रसस्तेन सह वर्त्तमाना सरसा सा चासौ कविता च तथोक्ता तस्या या रीतिः परिपाटी सैव सरिन्नदी तस्यां नभोमासायेताम् । मम सरसकवितारीतिसरिद्बहुली करणे श्रावणमासरूपौ तव चरणौ भवेतामिति भावः ॥ १९ ॥

निषिक्तं श्रुत्यन्ते नयनमिव सद्वृत्तरुचिरैः
समैर्जुष्टं शुद्धैरधरमिव रम्यैर्द्विजगणैः ॥
शिवे वक्षोजन्मद्वितयमिव मुक्ताश्रितमुमे
त्वदीयं कामाक्षि प्रणतशरणं नौमि चरणम् ॥ २० ॥

अन्वयः ॥ हे शिवे ! हे उमे ! श्रुत्यन्ते निषिक्तं नयनमिव सद्वृत्तरुचिरैः समैः शुद्धैः रम्यैर्द्विजगणैर्जुष्टं अधरमिव मुक्ताश्रितं वक्षोजन्मद्वितयमिव प्रणतशरणं त्वदीयं चरणं नौमि ॥ २० ॥

टीका ॥ हे शिवे ! हे कल्याणरूपे ! हे उमे ! उः शंभुः तस्य मा लक्ष्मीः शोभा वा त-

रसंबुद्धौ हे तादृशे। प्रणतशरणं ते तव चरणं अहं नौमि। कीदृशं चरणम्। श्रुत्यन्ते निषिक्तं नयनमिव श्रुतीनां वेदानां कर्णयोश्च अन्ते पारे उपनिषदि समीपे च निषिक्तं स्थितं नयनमिव लोचनमिव श्रुतिशब्देन श्लिष्टेन कर्णौ अन्तशब्देन समीपं च गृहीत्वा श्रुत्यन्ते स्थितत्वात् नयनमिवेत्युपमा चरणस्य। पुनः कीदृशं चरणम्। द्विजगणैर्जुष्टं मातृमौञ्जीभ्यां जायन्ते इति द्विजाः मुख्यतो ब्राह्मणा ऋषय इति यावत्। "सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः। आदिशक्तिमुपासन्ते गायत्रीं वेदमातरम्" इत्युक्तत्वात्। ब्राह्मणानां मुख्यतया गायत्र्याराधनस्य शास्त्रे विहितत्वात्। साधारण्यात्त्रैवर्णिका वा द्विजाः। सर्वेषामपि मुख्य-तया श्रीमत्याः चरणस्यैवाराध्यत्वेन शास्त्रे प्रतिपादितत्वात्, तेषां गणैः समूहैर्जुष्टं सेवितम्। द्विर्जायन्ते इति द्विजा दन्तास्तेषामपि द्वात्रिंशत्त्वात्। तेषां गणैर्युक्तं सेवितं वा। अधरमिव ओष्ठमिव। कीदृशैर्द्विजगणैर्ब्राह्मणसमूहैः। सद्वृत्तरुचिरैः सतां यद्वृत्तं वर्त्तनमाचार इति यावत्तेन रुचिरा गुणवत्त्वेन मनोहरास्तैः। कीदृशैर्द्विजगणैः दन्तसमूहैः। सद्वृत्ताः श्रेष्ठा वर्त्तुलाऽऽकाराश्च ते रुचिराश्च तथोक्तास्तैः। पु० की० द्वि० ब्राह्मणैः। समैः स्वेष्टदेवतारूपं सर्वं खल्विदं पश्यन्ति ते समाः सर्वत्र समबुद्धयस्तैः। पु० की० द्वि० दन्तसमूहैः। समैर्न्यूनाधिकरहितैः। पु० की० द्वि० ब्राह्मणैः। शुद्धैः परदेवतापादारविन्दाराधनेन शुद्धान्तःकरणैः। पु० कीदृशैर्दन्तसमूहैः। शुद्धैः शुक्लैः प्रकाशवद्भिः। पु० की० द्वि० ब्राह्मणैः। रम्यैः पूर्वोक्तगुणविशिष्टत्वाद्रमणीयैः। दन्तप-क्षेपि स एवार्थः। द्विजशब्देन श्लिष्टेन दन्तान् गृहीत्वा तत्सेवितत्वात् अधरमिवेत्युपमा चरणस्य। पुनःकीदृग्विधं चरणम्। मुक्ताश्रितं मुक्तैः कर्मबन्धशून्यैराश्रितं स्वात्मत्वेन शरणीकृतम्। मुक्ता-श्रितं मुक्ताफलाश्रितं च। वक्षोजन्मद्वितयमिव वक्षसि जातौ वक्षोजौ कुचौ तयोर्द्वितयं युगलमिव। मुक्ताश्रितमित्युक्त्या मुक्ताफलानि गृहीत्वा तैराश्रितमित्युक्त्या कुचयुगमिवेत्युपमा च-रणस्येत्यर्थः॥ २०॥

नमस्या संसज्जन्नमुचिपरिपन्थिप्रणयिनी—
निसर्गप्रेङ्खोलत्कुरलकुलकालाहिशबले।
नखच्छायादुग्धोदधिपयसि ते वैद्रुमरुचां
प्रचारं कामाक्षि प्रकटयति पादाब्जसुषमा॥ २१॥

अन्वयः॥ हे कामाक्षि! संसज्जन्नमुचिपरिपन्थिप्रणयिनीनिसर्गप्रेङ्खोलत्कुरलकुलकालाहि-शबले नखच्छायादुग्धोदधिपयसि नमस्या ते पादाब्जसुषमा वैद्रुमरुचां प्रचारं प्रकट-यति॥ २१॥

टीका॥ हे कामाक्षि! सं सम्यक् सज्जन् सावधानः सन् बद्धपरिकर इति यावत्। नमु-चिर्नाम दैत्यस्तस्य परिपन्थी शत्रुरिन्द्रस्तस्मिन्प्रणयः स्नेहोऽस्या अस्तीति तथोक्ता इन्द्राणी

तस्या निसर्गात्स्वभावात्प्रेङ्खोलन्तः प्रचलन्तो नमस्कारकरणसमये आन्दोलन्तो ये कुरलाः केशास्तेषां कुलानि समूहास्तान्येव कालाहयः कृष्णसर्पास्तैः शबले श्यामश्वेतवर्णमिश्रिते नखानां या छाया कान्तिः सैव दुग्धोदधिः क्षीरसमुद्रस्तस्य पयस्तस्मिन्। सर्वेषां देवादीनां नमस्कर्त्तुं योग्या नमस्या पूज्या ते तव पादाब्जयोश्चरणकमलयोः सुषमा शोभा वैद्रुमरुचां प्रवालशोभानां प्रचारं गतिं प्राप्तिं विस्तारं वा प्रकटयति उद्भावयतीत्यर्थः ॥ २१ ॥

कदा दूरीकर्तुं कटुदुरितकाकोलजनितं
महान्तं संतापं मदनपरिपन्थिप्रियतमे ॥
क्षणात्ते कामाक्षि त्रिभुवनपरीतापहरणे
पटीयांसं लप्स्ये पदकमलसेवामृतरसम् ॥ २२ ॥

अन्वयः ॥ हे मदनपरिपन्थिप्रियतमे! हे कामाक्षि! कटुदुरितकाकोलजनितं महान्तं संतापं क्षणाद्दूरीकर्तुं त्रिभुवनपरीतापहरणे पटीयांसं तव पदकमलसेवामृतरसं कदा लप्स्ये। अहमिति शेषः ॥ २२ ॥

टीका ॥ हे मदनपरिपन्थिप्रियतमे! हे कामाक्षि! कटुदुरितं दूषणरूपं पापं परिणामे तस्याप्रियत्वाद्दुःखदत्वात्। तदेव काकोलं विषं तस्माज्जातं महान्तं संतापं बहुलं खेदं क्षणाद्दूरीकर्तुं झटिति नाशयितुं त्रिभुवनानां परीतापहरणे पटीयांसं अतिप्रवीणं ते तव पदकमलयोः सेवा शिवशास्त्रोक्ता श्रीचक्रार्चा तत्संबन्ध्यमृतरसं श्रीपात्रावशेषजलामृतं परमानन्दप्रदम्। यद्वा सेवा जपध्यानादिरूपा तयोद्भूतममृतं ब्रह्मानन्दं तव स्वरूपानन्दं तदेव रसं "रसो वै सः। रसमेवायं लब्ध्वानन्दी भवति" इति श्रुतिभ्याम्। यद्वा स्वरूपाङ्गभूतं चरणकमलं तस्य सेवाकरलालनादिरूपा गन्धपुष्पाद्यर्पणरूपा वा। यद्वा पदकमलं प्रकाशविमर्शसामरस्यनिर्वाणाख्यं तस्य सेवा पुनःपुनर्मज्जनरूपा सैवामृतरसस्तमहं कदा लप्स्ये प्राप्स्यामीत्यर्थः ॥ २२ ॥

ययोः सांध्यं रोचिः सततमरुणिम्ने स्पृहयते
ययोश्चान्द्री कान्तिः परिपतति दृष्ट्वा नखरुचिम् ॥
ययोः पाकोद्रेकं पिपठिषति भक्त्या किसलयं
म्रदिम्नः कामाक्ष्या मनसि चरणौ तौ तनुमहे ॥ २३ ॥

अन्वयः ॥ सांध्यं रोचिर्ययोः अरुणिम्ने सततं स्पृहयते चान्द्री कान्तिर्ययोर्नखरुचिं दृष्ट्वा परिपतति ययोर्म्रदिम्नः पाकोद्रेकं प्रति भक्त्या किसलयं पिपठिषति तौ कामाक्ष्याश्चरणौ मनसि तनुमहे ॥ २३ ॥

टीका ॥ संध्यायां भवं सांध्यं रोचिर्दीप्तिर्ययोः कामाक्ष्याश्चरणयोः अरुणिम्ने लौहित्याय स्पृहयते। एतादृशोऽरुणिमा ममापि चेद्भवेत्तर्हि कृतकृत्यः स्याम् । चन्द्रस्येयं चान्द्री कान्तिः स्वतोऽतिसौन्दर्यवती ययोर्नखरुचिं दृष्ट्वा व्याकुला सती परितः अभितो यत्र तत्र पतति । किसलयं भक्त्या ययोर्म्रदिम्नः कोमलतायाः पाकस्य परिपाकस्य उद्रेकं आधिक्यं पठितुमिच्छतीति पिपठिषति तौ चरणौ मनसि तनुमहे ध्यानेन धारयाम इत्यर्थः । वयमिति शेषः ॥ २३ ॥

जगन्नेदं नेदं परमिति परित्यज्य यतिभिः
कुशाग्रीयस्वान्तैः कुशलधिषणैः शास्त्रसरणौ ॥
गवेष्यं कामाक्षि ध्रुवमकृतकानां गिरिसुते
गिरामैदंपर्यं तव चरणमाहात्म्यगरिमा ॥ २४ ॥

अन्वयः ॥ हे गिरिसुते! हे कामाक्षि ! कुशाग्रीयस्वान्तैः कुशलधिषणैर्यतिभिर्जगन्नेदं नेदं इति कृत्वा परं परित्यज्य शास्त्रसरणौ अकृतकानां गिरामैदंपर्यं ध्रुवं गवेष्यं यत्तत्तव चरणमाहात्म्यगरिमा ॥ २४ ॥

टीका ॥ हे गिरिसुते ! हे कामाक्षि ! कुशला धिषणा येषां ते तथोक्तास्तैर्निपुणबुद्धिभिः कुशाग्रीयाणीव स्वान्तानि येषां ते तथोक्तास्तैरतितीक्ष्णमानसैर्यतिभिर्जितेन्द्रियमनोभिः "इदं जगन्न, इदं जगन्न" इति मनसि कृत्वा परमग्रे परित्यज्य कैरपि न कृता अकृता अकृता एवाकृतकास्तासां ईश्वरश्वासरूपवेदानां गिरां वाणीनां इदं परस्य भाव ऐदंपर्यं तात्पर्यं सर्वतः परं ध्रुवं निश्चयेन शास्त्रमार्गे यद्गवेष्यमन्वेष्यं वस्तु तत् तव चरणमाहात्म्यगरिमा। यद्वेदसिद्धान्तरूपं शुद्धबुद्धिभिस्तुर्याश्रमस्थैर्मृग्यं तत् तव चरणमाहात्म्यगुरुतेत्यर्थः ॥ २४ ॥

कृतस्नानं शास्त्रामृतसरसि कामाक्षि नितरा
दधानं वैशद्यं कलितरसमानन्दसुधया ॥
अलंकारं भूमेर्मुनिजनमनश्चिन्मयमहा—
पयोधेरन्तःस्थं तव चरणरत्नं विजयते ॥ २४ ॥

अन्वयः ॥ हे कामाक्षि ! नितरां वैशद्यं दधानं आनन्दसुधया कलितरसं शास्त्रामृतसरसि कृतस्नानं भूमेरलंकारं मुनिजनमनश्चिन्मयमहापयोधेरन्तःस्थं तव चरणरत्नं विजयते ॥ २५ ॥

टीका ॥ हे कामाक्षि ! नितरां नित्यं विशदस्य भावो वैशद्यमौज्ज्वल्यं दधानं धारयत् आनन्दो ब्रह्मानन्द एव सुधाऽमृतं तया कलितो रचितो रसो यस्मिंस्तत् । शास्त्रमुपासनाशास्त्रं योगशास्त्रं वा। ब्रह्मविद्यात्मकं शास्त्रं वा। तदेवाऽमृतं श्रीमत्याः स्वरूपज्ञानेनाऽजराऽमरत्वप्राप्तेः परमानन्दप्राप्त्याश्च । यद्वा सर्वशास्त्रं तद्रूपामृतं तत्संबन्धि सरस्तस्मिन् कृतं स्नानं

मज्जनं येन तत् भूमेरलंकारं भुव आभरणं मुनयश्च ते जनाश्च मुनिजनास्तेषां मनस्तदेव चिन्मयो महांश्चासौ पयोधिस्तथोक्तस्तस्य अन्तःस्थमभ्यन्तरस्थितं ईदृशं तव कामाक्ष्याश्चरणरूपं रत्नं विशेषेण जयति सर्वोत्कर्षेण वर्तत इत्यर्थः । तदेतद्रत्नं तेषां मुनीनामथवा श्रीगुरूणां कृपयैव लभ्यमिति भावः ॥ २५ ॥

मनोगेहे मोहोद्भवतिमिरपूर्णे मम मुहु—
र्दरिद्राणीकुर्वन्दिनकरसहस्राणि किरणैः ॥
विधत्तां कामाक्षि प्रसृमरतमोवञ्चनचणः
क्षणार्द्धं सांनिध्यं चरणमणिदीपो जननि ते ॥ २६ ॥

अन्वयः । हे कामाक्षि ! हे जननि ! मम मोहोद्भवतिमिरपूर्णे मनोगेहे प्रसृमरतमोवञ्चनचणः किरणैर्मुहुर्दिनकरसहस्राणि दरिद्राणीकुर्वंस्ते चरणमणिदीपः क्षणार्द्धं सांनिध्यं विधत्ताम् ॥ २६ ॥

टीका ॥ हे कामाक्षि ! हे जननि ! मम मोहोद्भवतिमिरपूर्णे मोहः स्त्रीपुत्रादिषु प्रीतिः तस्माद्धुद्भवतीति मोहोद्भवं तदेव तिमिरमज्ञानं तेन परिपूर्णे मनोरूपे गेहे प्रसृमरं च तत्तमश्च तथोक्तं तस्य वञ्चनेन वित्त इति वञ्चनचणः । स्वकिरणैर्मुहुर्वारंवारं दिनकरस्य सूर्यस्य सहस्राणि दरिद्राणीकुर्वन् अदरिद्राणि दरिद्राणि करोति इति दरिद्राणीकुर्वन् सन् ते तव चरण एव मणिरूपो दीपः चरणमणिदीपः क्षणस्यार्द्धं सांनिध्यं विशेषेण धत्तां दधातु इत्यर्थः । एतेनैवाहं कृतकृत्यो भविष्यामीति भावः ॥ २६ ॥

कवीनां चेतोवन्नखररुचिसंपर्कि विबुध—
स्रवन्तीस्रोतोवत्पटु मुखरितं हंसकरवैः ॥
दिनारम्भश्रीवन्नियतमरुणच्छायसुभगं
मदन्तः कामाक्ष्याः स्फुरतु पदपङ्केरुहयुगम् ॥ २७ ॥

अन्वयः ॥ कवीनां चेतोवन्नखररुचिसंपर्कि विबुधस्रवन्तीस्रोतोवत् हंसकरवैः पटु मुखरितं दिनारम्भश्रीवन्नियतं अरुणच्छायसुभगं श्रीकामाक्ष्याः पदपङ्केरुहयुगं मदन्तः स्फुरतु ॥ २७ ॥

टीका ॥ कवीनां काव्यकर्तॄणां ज्ञानिनां च चेतश्चित्तं तद्वत् पुनःकीदृशम् । नखररुचिसंपर्कि नखरा नखास्तेषां या रुचयः नखराः कोमलाश्च ता रुचयो दीप्तयश्च तथोक्तास्तास्तां संपर्कः संयोगोस्त्यस्मिन्निति तादृशम् । पुनःकीदृशम् । विबुधस्रवन्तीस्रोतोवत् विबुधस्रवन्ती देवनदी गङ्गा तस्याः स्रोतस्तटस्तद्वत् । पुनः कीदृशम् । पटुमुखरितं हंसकरवैः हंसकः पादकटकः पादकङ्कणौ पादाङ्गुलीयाभरणानि वा । हंसा एव हंसका मरालाः तस्य तयोः तेषां रवैः शब्दैः

पटुमुखरितं मनोहरबहुजल्पितं दिनारम्भश्रीवत् दिनस्यारम्भः दिनारम्भो यस्माद्वा । तस्य श्रीः शोभा संपत् यथा स्यात्तथा सुनियतमरुणच्छायसुभगं नियतं नियमितं नित्यमिति यावत् । अरुणच्छाया सुभगा यस्मिन् तत्तादृशं श्रीकामाक्ष्याः पदपङ्केरुहयुगं मदन्तो ममान्तःकरणे स्फुरतु चेष्टतां क्रीडत्वित्यर्थः ॥ २७ ॥

सदा किं संपर्कः प्रकृतिकठिनैर्नाकिमुकुटै–
स्तटैर्नीहाराद्रेरधिकमणुना योगिमनसा ॥
विभिन्ते संमोहं शिशिरयति भक्तानपि दृशा–
मदृश्यं कामाक्षि प्रकटयति ते पादयुगलम् ॥ २८ ॥

अन्वयः ॥ हे कामाक्षि ! प्रकृतिकठिनैर्नाकिमुकुटैरधिकमणुना योगिमनसा सदा संपर्कः अतः किं संमोहं ते, पादयुगलं विभिन्ते नीहाराद्रेस्तटैः संपर्कोऽतः किं दृशामदृश्यं प्रकटयति भक्तांश्च किं शिशिरयतीत्यन्वयः ॥ २८ ॥

टीका ॥ हे कामाक्षि ! प्रकृत्या कठिनैः स्वभावकठोरैः कं सुखं न कं अकं दुःखं तन्न विद्यते यस्मिन्स नाकः " यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् । १ । " इत्युक्तलक्षणः सर्वदुःखशून्यः स्वर्गः स्थानत्वेनास्त्येषां ते नाकिनो देवास्तेषां मुकुटैः अधिकं यथा स्यात्तथाऽणुना अतिसूक्ष्मेण योगिनां मनसा सह संपर्कः संयोगो नीहाराद्रेर्हिमगिरेस्तटैस्तन्मध्यदेशैः सह संपर्कः । अतस्ते तव पादयुगलं संमोहं किं विभिन्ते विशेषेण भिनत्ति दृशां किं अदृश्यं अप्राकाश्यं प्रकटयति भक्तांश्च किं शिशिरयति शीतलयति नाकिमुकुटैः कठोरैर्योगिमनसा अतितीक्ष्णेन सह संपर्कात्संमोहं भिनत्ति हिमगिरेः सदा संपर्कः संयोगस्तादृशां अदृश्यं प्रकटयति भक्तांश्च शिशिरयति शीतलयतीत्यर्थः ॥ २८ ॥

पवित्राभ्यामम्ब प्रकृतिमृदुलाभ्यां तव शिवे
पदाभ्यां कामाक्षि प्रसभमभिभूतैः सचकितैः ॥
प्रवालैरम्भोजैरपि च वनवासव्रतदशाः
सदैवारभ्यन्ते परिचरितनानाद्विजगणैः ॥ २९ ॥

अन्वयः ॥ हे अम्ब ! हे शिवे ! हे कामाक्षि ! पवित्राभ्यां प्रकृतिमृदुलाभ्यां तव पदाभ्यां प्रसभं हठात्कारेण यथा भवति तथाऽभिभूतैः सचकितैः परिचरितनानाद्विजगणैः प्रवालैश्चाम्भोजैरपि वनवासव्रतदशाः सदैवारभ्यन्ते ॥ २९ ॥

टीका ॥ हे अम्ब ! हे शिवे ! हे कामाक्षि ! पवित्राभ्यां प्रकृत्या स्वभावेन मृदुलाभ्यां कोमलाभ्यां तव पदाभ्यां कर्तृभ्यां प्रसभं बलात्कारेण अभिभूतैस्तिरस्कृतैः अत एव सचकितैः दिङ्मूढैः परितोऽभितश्चरिताश्चलिताः प्राप्ता इति यावत् । नानाऽनेका द्विजगणाः पक्षि-

समूहा ब्राह्मणसङ्घाश्च येषां तैः प्रवालैः पल्लवैश्च पुनरम्भोजै रक्तकमलैर्वने वासरूपं व्रतं वनवासेन युक्तं वा व्रतं येषां तेषां दशा अवस्थाः सदा सर्वस्मिन्काले आरभ्यन्ते आरक्तकोमलकान्त्यतिसुन्दरभक्ताभीष्टप्रदानशौण्डीराभ्यां श्रीमत्याः पादाभ्यां तिरस्कृतास्ते प्रवालादयः गतश्रियो गतकान्तयो भूत्वा लज्जिताः सन्तः " सतां माने म्लाने मरणमथवा दूरगमनम् " इति न्यायेन परिचारितनानाद्विजगणाः वनवासव्रतदशाः स्वकल्याणोदयाय आरभ्यन्ते । स्थलजलवृक्षेषु तपश्चर्यां नित्यं कुर्वन्तीति भावः ॥ २९ ॥ भन्ते

मरालीनां पादाहतिमदनिशं हंसनिवहै—
र्नमस्यं निर्जाड्यं नियतजलमध्यैकशरणम् ॥
अदोषव्यासङ्गं सततमपि दोषाप्तिमलिनं
पयोजं कामाक्ष्याः परिहसति पादाब्जयुगलम् ॥ ३० ॥

अन्वयः ॥ अनिशं मरालीनां पादाहतिमत् नियतजलमध्यैकशरणं सततमपि दोषाप्तिमलिनं पयोजं(प्रति)कामाक्ष्याः हंसनिवहैर्नमस्यं निर्जाड्यं अदोषव्यासङ्गं पादाब्जयुगलं परिहसति ॥ ३० ॥

टीका ॥ अनिशं प्रत्यहं मरालीनां हंसीनां पादानामाहतिः समन्ताद्धननमस्यास्तीति तथोक्तं नियतं निश्चितं च तज्जलमध्यैकशरणं च तथोक्तं, डलयोरैक्याज्जडमध्यं जडसमाज एक एव शरणं आश्रयो यस्य तथोक्तं, दोषाया रात्रेर्दोषाणां पापानां चाऽऽप्त्या प्राप्त्या मलिनं संकोचगतं गतश्रीकमिति यावत् । पयो जलं तस्मिञ्जातं पयोजं कमलं प्रति हंसनिवहैः हंसानां पादकटकानां हंसानां परमहंसानां च । यद्वा " हंसो गणेशो विधिरेव हंसो हंसोहरिर्हंसमयश्च शंभुः । हंसो हि जीवः परमात्महंसो हंसो गुरुर्हंसमयं च सर्वम् " इतितन्त्रवचनप्रामाण्येन एतच्छ्लोकोक्तदेवानां च हंसानां मरालानां च निवहैः समूहैः नमस्यं नमस्कर्तुं योग्यं निर्गतो जडस्य भावो यस्मात्तत्तथाविधं चैतन्यरूपमित्यर्थः । न दोषा अध्यात्माऽधिभूताऽधिदैवजाश्च विद्यन्ते यस्य स अदोषः शिवः कल्याणरूपस्तस्य । दोषाः कामक्रोधादयो वा न विद्यन्ते येषां तेषां मुनीनां भक्तानां वा । विशेषेण आसमन्तात्सङ्गो यस्य तत्तथाविधम् । यद्वा अदोषाः सामुद्रिकोक्ता ध्वजोर्ध्वरेखादयो गुणा आरक्तकोमलाविरलसरलदीर्घाङ्गुलिपृष्ठोच्चा रक्तनखगूढगुल्फमांसलादयो गुणा वा । तेषां व्यासङ्गः विशेषेणाऽऽ समन्तात्संबन्धो यस्य तत् तथोक्तं कामाक्ष्याः पादयोर्युगलं युग्मं कर्तृरूपं पयोजं परिहसति पयोजस्य तिरस्कारं करोतीत्यर्थः । पदकमलेनाऽसदृशं पयोजं सादृश्यं कर्तुमुद्यत्तपोऽर्थे जले वसद्धंसीनां पादाहतिं सहमानं पयोजं प्रति पदयुगं परिहसति । तपआचरणेनापि मत्तुल्यं तु सर्वथाद्यावधि नैव जातमग्रेऽपि न भविष्यसीति भावः ॥ ३० ॥

सुराणामानन्दप्रबलनतया मण्डनतया
नखेन्दुज्योत्स्नाभिर्विसृमरतमःखण्डनतया ॥
पयोजश्रीद्वेषव्रतरततया त्वच्चरणयो-
र्विलासः कामाक्षि प्रकटयति नैशाकरदशाम् ॥ ३१ ॥

अन्वयः ॥ हे कामाक्षि ! सुराणां आनन्दप्रबलनतया मण्डनतया नखेन्दुज्योत्स्नाभिर्विसृमरतमःखण्डनतया पयोजश्रीद्वेषव्रतरततया त्वच्चरणयोर्विलासो नैशाकरदशां प्रकटयति ॥३१॥

टीका ॥ हे कामाक्षि ! सुराणां देवानां आनन्दस्य प्रबलनस्य प्रवर्द्धनस्य भावः प्रबलन ॥ तया तेषामेव सुराणां रुद्रादीनां मण्डनस्य भावो मण्डनता रुद्रादीनां प्रार्थनया तेषां शिरःसु स्थितभवनेन तेषां शोभाकारकता तया । नखा एव इन्दवस्तेषां या ज्योत्स्नाः कान्तयस्ताभिर्विसृमरं विस्तरणशीलं यत्तमोन्धकारस्तस्य यत्खण्डनं विनाशनं तस्य भावस्तत्ता तया । पयोजं कमलं तस्य या श्रीः शोभा तस्यै तस्या वा द्वेषो वैरं तदर्थे यद्व्रतं तस्मिन् रतस्यासक्तस्य भावो रतता तया । त्वच्चरणयोर्विलासः निशाकरस्येयं नैशाकरी नैशाकरी चासौ दशा च तथोक्ता तां अवस्थां प्रकटयत्युद्भावयति स्फुटयतीत्यर्थः ॥ ३१ ॥

सितिम्ना कान्तीनां नखरजनुषां पादनलिन-
च्छवीनां शोणिम्ना तव जननि कामाक्षि नमने ॥
लभन्ते मन्दारग्रथितनवबन्धूककुसुम-
स्रजां सामीचीन्यं सुरपुरपुरंध्रीकचभराः ॥ ३२ ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि ! नखरजनुषां कान्तीनां सितिम्ना पादनलिनच्छवीनां शोणिम्ना सुरपुरपुरंध्रीकचभराः तव नमने मन्दारग्रथितनवबन्धूककुसुमस्रजां सामीचीन्यं लभन्ते ॥ ३२ ॥

टीका ॥ हे कामाक्षि ! हे जननि ! नखरा नखास्तेभ्यो जनुर्जन्म यासां तास्तथोक्तास्तासां दीप्तीनां सितिम्ना शुक्लतया पादावेव नलिने तयोश्छवीनां कान्तीनां शोणिम्ना रक्ततया सुराणां पुरसंबन्धिन्यो याः पुरंध्र्यस्तासां ये कचाः केशास्तेषां भरा भारास्तथोक्ता मन्दारनामको देवतरुः कल्पवृक्षस्तस्य श्वेतपुष्पैः सह ग्रथिता अन्योन्यसंबद्धा नवीनानि बन्धूकस्य पुष्पाणि तेषां याः स्रजो मालास्तासां सामीचीन्यं याथार्थ्यं श्रैष्ठ्यं चातुर्यमिति यावत् । लभन्ते प्राप्नुवन्तीत्यर्थः ॥ ३२ ॥

नखश्रीसन्नद्धस्तबकनिचितः स्वैश्च किरणैः
पिशङ्गैः कामाक्षि प्रकटितलसत्पल्लवरुचिः ॥

१५

सतां गम्यः शङ्के सकलफलदाता सुरतरु-
स्त्वदीयः पादोयं तुहिनगिरिराजन्यतनये ॥ ३३ ॥

अन्वयः ॥ हे तुहिनगिरिराजन्यतनये हे कामाक्षि नखश्रीसन्नद्धस्तवकनिचितः पिशङ्गैः स्वैश्च किरणैः प्रकटितलसत्पल्लवरुचिः सतां गम्यः सकलफलदाता अयं त्वदीयः पादः सुरतरुरिति शङ्के अहमिति शेषः ॥ ३३ ॥

टीका ॥ तुहिनगिरिर्हिमगिरिः स एव राजन्यो राजा तस्य तनया कन्या तत्संबुद्धौ हे तथोक्ते! हे कामाक्षि ! नखानां श्रियः शोभाः ता एव सन्नद्धाः सपरिकराः ते च ते स्तवकाश्च तथोक्तास्तैः प्रफुल्लितपुष्पगुच्छैर्निचितो व्याप्तः संकीर्णो वा तथोक्तः पिशङ्गैः स्वकीयैश्चरणकिरणैः प्रकटिता लसन्त्यः पल्लवानां किसलयानां रुचयो दीप्तयो यस्य यस्मिन्वा स तथाविधः सतां सत्पुरुषाणां गन्तुं योग्यः स्वसेवकेभ्यः सकलानि धर्म्मार्थकाममोक्षरूपफलानि ददातीति तथोक्तः " विष्णुः शिवः सुरज्येष्ठो मनुश्चन्द्रो धनाऽधिपः । लोपामुद्रा तथागस्त्यः स्कन्दः कुसुमसायकः । १ । सुराधीशो रौहिणेयो दत्तात्रेयो महामुनिः । दुर्वासा इति विख्याता एते मुख्या उपासकाः । २ । " इति मानसोल्लासवचनात् । सकलाः कलाभिः अमृतामानदादिभिः तपिन्यादिभिः धूम्रार्चिरादिभिश्च सृष्ट्यादिभिः पञ्चब्रह्मणः कलाभिश्च कलासामर्थ्यवेषरचनादिरूपाभिश्च सह वर्त्तमानाश्चन्द्रादयस्तेभ्यः फलदाता सकलेभ्यो देवासुरमनुष्यादिभ्यः फलं कर्मणां विपाकं सुखदुःखरूपं ईश्वरत्वेन ददातीति तथोक्तः । यद्वा ये पापिनोपि शरणागताः धर्मिणश्च तेभ्यः सकलेभ्यः स्ववात्सल्येन भोगमोक्षात्मकफलदाता; अतः अयं तव पादः सुरतरुरित्यहं शङ्के तर्कयामि ॥ ३३ ॥

स्फुरन्मध्ये शुद्धे नखकिरणदुग्धाब्धिपयसां
वहन्नब्जं चक्रं दरमपि च लेखात्मकतया ॥
श्रितो मात्स्यं रूपं श्रियमपि दधानो निरुपमां
त्रिधामा कामाक्ष्याः पदनलिननामा विजयते ॥ ३४ ॥

अन्वयः ॥ नखकिरणदुग्धाब्धिपयसां मध्ये स्फुरन् लेखात्मकतया मात्स्यं रूपं श्रितः अब्जं चक्रं दरमपि च वहन् अनुपमां श्रियं दधानः कामाक्ष्याः पदनलिननामा त्रिधामा विजयते ॥ ३४ ॥

टीका ॥ नखानां किरणा एव क्षीरसमुद्रपयांसि तेषां मध्ये शुद्धे शुक्ले स्फुरन् क्रीडन् लेखात्मकतया रेखात्मकतया देवात्मकतया च मात्स्यं मैनं रूपं शरीरं श्रितः आश्रितः सन् अब्जं चक्रं दरं शङ्खमपि च वहन् अनुपमां उपमाशून्यां श्रियं लक्ष्मीं शोभां च वहन् कामाक्ष्याः साक्षाच्छ्रीपराशक्तेः पदनलिननामा चरणकमलसंज्ञकस्त्रिधामा विष्णुर्विजयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥ ३४ ॥

वषट्कुर्वन्माञ्जीरजकलकलैः कर्मलहरी—
हवींषि प्रोद्दण्डं ज्वलति परमज्ञानदहने ॥
महीयान्कामाक्षि स्फुटमहसि जोहोति सुधियां
मनोवेद्यां मातस्तव चरणयज्वा मम सदा ॥ ३५ ॥

अन्वयः ॥ हे कामाक्षि ! हे मातः ! सुधियां मनोवेद्यां स्फुटमहसि प्रोद्दण्डं यथा स्यात्तथा ज्वलति परमज्ञानदहने माञ्जीरजकलकलैर्वषट्कुर्वन् महीयांस्तव चरणयज्वा मम कर्मलहरीः हवींषि सदा जोहोति ॥ ३५ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! सुष्ठु धीर्येषां ते सुधियस्तेषां सुबुद्धीनां मन एव वेदी तस्यां प्रकटं महस्तेजो यस्य स तथोक्तस्तस्मिन् परब्रह्मात्मके तेजसि प्रकर्षेण उद्दण्डं प्रवृद्धं यथा स्यात्तथा प्रज्वलिते प्रकाशिते परमज्ञानरूपे दहनेऽग्नौ महीयान् महांस्तव चरण एव यज्वा होता मम कर्मणां लहर्यः परंपरास्तद्रूपाणि हवींषि होतव्यद्रव्याणि मञ्जीरावेव माञ्जीरौ ताभ्यां जाता माञ्जीरजास्त एव कलकलाः कोलाहला मधुराव्यक्तशब्दास्तथोक्तास्तैर्वषट्कारं कुर्वन् सन् अतिशयेन पुनःपुनर्वा जुहोतीति जोहोति वारं वारं होमं करोतीत्यर्थः ॥ ३५ ॥

महामन्त्रं काञ्चीमणिकटकनादैरिव जपन्—
क्षिपन्दिक्षु स्वच्छं नखरुचिमयं भास्मनरजः ॥
नतानां कामाक्षि प्रकृतिपटुरुच्चाट्य ममता—
पिशाचीं पादोयं प्रकटयति ते मान्त्रिकदशाम् ॥ ३६ ॥

अन्वयः ॥ हे कामाक्षि काञ्चीमणिकटकनादैर्महामन्त्रं जपन्निव स्वच्छं नखरुचिमयं भास्मनरजः दिक्षु क्षिपन्निव ते प्रकृतिपटुः अयं पादो नतानां ममतापिशाचीं उच्चाट्य मान्त्रिकदशां प्रकटयति ॥ ३६ ॥

टीका ॥ हे कामाक्षि ! काञ्च्याः कटिमेखलाया मणीनां कटकानां नादैः शब्दैः महामन्त्रं जपन्सन्निव स्वच्छं नखानां रुचिमयं भस्मन इदं भास्मनं रजो दशदिशासु क्षिपन्सन्निव स्वभावचतुरस्ते तव अयं पादः नतानां भक्तजनानां ममता चासौ पिशाची तथोक्ता तां उच्चाट्य दूरीकृत्य मान्त्रिकदशां मन्त्रा विद्यन्ते एषां ते मान्त्रिकास्तेषां दशां प्रकटयति उद्भावयतीत्यर्थः ॥ ३६ ॥

उदीते बोधेन्दौ तमसि नितरां जग्मुषि दशां
दरिद्रां कामाक्षि प्रकटमनुरागं च दधती ।

सितेनाच्छाद्याङ्गं नखरुचिपटेनाङ्घ्रियुगली–
पुरंध्री ते मातः स्वयमभिसरत्वेव हृदयम् ॥ ३७ ॥

अन्वयः ॥ हे कामाक्षि ! हे मातः ! बोधेन्दौ उदीते सति तमसि दरिद्रां दशां जग्मुषि सति प्रकटमनुरागं च दधती सती सितेन नखरुचिपटेन अङ्गं आच्छाद्य ते अङ्घ्रियुगलीपुरंध्री मे हृदयं अभिसरतु ॥ ३७ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! ज्ञानचन्द्रोदये जाते सति तमसि अन्धकारे अज्ञाने च दरिद्रां क्षीणां दशां जग्मुषि सति प्रकटं यथा स्यात्तथाऽनुरागं स्नेहं रक्तिमानं च दधती सती नखरुचिरेव पटस्तेन सितेन श्वेतेन अङ्गमाच्छाद्य ते तव पादयुगलीरूपा पुरंध्री पुरं शरीरं गृहं च ध्रियतेऽनया सा तथोक्ता "पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता" इत्यमरकोषात् । शुक्लाभिसारिका स्वयं स्वत एव मे हृदयं हृत्कमलं प्रति नितरामभिसरतु । उदीते बोधेन्दौ तमसि क्षीणे सतीति पूर्वप्रतिपादनात् बोधस्य हृदये एव समुदयात् हृदयस्यापि शीतलोज्ज्वलप्रकाशवत्त्वात् हृदयमपि शुक्लाभिसारिकायोग्यरहोरमणस्थानमतस्तत्राभिगच्छत्वित्यर्थः ॥ ३७ ॥

दिनारम्भः सम्यङ्नलिनविपिनानामभिनवो
विकासो वासन्तः सुकविपिकलोकस्य नियतम् ॥
प्रदोषः कामाक्षि प्रकटपरमज्ञानशशिनः
चकास्ति त्वत्पादस्मरणमहिमा शैलतनये ॥ ३८ ॥

अन्वयः ॥ हे कामाक्षि ! हे शैलतनये ! नलिनविपिनानां नियतमभिनवः सम्यङ् दिनारम्भः सुकविपिकलोकस्य विकासः वासन्तः प्रकटपरमज्ञानशशिनः प्रदोषः त्वत्पादस्मरणमहिमा चकास्ति ॥ ३८ ॥

टीका ॥ हे कामाक्षि ! हे शैलतनये ! नलिनानां कमलानां विपिनानि वनानि तेषां नियतं सर्वतो नूतनः समीचीनो दिनारम्भः सूर्यः । यद्वा सूर्योदयकालः सुकविरेव पिकः कोकिलः जातित्वादेकवचनम् । तस्य वसन्तस्य अयं वासन्तः विकासः प्रकाशः कविलोकानां मधुरकवितोत्पादक इत्यर्थः । प्रकटं स्फुटं परमं अतिश्रेष्ठं ज्ञानं तद्रूपो यः शशी तस्योदयकारी प्रदोषसमयो निशामुखम् " प्रदोषोरजनीमुखम् " इति कोशात् । रात्र्यागमसमय एव चन्द्रस्योदयसंभवात् । ज्ञानोदयकारकस्तव चरणयोः स्मरणस्य महिमा महत्त्वं चकास्ति प्रकाशते । नलिनविपिनानां भक्तानां हृदयकमलानाम् । यद्वा ब्रह्मरन्ध्रसहितसप्तचक्रकमलानि तेषां प्रफुल्लने सूर्यः सुकविपिकजनस्य मधुरवाणीप्रकटने वासन्तः प्रकाशः ज्ञानरूपचन्द्रस्योदयकारी प्रदोषसमयस्तव चरणस्मरणमहिमा इत्यर्थः ॥ ३८ ॥

धृतच्छायं नित्यं सरसिरुहमैत्रीपरिचितं
निधानं दीप्तीनां निखिलजगतां बोधजनकम् ॥

मुमुक्षूणां मार्गप्रथनपटु कामाक्षि पदवीं
पदं ते पातङ्गीं परिकलयते पर्वतसुते ॥ ३९ ॥

अन्वयः ॥ हे कामाक्षि ! हे पर्वतसुते ! धृतच्छायं सरसिरुहमैत्रीपरिचितं दीप्तीनां निधानं निखिलजगतां बोधजनकं मुमुक्षूणां मार्गप्रथनपटु ते तव पदं नित्यं पातङ्गीं पदवीं परिकलयते ॥ ३९ ॥

टीका ॥ हे कामाक्षि ! हे पर्वतसुते ! धृता छाया कान्तिर्येन तत् कमलैः सह मैत्र्या परिचितं पूजितं तेजसां निधानं आधारं अशेषजगतां बोधकारकं मुमुक्षवः मुक्तीच्छवः तेषां मार्गदर्शने चतुरं ईदृशं ते तव पदं चरणः पतङ्गस्य सूर्यस्य इयं पातङ्गी तां पदवीं सूर्यसमतां परिकलयते समन्ताद्रचयति ॥ ३९ ॥

शनैस्तीर्त्वा मोहाम्बुधिमथसमारोढुमनसः
श्रमात्कैवल्याख्यां सुकृतिसुलभां सौधवलभीम् ॥
लभन्ते निःश्रेणीमिव झटिति कामाक्षि चरणं
पुरश्चर्याभिस्ते पुरमथनसीमन्तिनि जनाः ॥ ४० ॥

अन्वयः ॥ हे कामाक्षि ! हे पुरमथनसीमन्तिनि ! जनाः श्रमात्पुरश्चर्याभिर्मोहाम्बुधिं शनैस्तीर्त्वा अथ कैवल्याख्यां सुकृतिसुलभां सौधवलभीं समारोढुमनसः निःश्रेणीं इव ते चरणं झटिति लभन्ते ॥ ४० ॥

टीका ॥ हे कामाक्षि ! हे पुरमथनसीमन्तिनि ! यमनियमपूजादिश्रमात्पुरश्चर्याभिः पुरः प्राक् अग्रे चरितुं योग्याभिर्मन्त्रवर्णसमलक्षसंख्यात्मकजपरूपक्रियाभिः सपूजाभिः कलौ चतुर्गुणाभिर्जपहोमतर्पणमार्जनब्राह्मणभोजनात्मकपञ्चाङ्गोपेतमन्त्रसिद्ध्युपायरूपाभिर्मोहोऽज्ञानं तदेवाम्बुधिः समुद्रस्तं शनैर्धीरं धीरं सुखेनेत्यर्थः । तीर्त्वा केवलस्य भावः कैवल्यं तदेवाख्या नाम यस्यास्तां कैवल्यमुक्तिनामिकां सुकृतिनां सुकृतकारिणां सुलभामनायासलभ्यां प्रासादालीं समारोहणं कर्त्तुं मनो येषां ते तथोक्ताः सन्तो जनाः सुकृतिनः पुरुषाः निःश्रेणीमिव ते तव चरणं झटिति शीघ्रं लभन्ते प्राप्नुवन्तीत्यर्थः ॥ ४० ॥

प्रचण्डार्तिक्षोभप्रमथनकृते प्रातिभसरित्-
प्रवाहप्रोद्दण्डीकरणजलदाय प्रणमताम् ॥
प्रदीपाय प्रौढे भवतमसि कामाक्षि चरण-
प्रसादौन्मुख्याय स्पृहयति जनोऽयं जननि ते ॥ ४१ ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि ! प्रणमतां प्रचण्डार्तिक्षोभप्रमथनकृते प्रातिभसरित्प्रवा-

ह्प्रोद्दण्डीकरणजलदाय प्रौढे भवतमसि प्रदीपाय ते चरणप्रसादौन्मुख्यायायं जनः स्पृहयति ॥ ४१ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! नमस्कारं कुर्वतां भक्तजनानां प्रचण्डा भयानका या आर्त्तिः पीडा तया यः क्षोभोऽस्वास्थ्यं स्वभावतश्चलनं तस्य प्रकर्षेण मथनं नाशनमिति यावत् । तत्करोतीति तयोक्तस्तस्मै । प्रतिभैव प्रातिभा प्रातिभा चासौ सरिच्च सा । यद्वा प्रतिभाया इदं प्रातिभं तदेव सरिन्नदी तस्याः प्रवाहः प्रवहज्जलपरंपरा तस्य प्रोद्दण्डीकरणेऽतिशयवृद्धिकरणे जलं ददातीति जलदो मेघस्तस्मै प्रौढे महति प्रगल्भे वा संसाररूपेऽन्धकारे प्रकृष्टदीपाय, मग्नावरणप्रकाशाय उन्मुखस्य भाव औन्मुख्यं प्रसादस्यौन्मुख्यमाभिमुख्यं प्रसादौन्मुख्यं चरणस्य प्रसादौन्मुख्यं चरणप्रसादौन्मुख्यं तस्मै चरणप्रसन्नतायाः संमुखतायै अयं जनः स्पृहयति वाञ्छति ॥ ४१ ॥

मरुद्भिः संसेव्या सततमपि चाञ्चल्यरहिता
सदारुण्यं यान्ती परिणतदरिद्राणसुषमा ॥
गुणोत्कर्षान्माञ्जीरजकलकलैस्तर्जनपटुः
प्रवालं कामाक्ष्याः परिहसति सा पादयुगली ॥ ४२ ॥

अन्वयः ॥ मरुद्भिः सततं संसेव्याऽपि चाञ्चल्यरहिता सदारुण्यं यान्त्यपि परिणतदरिद्राणसुषमा गुणोत्कर्षान्माञ्जीरजकलकलैस्तर्जनपटुः सा कामाक्ष्याः पादयुगली प्रवालं परिहसति ॥ ४२ ॥

टीका ॥ एकोनपञ्चाशन्मरुद्गणैर्देवैर्वायुभिश्च निरन्तरं सम्यक् सेव्याऽपि चाञ्चल्येन रहिता धीरगमनवती वस्तुतः सत्यरूपत्वान्निश्चलरूपा आश्चर्यं; सदा सर्वस्मिन्काले आरुण्यमरुणभावं दारुणस्य भयनिमित्तस्य दरिद्रस्य भावो दारुण्यं तेन सह वर्त्तमानं तयोक्तं च यान्ती सत्यपि परिणताऽवस्थान्तरंप्राप्ता दरिद्राणस्य दरिद्रविशिष्टस्य सुषमा शोभा यया सा; अर्थाद्भक्तानां धनाढ्यशोभाकारिणी गुणानां सूत्राणां क्षमादीनामारक्तत्वादीनां भक्तवात्सल्यादीनां च उत्कर्षादाधिक्यान्मञ्जीरावेव माञ्जीरौ ताभ्यां जाता ये कलकलाः कोलाहला अव्यक्तमनोहरशब्दास्तैस्तर्जनपटुः प्रवालतिरस्करणे कुशला इत्थंभूता सुप्रसिद्धा कामाक्ष्याः पादयुगली प्रवालं विद्रुमं पल्लवं च परिहसति हासं करोति तिरस्करोतीत्यर्थः ॥ ४२ ॥

जगद्रक्षादक्षा नलिनरुचिशिक्षापटुतरा
सुरैर्नम्या रम्या सततमपि गम्या बुधजनैः ॥
द्वयी लीलालोला श्रुतिषु सुरपालादिमुकुटी-
तटीसीमाधामा तव जननि कामाक्षि पदयोः ॥ ४३ ॥

अन्वयः ॥ हे जननि! हे कामाक्षि! जगद्रक्षादक्षा नलिनरुचिशिक्षापटुतरा सुरैः सततं नम्या बुधजनैः अभिगम्या श्रुतिषु लीलालोला सुरपालादिमुकुटीतटीसीमाधामा तव पदयो र्द्वयी विजयत इत्यन्वयः ॥ ४३ ॥

टीका ॥ हे जननि! हे कामाक्षि! जगतां रक्षा तस्यां दक्षा चतुरा नलिनानां रक्ताब्जानां या रुचिस्तस्या या शिक्षा तस्यामतिशयेन पटुरिति पटुतरा प्रवीणा सुरैर्नन्तुं योग्या नम्या रम्या रमणीया निरन्तरं बुधजनैः ज्ञानिजनैः अभि सर्वतो गन्तुं योग्या श्रुतिषु वेदेषु जगतः स्थिति-प्रतिपालनसंहारात्मिकायां लीलायाम्। यद्वा नानावतारधारणेन धर्मस्थापनस्वरूपायाम्। यद्वा भक्तावनकर्त्री या लीला तस्यां लोला चपला अति त्वरावतीत्यर्थः। सुरपालादीनां ब्रह्मेन्द्रोपेन्द्र-रुद्रादीनां मुकुटी तस्यास्तटी एव सीमाऽवधिस्तस्यास्तस्यां वा धाम गृहं यस्याः सा तथोक्ता ईदृशी ते पदयोर्द्वयी युगली विजयत इति शेषः ॥ ४३ ॥

गिरां दूरौ चोरौ जडिमतिमिराणां कृतजग-
त्परित्राणौ शोणौ मुनिहृदयनीडैकनिपुणौ।
नखैः स्मेरौ सारौ निगमवचसां खण्डितभव-
ग्रहोन्मादौ पादौ मम मनसि कामाक्षि कलये ॥ ४४ ॥

अन्वयः ॥ हे कामाक्षि! गिरां दूरौ जडिमतिमिराणां चोरौ कृतजगत्परित्राणौ शोणौ मुनि-हृदयनीडैकनिपुणौ नखैः स्मेरौ निगमवचसां सारौ खण्डितभवग्रहोन्मादौ तव पादौ मम मनसि कलये ॥ ४४ ॥

टीका ॥ हे कामाक्षि! गिरां देवमनुष्यवेदशास्त्रादिवाचां दूरौ अविषयौ जडिमानो जडता एव तिमिराण्यन्धकारा ज्ञानावरोधकास्तेषां चोरौ अपहर्त्तारौ कृतं जगतः परित्राणं पालनमुद्धरणं याभ्यां तौ शोणौ रक्तौ अनुरागविशिष्टौ च मुनीनां हृदयमेव नीडमालयः तत्र एकनिपुणौ केवलचतुरौ नखैः स्मेरौ नखकिरणप्रकाशरूपमन्दहासवन्तौ निगमानां वचांसि तेषां सारौ सिद्धान्तरूपौ खण्डितः संसारस्तापग्रहस्योन्मादो याभ्यां तौ अर्थान्मुक्तिप्रदौ एता-दृशौ तव पादौ मम मनसि कलये चिन्तयामीत्यर्थः ॥ ४४

अविश्रान्तं पङ्कं यदपि कलयन्यावकमयं
निरस्यन्कामाक्षि प्रणमनजुषां पङ्कमखिलम् ॥
तुलाकोटिद्वन्द्वं दधदपि च गच्छन्नतुलतां
गिरां मार्गं पादो गिरिवरसुते लङ्घयति ते ॥ ४५ ॥

अन्वयः ॥ हे कामाक्षि! हे गिरिवरसुते! यावकमयं पङ्कं यदपि कलयन्नपि यदविश्रान्तं प्रणमनजुषां अखिलं पङ्कं निरस्यंस्तुलाकोटिद्वन्द्वं दधदपि अतुलतां गच्छंस्ते पादो गिरां मार्गं लङ्घयतीत्यन्वयः ॥ ४५ ॥

टीका ॥ हे कामाक्षि ! हे गिरिसुते ! यावकमयं लाक्षारसमयं पङ्कं कर्दमं पापं च यद्यस्मिन् पङ्के कलयन् अपि अविश्रान्तं यथा भवति तथा प्रणमनजुषां प्रणामानुरागिणामखिलं सर्वं पङ्कं पापं कर्दमं च निरस्यन् दूरीकुर्वन् तुलाकोटिद्वन्द्वं नूपुरयुगलं तुलायास्तोलनसाधनपदार्थस्य च कोटिद्वन्द्वं अग्रभागद्वयं च दधदप्यतुलतामसमतां गच्छन् एवं कुर्वन् सन् ते तव पादो गिरां वाणीनां मार्गं लङ्घयति उल्लङ्घ्य वर्तते । कामाक्ष्याः पादमहिमा गिरामवाच्य इति भावः ॥ ४५ ॥

प्रवालं सव्रीडं विपिनविवरे वेपयति या
स्फुरल्लीलं बालातपमधिकबालं दधति या ॥
रुचिं सांध्यां वन्ध्यां विरचयति या वर्द्धयतु सा
शिवं मे कामाक्ष्याः पदनलिनपाटल्यलहरी ॥ ४६ ॥

अन्वयः ॥ या सव्रीडं प्रवालं विपिनविवरे वेपयति या स्फुरल्लीलं बालातपं अधिकबालं दधति या सांध्यां रुचिं वन्ध्यां विरचयति सा कामाक्ष्याः पदनलिनपाटल्यलहरी मे शिवं वर्द्धयतु ॥४६ ॥

टीका ॥ या विपिनस्य वनस्य विवरे छिद्रे स्वस्या अधिकरक्तकान्त्या मृदुतया च व्रीडया सह वर्त्तमानं तथोक्तं प्रवालं किसलयं जातित्वादेकवचनम् । वेपयति कम्पयति या स्फुरन्ती लीला यस्य स तथोक्तस्तं बालातपं उद्यत्सूर्यच्छायां अतिभास्वरयाऽऽरक्तकान्त्याऽधिकं बालमतिमन्दं दधति या संध्यायां भवा सांध्या तां दीप्तिं वन्ध्यां निष्फलां विशेषेण रचयति सा कामाक्ष्याः पदनलिनयोः नखानां श्वेततां चरणयोश्च रक्तता तन्मिश्रता पाटल्यं श्वेतरक्तत्वं तस्या लहरी तरङ्गो मम शिवं कल्याणं वर्द्धयतु इत्यर्थः ॥ ४६ ॥

किरञ्ज्योत्स्नारीतिं नखमणिरुचा हंसमनसां
वितन्वानः प्रीतिं विकचतरुणाम्भोरुहरुचि ॥
प्रकाशश्रीपादस्तव जननि कामाक्षि तनुते
शरत्कालप्रीतिं शशिशकलचूडप्रियतमे ॥ ४७ ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि हे शशिशकलचूडप्रियतमे नखमणिरुचा ज्योत्स्नारीतिं किरन् शरत्कालप्रीतिं वितन्वानः विकचतरुणाम्भोरुहरुचिप्रकाशस्तव श्रीपादः हंसमनसां प्रीतिं तनुते ॥ ४७ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! हे शशिशकलचूडस्य चन्द्रशेखरस्य शिवस्य प्रियतमे अतिशयप्रिये ! नखमणीनां या रुचिस्तया ज्योत्स्नाया रीतिं परिपाटीं किरन् क्षिपन् प्रसारयन्सन्निति यावत् । शरत्कालस्य प्रीतिं वितन्वानः विकचं प्रफुल्लं तरुणाम्भोरुहं तस्य रुचिरिव प्रकाशो यस्य स तथोक्तः श्रिया युक्तः पादश्चरणः हंसानां पक्षिणां परमहंसानां च

मनसाम् । यद्वा हंसो जपमन्त्रस्तेन युक्तं मनो वा येषाम् । यद्वा हंसा गणेशादयस्तेषां मनसाम् । यद्वा गणेशादयो मनःसु येषां ते तेषां प्रीतिं तनुते विस्तारयति । श्रीकामेश्वर्या गणेशादिभिरपार्थक्यादित्यर्थः ॥ ४७ ॥

नखाङ्कूरस्मेरद्युतिविमलगङ्गाम्भसि सुखं
कृतस्नानं ज्ञानामृतममलमास्वाद्य नियतम् ॥
उदञ्चन्माञ्जीरस्फुरणमणिदीपे मम मनो
मनोज्ञे कामाक्ष्याश्चरणमणिहर्म्ये विहरताम् ॥ ४८ ॥

**अन्वयः ॥ नखाङ्कूरस्मेरद्युतिविमलगङ्गाम्भसि सुखं कृतस्नानं अमलं ज्ञानामृतमास्वाद्य नियतं उदञ्चन्माञ्जीरस्फुरणमणिदीपे मनोज्ञे कामाक्ष्याश्चरणमणिहर्म्ये मम मनो विहरताम् ॥ ४८ ॥**

**टीका** ॥ नखाङ्कूरास्त एव स्मेरा मन्दहासवन्तस्तेषां द्युतिः सैव विमलगङ्गाम्भस्तस्मिन् सुखं यथा भवति तथा कृतं स्नानं येन तत् अमलं ज्ञानामृतं पीत्वा उदञ्चन्तौ शोभमानौ माञ्जीरौ नूपुरौ तयोः स्फुरणेन शोभया युक्ता मणिदीपा यस्मिन् तस्मिन्नतिरमणीये कामाक्ष्याश्चरण एव मणिभिः खचितो हर्म्यः प्रासादस्तस्मिन् । मणिखचिताङ्गुलीयाङ्गुष्ठाभरणधारणेनाश्रयप्रदानत्वेन च सादृश्यान्मणिहर्म्योक्तिः । मम मनो विहरतां क्रीडत्वित्यर्थः ॥ ४८ ॥

भवाम्भोधौ नौकां जडिमविपिने पावकशिखां
प्रणम्रेन्द्रादीनामधिमुकुटमुत्तंसकलिकाम् ॥
जगत्तापज्योत्स्नामकृतकवचःपञ्जरपुटे
शुकस्त्रीं कामाक्ष्या मनसि कलये पादयुगलीम् ॥ ४९ ॥

**अन्वयः ॥ भवाम्भोधौ नौकां जडिमविपिने पावकशिखां प्रणम्रेन्द्रादीनामधिमुकुटमुत्तंसकलिकां जगत्तापज्योत्स्नामकृतकवचःपञ्जरपुटे शुकस्त्रीं कामाक्ष्याः पादयुगलीं मम मनसि कलये । अहमिति शेषः ॥ ४९ ॥**

**टीका** ॥ संसारसमुद्रे नौकां तरणिम् । संसारसमुद्रतारिणीमित्यर्थः । जडताया वनेऽनलशिखां जाड्यवनदाहकर्त्रीमित्यर्थः । भक्तिभावेन नतानां इन्द्रादीनामधिमुकुटं मुकुटोपरि वर्त्तिनी उत्तंसरूपा कलिका ताम् । इन्द्रादीनां मुकुटोपरि स्थायिनीमित्यर्थः । संसारसंतापनाशने ज्योत्स्नां अकृतकवचो वेदस्तद्रूपपञ्जरपुटे शुकस्त्रीं शुकीरूपां वेदेषु वाच्यार्थतया तात्पर्यार्थतया च स्थितामित्यर्थः । कामाक्ष्याः पादयुगलीं मम मनसि अहं कलये चिन्तये ॥ ४९ ॥

परात्मप्राकाश्यप्रतिकलनचुञ्चुः प्रणमतां
मनोज्ञस्ते पादो मणिमुकुरमुद्रां कलयते ॥

यदीयां कामाक्षि प्रकृतिमधुरां शोभनदशां
विधातुं चेष्टन्ते बलरिपुवधूटीकचभराः ॥ ५० ॥

**अन्वयः** ॥ हे कामाक्षि! प्रणमतां परात्मप्राकाश्यप्रतिकलनचुञ्चुः मनोज्ञस्ते पादो मणि मुकुरमुद्रां कलयते । यदीयां प्रकृतिमधुरां शोभनदशां विधातुं बलरिपुवधूटीकचभराश्चेष्टन्त इत्यन्वयः ॥ ५० ॥

**टीका** ॥ हे कामाक्षि! नमस्कारं कुर्वतां भक्तजनानां परात्मनः प्राकाश्यं तत्प्रतिकलनेन प्रतिरचनया वित्त इति प्रतिकलनचुञ्चुः अतिदक्षस्तव चरणो माणिमयमुकुरो रत्नदर्पणस्तस्य मुद्राऽऽकृतिः मुदं राति ददातीति तां रचयति । यदीयां चरणमण्यादर्शीयां स्वभावेन मधुरां मिष्टां श्रेष्ठामिति यावत् । शोभनदशां रमणीयावस्थां विधातुं बलरिपुवधूट्या इन्द्राण्याः केशपाशाश्चेष्टन्ते । इद्राणीकचभरैस्तव चरणलग्नरजांसि पुनः पुनः शतधा सहस्रधा प्रणतिकरणेन निवार्यन्त इति भावः ॥ ५० ॥

अविश्रान्तं तिष्ठन्नकृतकवचःकन्दरपुटी-
कुटीरान्तः प्रौढां नखरुचिसटालीं प्रकटयन् ॥
प्रचण्डं खण्डत्वं नयतु मम कामाक्षि तरसा
तमोवेतण्डेद्रं तवचरणकण्ठीरवपतिः ॥ ५१ ॥

**अन्वयः** ॥ हे कामाक्षि ! अविश्रान्तमकृतकवचःकंदरपुटीकुटीरान्तस्तिष्ठन् प्रौढां नखरुचिसटालीं प्रकटयन् सन् तव चरणकण्ठीरवपतिः मम प्रचण्डं तमोवेतण्डेन्द्रं तरसा खण्डत्वं नयतु ॥ ५१ ॥

**टीका** ॥ हे कामाक्षि ! अविश्रान्तं यथा भवति तथा न कैश्चित्कृतोऽकृतोऽकृतएवाकृतको वेदस्तस्य वचः अकृतकवचः तदेव कंदरो गुहा तस्य आद्यन्तभागरूपा पुटी उपर्यधोभावापन्ना तस्यां कुटीर उपासनज्ञानकाण्डरूपस्तस्यांतर्मध्ये प्रौढां बहुलां नखरुचिः सैव सटाली केसराली तां प्रकटयन् स्फुटयन् विस्तारयन्निति यावत् । तव चरण एव कण्ठीरवाणां सिंहानां पतिर्महामृगेन्द्रः कण्ठे रवः शब्दो मञ्जीरजो ध्वन्यात्मको यस्य सः स चासौ पतिः पालकः । यद्वा कण्ठे प्रणवाद्युच्चारणजो ध्वन्यात्मकः शब्दो येषां ते कण्ठीरवा भक्ता योगिनो वा तान् संसारभयात्पाति रक्षतीति पतिः मम भयानकं तम एव वेतण्डानामिन्द्रो गजेन्द्रस्तं तरसा वेगेन खण्डत्वं शकलत्वं नयतु प्रापयतु नाशयतु इत्यर्थः ॥ ५१ ॥

पुरस्तात्कामाक्षि प्रचुररसमाखण्डलपुरी-
पुरन्ध्रीणां लास्यं तव सकलमालोक्य शनकैः ॥

नखश्रीभिः स्मेरा बहु वितनुते नूपुररवै-
श्चमत्कृत्या शङ्के चरणयुगली चाटुरचनाः ॥ ५२ ॥

अन्वयः ॥ हे कामाक्षि ! पुरस्तात् आखण्डलपुरीपुरंध्रीणां प्रचुररसं लास्यं सकलं आलोक्य नखश्रीभिः शनकैः स्मेरा सती नूपुररवैश्चमत्कृत्या तव चरणयुगली चाटुरचना बहु यथा स्यात्तथा वितनुते इति शङ्के । अहमिति शेषः ॥ ५२ ॥

टीका ॥ हे कामाक्षि ! अग्रतः आखण्डलपुरीपुरंध्रीणां इन्द्रपुरीस्त्रीणां प्रचुररसं लास्यं नृत्यं सकलं सर्वं साङ्गोपाङ्गं आलोक्य नखानां श्रियः शोभास्ताभिः शनकैः स्मेरा मन्दहासवती नूपुराणां रवैः शब्दैश्चमत्कृत्याऽद्भुततया तव चरणयुगली बहु यथा भवति तथा चाटुरचना मनोहररचना वितनुते विस्तारयति इति शङ्के । अहमिति शेषः । नखशोभया देवस्त्रीकर्तृकनृत्यपरिहासं कुर्वती सती पादद्वयी स्वकर्तृकनृत्यचातुर्यं बहुविधमुद्भावयति दर्शयतीत्यर्थः ॥ ५२ ॥

सरोजं निन्दन्ती नखकिरणकर्पूरशिशिरा
निषिक्ता मारारेर्मुकुटशशिरेखा हिमजलैः ॥
स्फुरन्ती कामाक्षि स्फुटरुचिमये पल्लवचये
तवाधत्ते मैत्रीं पथिकसुभगां पादयुगली ॥ ५३ ॥

अन्वयः ॥ हे कामाक्षि ! नखकिरणकर्पूरशिशिरा मारारेर्मुकुटशशीरेखा हिमजलैर्निषिक्ता स्फुटरुचिमये पल्लवचये स्फुरन्ती सरोजं निन्दन्ती तव पादयुगली पथिकसुभगां मैत्रीं आधत्ते ॥५३ ॥

टीका ॥ हे कामाक्षि ! नखकिरणा एव कर्पूरास्तैः शिशिरा शीतला कामारेः शिवस्य मुकुटे शशिरूपा या रेखा तस्याः सकाशात् यानि हिमजलानि शीतसलिलानि तैरभिषिक्ता कामारेः श्रीशिवस्य बहुधा श्रीमत्याश्चरणनतिकरणसमये चन्द्रामृतक्षरणेन । यद्वा चन्द्ररेखया सहितानि हिमजलानि तैर्गङ्गाजलैः सर्वतः सेकयुक्ता स्फुटरुचिमये प्रकटदीप्तिमये पल्लवानां चये समूहे स्फुरन्ती चेष्टमाना सती खरस्पर्शं संकोचविकाशवत्सरोजं निन्दन्ती तव पादयुगली पथिकानां मार्गं गच्छतां सुभगां श्रेष्ठां मैत्रीं मित्रतामाधत्ते । पल्लवचयेति कोमलास्तरणजन्यसुखोद्भावनेन मैत्र्यमाचरतीत्यर्थः ॥ ५३ ॥

नतानां संपत्तेरनवरतमाकर्षणजपः
प्ररोहत्संसारप्रसरगरिमस्तम्भनजपः ॥

त्वदीयः कामाक्षि स्मरहरमनोमोहनजपः ।
पटीयान्नः पायात्पदनलिनमञ्जीरनिनदः ॥ ५४ ॥

अन्वयः ॥ हे कामाक्षि ! नतानां संपत्तेरनवरतमाकर्षणजपः प्ररोहत्संसारप्रसरगरिमस्त-म्भनजपः स्मरहरमनोमोहनजपः पटीयांस्त्वदीयः पदनलिनमञ्जीरनिनदः नः पायात् ॥ ५४ ॥

टीका ॥ हे कामाक्षि ! नतानां त्वद्भक्तानां संपदां निरन्तरं आकर्षणरूपो जपः प्ररोहन् प्रादुर्भवन् यः संसारस्य प्रसरो विस्तारस्तस्य गरिमा गुरुत्वं तस्य स्तम्भनरूपो जपः स्मरहरस्य शिवस्य मनसो मोहनरूपो जपः अतिशयेन पटुरिति पटीयांस्त्वदीयः पादनलिनयोर्मञ्जीरयोर्निनदो नादो नोऽस्मान् पायात् रक्षत्वित्यर्थः । भक्तानां सर्वसंपत्प्रदोऽज्ञाननाशकः शिवस्य मनोमोहकर्त्ता तव मञ्जीरमनोहरनाद इत्यर्थः ॥ ९४ ॥

वितन्वीथा नाथे मम शिरसि कामाक्षि कृपया
पदाम्भोजन्यासं पशुपतिदृढप्राणदयिते ॥
पिबन्तो यन्मुद्रां प्रकटमुपकम्पापरिसरं
दृशा नानन्द्यन्ते नलिनभवनारायणमुखाः । ५५ ॥

अन्वयः । हे नाथे ! हे पशुपतिदृढप्राणदयिते ! हे कामाक्षि ! उपकम्पापरिसरं यन्मुद्रां स्फुटं दृशा पिबन्तो नलिनभवनारायणमुखा नानन्द्यन्ते तं पदाम्भोजन्यासं कृपया मम शिरसि वितन्वीथाः ॥ ५५ ॥

टीका ॥ हे नाथे ! हे पशुपतिदृढप्राणदयिते ! हे कामाक्षि ! प्रकटं यथा स्यात्तथा उपकम्पापरिसरं कम्पानदीतटसमीप इत्यर्थः । ययोश्चरणयोर्मुद्रां चिन्हं दृष्ट्वा पिबन्तः प्रेम्णा दर्शनं कुर्वन्तः नलिनभवो ब्रह्मा नारायणश्च तौ मुखेऽग्रे येषां ते तथोक्ता देवा नानन्द्यन्ते अलं तृप्ता न भवन्तीत्यर्थः । तत्पदाम्भोजस्य न्यासं स्थापनं मम शिरसि कृपया वितन्वीथाः विस्तारय चरणयुगं स्थापयेत्यर्थः । एतेन ब्रह्मादीनां प्रेमातिशयश्चरणयोराकृतेरप्यासेचनकत्वमित्यवगम्यते ॥ ९९ ॥

प्रणामोद्यद्बृन्दारकमुकुटमन्दारकलिका-
विलोलद्रोलम्बप्रकरमयधूमप्रचुरिमा ॥
प्रदीप्तः पादाब्जद्युतिविततिपाटल्यलहरी-
कृशानुः कामाक्ष्या मम दहतु संसारविपिनम् ॥ ५६ ॥

अन्वयः ॥ प्रणामोद्यद्बृन्दारकमुकुटमन्दारकलिकाविलोलद्रोलम्बप्रकरमयधूमप्रचुरिमा प्रदीप्तः कामाक्ष्याः पादाब्जद्युतिविततिपाटल्यलहरीकृशानुर्मम संसारविपिनं दहतु ॥ ५६ ॥

टीका ॥ प्रणामे नमस्कारे उद्यन्तो ये वृन्दारका देवास्तेषां ये मुकुटास्तेषु याः कल्पवृक्ष-कलिकास्तासु विलोलन्तश्चापल्ययुक्ता ये रोलम्बा भ्रमरास्तेषां प्रकरः समूहः स एव धूमस्तस्य प्रचुरिमा बाहुल्यं यस्मिन्सः प्रदीप्तो जाज्वल्यमानः कामाक्ष्याः पादाब्जद्युतेर्विततिर्विस्तारस्तस्याः पाटल्यं श्वेतरक्तत्वं तस्य लहरी सैव कृशानुरग्निर्मम संसाररूपं विपिनं वनं दहतु भस्मीकरोतु ॥ ५६ ॥

वलक्षश्री ऋक्षाधिपशिशुसदृक्षा तव नखै–
र्जिघृक्षुर्दक्षत्वं सरसिरुहभिक्षुत्वकरणे ॥
क्षणान्मे कामाक्षि क्षपितभवसंक्षोभगरिमा
वचोवैचक्षण्यं चरणयुगली पक्ष्मलयताम् ॥ ५७ ॥

अन्वयः ॥ हे कामाक्षि वलक्षश्रीः ऋक्षाधिपशिशुसदृक्षा सरसिरुहभिक्षुत्वकरणे दक्षत्वं नखैर्जिघृक्षुः क्षपितभवसंक्षोभगरिमा तव पादयुगली मे वचोवैचक्षण्यं क्षणात् पक्ष्मलयताम् ॥ ५७ ॥

टीका ॥ हे कामाक्षि ! वलक्षा शुभ्रा श्रीर्यस्याः सा ऋक्षाधिपः ऋक्षाणां नक्षत्राणामधिपो राजा चन्द्रः स एव शिशुर्बालस्तेन सदृक्षा सदृशा कमलदरिद्रत्वकरणे तच्चातुर्यं नखैर्ग्रहीतुमिच्छा यस्याः सा क्षपितो दूरीकृतो भवस्य जगतः संक्षोभस्तस्य प्रसरणस्य गरिमा महत्त्वं यया सा तव पादयुगली मम वाणीचातुर्यं क्षणात्पक्ष्मलयतां वर्द्धयतु इत्यर्थः ॥ ५७ ॥

समन्तात्कामाक्षि क्षततिमिरसंतानसुभगा-
ननन्ताभिर्भाभिर्दिवमनु दिगन्तान्विरचयन् ॥
अहंताया हन्ता मम जडिमदन्तावलरिपु–
र्विभिन्तां संतापं तव चरणचिन्तामणिरसौ ॥ ५८ ॥

अन्वयः ॥ हे कामाक्षि ! अहंताया हन्ता जडिमदन्तावलरिपुरनन्ताभिर्भाभिः समन्ताद्दिवं लक्षीकृत्य अनु पश्चात् क्षततिमिरसंतानसुभगान् दिगन्तान् विरचयन् असौ तव चरण-चिन्तामणिः मम संतापं विभिन्ताम् ॥ ५८ ॥

टीका ॥ हे कामाक्षि ! अहंता मोहजन्यो देहाहंकारत्वं तस्याः हन्ता नाशको जडता-रूपो दन्तावलो हस्ती तस्य रिपुः सिंहः अनन्ताभिर्दीप्तिभिः समन्तात्परितः दिवमाकाशं लक्षीकृत्य क्षतास्तिमिरसंताना येषु ते तथोक्ताश्च ते सुभगास्तान् निर्मलान् प्रकाशवतो दिगन्तान्विरचयन् विशेषेण कुर्वन् असौ तव चरणचिन्तामणिर्मम त्रिविधं तापं विभिन्तां छिनत्तु नाशयत्वित्यर्थः ॥ ५८ ॥

दधानो भास्वत्तामम‍ृतनिलयो लोहितवपु–
र्विनम्राणां सौम्यो गुरुरपि कवित्वं च कलयन् ॥
गतौ मन्दो गङ्गाधरमहिषि कामाक्षि भजतां
तमःकेतुर्मातस्तव चरणपद्मो विजयते ॥ ५९ ॥

अन्वयः ॥ हे कामाक्षि! हे गङ्गाधरमहिषि! हे मातः! भास्वत्तां दधानः अमृतनिलयो लोहितवपुर्विनम्राणां भजतां सौम्यो गुरुरपि कवित्वं च कलयन् गतौ मन्दः तमःकेतुस्तव चरणपद्मो विजयते ॥ ५९ ॥

टीका ॥ हे कामाक्षि ! हे गङ्गाधरमहिषि ! हे श्रीशंभुपट्टराज्ञि ! हे मातः भाः दीप्तिः अस्त्यस्य स भास्वान् तस्य भावो भास्वत्ता तां दधानः । भास्वत्तामिति शब्देन सूर्यत्वं च धारयन्नपि चित्रं अमृतनिलयः सूर्ये अमृतं नास्ति, अयं अमृतस्य सुन्दरतायाः प्रियत्वेन मिष्टत्वात्तस्याः मोक्षस्य च सुधायाश्च निलयः स्थानं, अत श्चन्द्रः, स सन्नपि लोहितवपुः लोहितं वपुःशरीरं यस्य स तथोक्तः आरक्तमूर्तित्वाद्भौमः, स सन्नपि विनम्राणां भक्त्या प्रणमतां भजतां सेवमानानां सौम्यः सोमस्य सदृशगुणविशिष्टोयं सौम्यः अक्रूरः प्रियदर्शनः, सौम्यशब्देन श्लिष्टेन सोमस्यापत्यं पुमान् सौम्यो बुधः, स सन्नपि गुरुः सर्वेभ्यः सर्वप्रकारैर्गरीयान् संसारोत्तारकश्च गुरुशब्देन श्लिष्टेन बृहस्पतिः, स सन्नपि कवित्वं च कलयन् कवते शब्दं कुरुत इति कविः तस्य भावः कवित्वं शब्दकर्तृत्वं नूपुरादिना शब्दानां मनोहररचनाकर्तृत्वं मृतानां लोकानां संजीवनं च कुर्वन् कविशब्देन श्लिष्टेन शुक्रः, तद्भावं रचयन्नपि गतौ मन्दः गमने धीरः मन्दशब्देन गुणनाम्नोर्द्वयोरपि ग्रहान्मन्दः शनिः, स सन्नपि तमःकेतुः तमसां पापाज्ञानशोकान्धकारनरकाणां केतुः नाशकः तमः इति पृथक्पदं, केतुरिति च भिन्नं पदं, तदा ताम्यति खिद्यते यः सः तमः गमने धीरोपि खेदयुक्तः अतिकोमलत्वात् । श्लिष्टेन तमःशब्देन राहुः, स सन्नपि केतुः सर्वोपरि स्थितत्वात् केतुः ध्वजरूपः केतुशब्देन श्लिष्टेन केतुर्ग्रहः, ईदृशो नवग्रहगुणनामधारकोद्भुतकर्मा तव चरणपद्मो विजयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः । अस्य श्लोकरूपमन्त्रस्य भूयेल्पग्रहदोषतारतम्येन लक्षायुतसहस्रशतजपेन सर्वग्रहदोषशान्तिर्भवतीति ममाध्यवसायः ॥ ५९ ॥

नयन्ती दासत्वं नलिनभवमुख्यानसुलभ–
प्रदानां दीनानाममरतरुदौर्भाग्यजननीम् ॥
जगज्जन्मक्षेमक्षयविधिषु कामाक्षि पदयो–
र्धुरीणामीष्टे कस्तव भणितुमाहोपुरुषिकाम् ॥ ६० ॥

अन्वयः ॥ हे कामाक्षि ! नलिनभवमुख्यान्दासत्वं नयन्ती दीनानां असुलभप्रदानां

अमरतरुदौर्भाग्यजननीं जगज्जन्मक्षेमक्षयविधिषु तव पदयोर्धुरीणां आहोपुरुषिकां भणितुं क ईष्टे ॥ ६० ॥

टीका ॥ हे कामाक्षि ! नलिनभवो ब्रह्मा मुख्योऽग्रगण्यो येषां तान्देवान्दासभावं प्रापयन्तीं दीनानां भक्तजनानामसुलभं एककालावच्छिन्नमुक्तिजीवन्मुक्तिरूपं प्रदानमस्याः सा असुलभप्रदाना तां देवतरवः कल्पवृक्षास्तेपां दौर्भाग्यं जनयित्रीं सुरतरुर्वाञ्छितमात्रमेव निकटवर्तिजनाय फलं क्षयिष्णु ददाति तवालौकिकमहिमशालिनौ श्रीमत्या पादौ निकटस्थेभ्योतिदूरस्थितेभ्योपि वाञ्छाल्याधिकं फलं भोगात्मकं मोक्षरूपं च तव पदप्राप्तिलक्षणं सदाऽखण्डात्मकं दत्तः " स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान् । हत्वा रिपूनस्खलितं तव तत्र भविष्यति । १ । मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः । सावर्णिको नाम मनुर्भवान् भुवि भविष्यति । २ । वैश्यवर्य त्वया यश्च वरोस्मत्तोभिवाञ्छितः । तं प्रयच्छामि संसिध्यै तव ज्ञानं भविष्यति । ३ । " इति मार्कण्डेयपुराणे श्रीभगवतीवरप्रदानवाक्यप्रामाण्यात् । अतश्च स्वदानाधिक्येनेदृग्दानाशक्तं देवतरुं भाग्यहीनं कुर्वती जगतो जन्मोत्पत्तिः क्षेमं पालनं क्षयः संहारः तेपां विधानेपु धुरीणां अग्रगण्यां तव पादयोः आहोपुरुपिकां आश्चर्यरूपामहमेवेदृग्गुणगणशालिनीति गर्वरूपा तां कथयितुं स्तोतुं क ईष्टे को जनः समर्थो भवति कोब्रह्मा ईष्टे ? किं तु सोपि न समर्थो भवतीत्यर्थः ॥ ६० ॥

जनोयं संतप्तो जननि भवचण्डांशुकिरणै-
रलब्ध्वैकं शीतं कणमपि परज्ञानपयसः ।
तमोमार्गे पान्थस्तव झटिति कामाक्षि शिशिरां
पदाम्भोजच्छायां परमशिवजाये मृगयते ॥ ६१ ॥

अन्वयः ॥ हे जननि ! हे कामाक्षि ! हे परमशिवजाये ! भवचण्डांशुकिरणैः संतप्तोऽयं जनस्तमोमार्गे पान्थः परज्ञानपयस एकं शीतं कणमप्यलब्ध्वा तव शिशिरां पदाम्भोजच्छायां झटिति मृगयते ॥ ६१ ॥

टीका ॥ हे जननि ! हे कामाक्षि ! हे परमशिवजाये ! भवः संसार एव तापप्रदत्वेन चण्डांशुः सूर्यस्तस्य किरणैर्दुःखलाभरूपैः संतप्तोऽयं मूकजनस्तमोमार्गे नरकमार्गे । यद्वा अज्ञानमार्गे तृष्णया सांसारिकपदार्थप्राप्त्युपाये पथिकोध्वनीनः परं अतीन्द्रियं ज्ञानं परज्ञानं परमेश्वरस्य तव ब्रह्मणो रूपस्य ज्ञानमित्यर्थः । तदेव पयो जलं तस्य एकं शीतं कणमप्यलब्ध्वा ज्ञानलेशमप्यप्राप्य तव चरणाम्बुजयोरमृतवर्षिणीं शीतलां तापनाशिनीं छायां शीघ्रं मृगयतेऽन्वेषयतीत्यर्थः ॥ ६१ ॥

जयत्यम्ब श्रीमन्नखकिरणचीनांशुकमयं
वितानं बिभ्राणे सुरमुकुटसंघट्टमसृणे ॥

निजारुण्यक्षौमास्तरणवति कामाक्षि सुलभा
बुधैः संविन्नारी तव चरणमाणिक्यभवने ॥ ६२ ॥

अन्वयः ॥ हे कामाक्षि ! हे अम्ब ! श्रीमन्नखकिरणचीनांशुकमयं वितानं बिभ्राणे सुरमुकुटसंघट्टमसृणे निजारुण्यक्षौमास्तरणवति तव चरणमाणिक्यभवने बुधैः सुलभा संविन्नारी जयति ॥ ६२ ॥

टीका ॥ हे कामाक्षि ! हे अम्ब ! श्रीमन्नखाः शोभावन्तो ये नखास्तेषां किरणास्त एव चीनांशुकानि श्रेष्ठशुक्लवस्त्राणि तन्मयं वितानं बिभ्राणे धार्यमाणे सुरमुकुटनां संघट्टेन संयोगेन मसृणे स्निग्धे शाणोल्लीढमणिरिव स्वच्छसौन्दर्यप्रकाशवत्तस्मिन् स्वीयमारुण्यं निजरक्तता तदेव क्षौमास्तरणं दुकूलप्रस्तरणमस्मिन्नस्तीति तत्तस्मिंस्तव चरण एव माणिक्यभवनं तस्मिन् बुधैः पण्डितैः सुलभा अनायासलभ्या संविन्नारी ज्ञानरूपा स्त्री जयति सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥ ६२ ॥

प्रतीमः कामाक्षि स्फुरिततरुणादित्यकिरण—
श्रियो मूलद्रव्यं तव चरणमद्रीन्द्रतनये ॥
सुरेन्द्राशामापूरयति यदसौ ध्वान्तमखिलं
धुनीते दिग्भागानपि च महसा पाटलयते ॥ ६३ ॥

अन्वयः ॥ हे कामाक्षि ! हे अद्रीन्द्रतनये ! स्फुरिततरुणादित्यकिरणश्रियो मूलद्रव्यं तव चरणं प्रतीमो वयमिति शेषः। यदसौ सुरेन्द्राशां महसा पूरयत्यखिलं ध्वान्तं धुनीते दिग्भागानपि च पाटलयते ॥ ६३ ॥

टीका ॥ हे कामाक्षि ! हे गिरीन्द्रसुते ! स्फुरितास्तरुणादित्यस्य किरणास्तेषां श्रियः शोभाया मूलभूतं धनं तव चरणं वयं प्रतीमः प्रतीतिं कुर्मः यद्यस्मादसौ चरणः सुरेन्द्राशां इन्द्रदिशं प्राचीं सुरेन्द्राशां सुरैः सहित इन्द्रः सुरेन्द्रस्तस्य आशां अप्राप्तवस्तुप्रापणेच्छा तां च। यद्वा सुराणां इन्द्राः श्रेष्ठा ब्रह्मविष्णुरुद्ररविगणेशाद्यास्तेषां वाञ्छा महसा तेजसा स्वप्रतापेन च महिषासुराद्यान् हत्वा तत्तदभीष्टदानेनापूरयति आ समन्तात् पूर्णयति पुनरखिलं तमोऽज्ञानं च नाशयति दिग्भागान् दिशां प्रान्तान् महसा तेजसा पाटलयते च श्वेतरक्तमिश्रवर्णान्करोतीत्यर्थः ॥ ६३ ॥

महाभाष्यव्याख्यापटुशयनमारोपयति वा
स्मरव्यापारेर्ष्यापिशुननिटिलं कारयति वा ॥
द्विरेफाणामध्यासयति सततं वा निवसतिं
प्रणम्रान्कामाक्ष्याः पदनलिनमाहात्म्यगरिमा ॥ ६४ ॥

अन्वयः॥ कामाक्ष्याः पदनलिनमाहात्म्यगरिमा प्रणम्रान् महाभाष्यव्याख्यापटुशयनमारोपयति स्मरव्यापारेर्ष्यापिशुननिटिलं वा कारयति द्विरेफाणां निवसतिं वा सततमध्यासयतीत्यन्वयः ॥ ६४ ॥

टीका ॥ कामाक्ष्याः श्रीभगवत्याः पदपङ्कजयोर्माहात्म्यस्य प्रभावस्य गरिमा गौरवं प्रणम्रान् भक्तजनान् महाभाष्यरूपा व्याख्या वेदाङ्गव्याकरणं वा तस्यां पटुः कुशलः शेषनागः स एव शयनं शय्या तं वा सततमारोपयति अर्थाद्विष्णुपदे जगत्स्थितिकर्तृके स्वभक्तान् वा स्थापयति शेषशायिनारायणरूपान्करोतीत्यर्थः स्मरस्य कामदेवस्य यो व्यापारः संमोहनादिबाणप्रक्षेपेण कलत्राधीनादिक्रियाकरणं तस्मिन्नीर्ष्यया युक्तो यः पिशुनः शत्रुः स्मरस्य दाहकत्वादग्निः स निटिले ललाटे यस्य स तथोक्तस्तं वा कारयति सर्वजगतां संहारकर्तृकपदस्थान् शिवरूपान् वा कारयतीत्यर्थः। भ्रमराणां वासस्थानं कमलं तं प्रति वा नित्यमध्यासयति स्थापयति सर्वजगद्विरचनपदस्थान् ब्रह्मरूपान् वा कारयति श्रीमतीभक्तवाञ्छानुरूपं स्वेच्छानुरूपं वा भक्तरूपं शैवं वा वैष्णवं वा ब्राह्मयं वा करोतीत्यर्थः ॥ ६४ ॥

विवेकाम्भः स्रोतःस्नपनपरिपाटीशिशिरिते
समीभूते शास्त्रस्मरणहलसंघर्षणवशात् ॥
सतां चेतःक्षेत्रे वपति तव कामाक्षि चरणो
महासंवित्सस्यप्रकरवरबीजं गिरिसुते ॥ ६५ ॥

अन्वयः ॥ हे कामाक्षि ! हे गिरिसुते ! विवेकाम्भः स्रोतःस्नपनपरिपाटीशिशिरिते शास्त्रस्मरणहलसंघर्षणवशात्समीभूते सतां चेतःक्षेत्रे तव चरणो महासंवित्सस्यप्रकरवरबीजं वपति ॥ ६५ ॥

टीका ॥ हे कामाक्षि ! विवेक एवाम्भः तस्य स्रोतः प्रवाहस्तेन यत्स्नपनमाप्लावनं तस्य या परिपाटी रीतिस्तया शिशिरिते शीतलिते शास्त्रस्य स्मरणं मुहुर्मुहुर्विचारस्तदेव हलसंघर्षणं तस्य वशात्समीभूते नीचोच्चादिभावरहिते सतां चेत एव क्षेत्रं तस्मिंस्तव चरणः महती चासौ संवित् ब्रह्मज्ञानं सैव सस्यं धान्यं तस्य प्रकरः समूहस्तद्रूपं वरं श्रेष्ठं बीजं वपति बीजयतीत्यर्थः ॥ ६५ ॥

दधानो मन्दारस्तबकपरिपाटीं नखरुचा
वहन्दीप्तां शोणाङ्गुलिपटलचाम्पेयकलिकाम् ॥
अशोकोल्लासं नः प्रचुरयति कामाक्षि चरणो
विकाशी वासन्तः समय इव ते शर्वदयिते ॥ ६६ ॥

अन्वयः ॥ हे कामाक्षि ! हे शर्वदयिते ! नखरुचा मन्दारस्तवकपरिपाटीं दधानः दीप्तां शोणाङ्गुलिपटलचाम्पेयकलिकां वहन् ते तव चरणो विकाशी वासन्तः समय इव अशोकोल्लासं नः प्रचुरयति ॥ ६६ ॥

टीका ॥ हे कामाक्षि ! शर्वः शिवो दयितः प्रियो यस्याः सा शिवस्य प्रिया वा । तत्संबुद्धौ हे तथाविधे ! नखरुचा मन्दारस्य देवतरोः स्तवकानां पुष्पगुच्छानां परिपाटीं रीतिं दधानः शोणाश्च ता अङ्गुलयश्च तथोक्तास्तासां पटलं तेजः तदेव चाम्पेयकलिका तां दीप्तां प्रकाशितां वहन् सन् तव चरणो विकाशवान् वसन्तस्यायं वासन्तः समयः बसन्तर्तुसंबन्धी कालः समस्तवनराजीनां शोभाविकाशकस्तस्मात् नः अस्माकं अशोकस्य वृक्षस्य अशोकः सर्वप्राकारिकशोकाभावश्च ब्रह्मानन्द इत्यर्थः । तस्योल्लासं शोभां प्रकाशं च प्रचुरयति वर्द्धयतीत्यर्थः ॥ ६६ ॥

नखांशुप्राचुर्यप्रसृमरमरालीधवलितः
स्फुरन्मञ्जीरोद्यन्मरकतमहःशैवलयुतः ॥
भवत्याः कामाक्षि स्फुटचरणपाटल्यकपटो
नदः शोणाभिख्यो नगपतितनूजे विजयते ॥ ६७ ॥

अन्वयः ॥ हे कामाक्षि ! हे नगपतितनूजे ! नखांशुप्राचुर्यप्रसृमरमरालीधवलितः स्फुरन्मञ्जीरोद्यन्मरकतमहःशैवलयुतो भवत्याः स्फुटचरणपाटल्यकपटः शोणाभिख्यो नदो विजयते ॥ ६७ ॥

टीका ॥ हे कामाक्षि ! हे गिरिराजसुते ! नखांशूनां नखकिरणानां यत्प्राचुर्यं बाहुल्यं तदेव प्रसृमरा मराल्यो हंस्यस्ताभिर्धवलो जातो यः स तथोक्तः स्फुरंतौ चेष्टमानौ मञ्जीरौ तयोरुद्यन्मणीनां महांसि तेजांसि तान्येव शैवलास्तैर्युतो भवत्याः स्फुटं प्रकटं चरणयोर्यत्पाटल्यं श्वेतरक्तत्वं " श्वेतरक्तस्तु पाटलः " इत्यभिधानात् । चरणस्यारक्तत्वं तन्नखानां श्वेतत्वं तयोर्मिश्रत्वं तदेव कपटो यस्य स तथोक्तः शोणो नामकनदो विजयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥ ६७ ॥

धुनानं पङ्कौघं परमसुलभं कण्टककुलै–
र्विकासव्यासङ्गंविदधदपराधीनमनिशम् ।
नखेन्दुज्योत्स्नाभिर्विशदरुचि कामाक्षि नितरा–
मसामान्यं मन्ये सरसिजमिदं ते पदयुगम् ॥ ६८ ॥

अन्वयः ॥ हे कामाक्षि ! पङ्कौघं धुनानं कण्टककुलैः परमसुलभं अनिशं अपराधीनं विकाशव्यासङ्गं विदधन्नखेन्दुज्योत्स्नाभिर्विशदरुचि ईदृशं असामान्यं सरसिजं ते पदयुगं मन्ये । अहमितिशेषः ॥ ६८ ॥

टीका ॥ हे कामाक्षि ! ते इदं पदयुगं असामान्यं सरसिजमसाधारणमलौकिकमिति यावत् । कमलं, कुतो यतः पङ्कौघं धुनानं पङ्कस्य पापस्य कर्दमस्य चौघं समूहं कम्पयत् लौकिककमलं तु पङ्कजनाम्नैव रूयातं तदा पङ्कनाशनं तेन क्केति भावः । तव पदकमलं कण्टककुलैः परं असुलभं कण्टकानां बाहिर्मुखानां कुलैः समूहैः परं अत्यन्तं असुलभं अप्राप्यं लौकिककमलं कण्टककुलैः परमसुलभं तेषां तन्नाले सदैव स्थितत्वात् । तव चरणयुगं कमलं अनिशं सदैव अपराधीनं स्वतन्त्रतया विकाशव्यासङ्गं विदधत् विकाशस्य प्रफुल्लनस्य विशेषेणासमन्तात्सङ्गः संयोगस्तं विशेषेण दधानं स्वतः सदैव प्रकाशवच्चिद्रूपत्वादित्यर्थः । लौकिककमलविकाशव्यासङ्गस्तु सूर्याधीनो दिवैव, त्वच्चरणकञ्जस्तु नखेन्दुज्योत्स्नाभिर्विशदरुचिः नखा एवेन्दवस्तेषां चन्द्रिकाभिरुज्ज्वला कान्तिर्यस्य तत् नखेन्दुकौमुदीसंयोगेऽतिमनोहार्युज्ज्वलप्रकाशवदित्यर्थः । लौकिककमलं तु चन्द्रकरस्पर्शमात्रेणैव संकुचितो भवति । अतस्त्वेदं पदयुगमलौकिकमहिमशाल्यद्भुतारविन्दं मन्ये । अहमिति शेषः ॥ ६८ ॥

करीन्द्राय द्रुह्यत्यलसगतिलीलासु विमलैः
पयोजैर्मात्सर्यं प्रकटयति कामं कलयते ॥
पदाम्भोजद्वन्द्वं तदपि तव कामाक्षि हृदयं
मुनीनां शान्तानां कथमनिशमस्मै स्पृहयते ॥ ६९ ॥

अन्वयः ॥ हे कामाक्षि ! तव पदाम्भोजद्वन्द्वमलसगतिलीलासु करीन्द्राय द्रुह्यति, विमलैः पयोजैर्मात्सर्यं प्रकटयति, कामं कलयते तदपि शान्तानां मुनीनां हृदयमस्मै कथमनिशं स्पृहयते ॥ ६९ ॥

टीका ॥ हे कामाक्षि ! तव चरणकमलयुगलं अलसेन युक्ता गतिस्तस्या लीलासु गजेन्द्राय द्रुह्यति द्रोहं करोति तं स्वगत्या लावण्येन हीनं लज्जितं करोतीत्यर्थः । विमलैः प्रफुल्लितैरिति यावत् । कमलैः सहमात्सर्यमभिमानं प्रकटयति मादृशं नेदं सुन्दरमिति रूपं गर्वं जनयति कामं भक्तेप्सितं मनोज्ञं च कलयते रचयति तस्मादीदृशवर्त्तनशीलायापि द्रोहमात्सर्यसंयुतायापि कामोद्भावनकर्त्रेपि अस्मै चरणकमलयुगलाय निर्विकारिणां ब्रह्मज्ञानिनां मुनीनां हृदयं मनः कथं स्पृहयते वाञ्छां करोतीत्यर्थः ॥ ६९ ॥

निरस्ता शोणिम्ना चरणकिरणानां तव शिवे
समिन्धाना संध्यारुचिरचलराजन्यतनये ॥
असामर्थ्यादेतत्परिभवितुमेतत्समरुचां
सरोजानां जाने मुकुलयति शोभां प्रतिदिनम् ॥ ७० ॥

अन्वयः ॥ हे शिवे ! हे अचलराजन्यतनये तव चरणकिरणानामरुणिम्ना समिन्धाना संध्या-

रुचिर्निरस्ता अत एतत्परिभवितुमसामर्थ्यादेतत्समरुचां सरोजानां शोभां प्रतिदिनं मुकुलयति जाने इत्यन्वयः। अहमिति शेषः॥ ७०॥

टीका॥ हे शिवे! हे पर्वतराजन्यतनये! तव चरणकिरणानां शोणिम्ना रक्ततया कर्त्र्या समिन्धाना संदीप्यमाना संध्याया रुचिर्दीप्तिर्निरस्ता तिरस्कृता, अतः सैवैतत्परिभवितुं चरणं पीडयितुमसामर्थ्यादशक्ततयैतत्समरुचां चरणसदृशकान्तीनां सरोजानां कमलानां शोभां दिनं दिनं प्रतीति प्रतिदिनं नित्यमित्यर्थः। मुकुलयति संमीलयतीति जाने। अहमिति शेषः॥ ७०॥

उपादीक्षद्दाक्ष्यं तव चरणनामा गुरुरसौ
मरालानां शङ्के मसृणगतिलालित्यसरणौ॥
अतस्ते निस्तन्द्रं नियतममुना सख्यपदवीं
प्रपन्नं पाथोजं प्रति दधति कामाक्षि कुतुकम्॥ ७१॥

अन्वयः॥ हे कामाक्षि! मसृणगतिलालित्यसरणौ मरालानां तव चरणनामाऽसौ गुरुः दाक्ष्यमुपादीक्षदिति शङ्के, अतस्ते तवामुना चरणगुरुणा सख्यपदवीं प्रपन्नं पाथोजं नियतं निस्तन्द्रं कुतुकं प्रति दधति॥ ७१॥

टीका॥ हे कामाक्षि! मसृणा मनोहरा चासौ गतिश्च मसृणगतिस्तस्या लालित्यसरणौ सौन्दर्यमार्गे हंसानां मरालानां तव चरणनामाऽसौ गुरुः चातुर्यशिक्षाकारकः सदा चातुर्यमुपादीक्षच्चातुर्यदीक्षामकरोदित्यहं शङ्के तर्कयामि, अतोऽमुना तव चरणगुरुणा सह सख्यपदवीं प्रपन्नं प्राप्तं निस्तन्द्रमनालस्यं सुमुखमिति यावत्। पाथोजं कमलं कर्तृ नियतं निश्चयेन कुतुकं प्रफुल्लनरूपहर्षं प्रति दधतीत्यर्थः॥ ७१॥

दधानैः संसर्गं प्रकृतिमलिनैः षट्पदकुलै–
र्द्विजाधीशश्लाघाविधिषु विदधद्भिर्मुकुलताम्॥
रजोमिश्रैः पद्मैर्नियतमपि कामाक्षि पदयो–
र्विरोधस्ते युक्तो विषमशरवैरिप्रियतमे॥ ७२॥

अन्वयः॥ हे कामाक्षि! हे विषमशरवैरिप्रियतमे! प्रकृतिमलिनैः षट्पदकुलैः संसर्गं दधानैर्द्विजाधीशश्लाघाविधिषु मुकुलतामपि विदधद्भी रजोमिश्रैः पद्मैस्ते पदयोर्विरोधो नियतं युक्त इत्यन्वयः॥ ७२॥

टीका॥ हे कामाक्षि! विषमशरः पञ्चशरः कामस्तस्य वैरी श्रीशंभुस्तस्य प्रियतमा तत्संबुद्धौ हे तथोक्ते! प्रकृत्या स्वभावेन मलिनैः कृष्णवर्णैर्दूषितैश्च षट्पदकुलैः भ्रमरवंशैः सार्द्धं पशुसमूहैश्च अत्यन्तमूर्खैरित्यर्थः। संसर्गं संबन्धं दधानैः द्विजानामधीशश्चन्द्रः "सोमोऽस्माकं ब्राह्मणानां राजा" इति श्रुतेः। द्विजाधीशा ब्राह्मणश्रेष्ठाश्च तस्य तेषां च श्लाघाविधिषु प्रफुल्लनरूपसुमुखेन शिष्टाचारमकुर्वद्भिः किं तु संकोचं कुर्वद्भिः। रजोमिश्रैः

" परागः सुमनोरजः " इत्यमरः। परागमिश्रैः रजोगुणमिश्रैर्वा धूलिधूसरैश्च पद्मैस्ते तव पदयोः श्रीमच्चरणयोः अमलमानसप्रीतिकरयोर्द्विजाधीशानन्दप्रदयोरुज्ज्वलयोर्विरोधो वैरभावो युक्त एवेत्यर्थः ॥ ७२ ॥

कवित्वश्रीमिश्रीकरणनिपुणौ रक्षणचणौ
विपन्नानां श्रीमन्नलिनमसृणौ शोणकिरणौ ॥
मुनीन्द्राणामन्तःकरणशरणौ मन्दशरणौ ।
मनोज्ञौ कामाक्ष्या दुरितहरणौ नौमि चरणौ ॥ ७३ ॥

अन्वयः ॥ विपन्नानां रक्षणचणौ कवित्वश्रीमिश्रीकरणनिपुणौ श्रीमन्नलिनमसृणौ शोणकिरणौ मुनीन्द्राणामन्तःकरणशरणौ मन्दशरणौ मनोज्ञौ दुरितहरणौ कामाक्ष्याश्चरणौ नौमि ॥७३॥

टीका ॥ विपन्नानां शरणागतानां रक्षणेन वित्तौ इति रक्षणचणौ कवित्वश्रियोर्मिश्रीकरणे ग्रन्थरचनाचातुर्यधनसमृद्ध्योरेकत्र करणे निपुणौ श्रीमन्ति च तानि नलिनानि च तथोक्तानि तेभ्यो मसृणौ अतिस्निग्धौ अतिमनोहरावित्यर्थः ॥ शोणाः किरणा ययोस्तौ तादृशौ मननशीला मुनयस्तेषामिन्द्राः श्रेष्ठास्तेषामन्तःकरणं मनोबुद्ध्यहंकारचित्ताख्यमिव शरणं गृहं ययोः । यद्वा मुन्यन्तःकरणस्य शरणौ आश्रयौ तौ मन्दशरणौ दीनशरणौ मनोज्ञौ दुरितानां पापानां दुःखानां च हरणं नाशनं याभ्यां तौ तथाभूतौ श्रीकामाक्ष्याश्चरणौ नौमि स्तौमीत्यर्थः । अहमिति शेषः ॥ ७३ ॥

परस्मात्सर्वस्मादपि च परयोर्मुक्तिकरयो
र्नखश्रीषु ज्योत्स्नाकुलिततुलयोस्ताम्रतलयोः ॥
निलीये कामाक्ष्या निगमनुतयोर्नाकिनतयो
र्निरस्तप्रोन्मीलन्नलिनमदयोरेव पदयोः ॥ ७४ ॥

अन्वयः ॥ सर्वस्मात्परस्मादपि च परयोर्मुक्तिकरयोर्नखश्रीषु ज्योत्स्नाकुलिततुलयोस्ताम्रतलयोर्निगमनुतयोर्नाकिनतयोर्निरस्तप्रोन्मीलन्नलिनमदयोः कामाक्ष्याः पदयोर्निलीये एवाहमिति शेषः ॥ ७४ ॥

टीका ॥ सर्वस्माज्जगतः कार्यतः परस्मादपि च षट्त्रिंशत्तत्त्वरूपकारणतोपि परयोः । यद्वा परस्माद्ब्रह्मविष्णुरुद्रादिरूपकारणात्परयोरुपरि वर्त्तमानयोः प्रकाशविमर्शाख्ययोः कारणकारणयोरित्यर्थः । मुक्तिं कुरुत इति मुक्तिकरौ तयोः नखश्रीषु नखशोभासु ज्योत्स्नयाऽऽकुलिता व्याकुलिता ऽसमा तुला ययोस्तयोः ताम्र इव रक्तं तलं ययोस्तयोः । निगमैर्वेदैर्नुतयोः स्तुतयोः । नाकिनः स्वर्गिणः देवास्तैर्नतयोर्नमस्कृतयोः । निरस्तो दूरीकृतः प्रकर्षेणोन्मीलतां प्रफुल्लतां नलिनानां मदो याभ्यां तौ तथोक्तौ तयोः श्रीकामाक्ष्याः पदयोः श्रीमच्चरणयोरेवाहं निलीये जगत्कारणकारणयोर्भक्तमोक्षप्रदयोर्ज्योत्स्नातिशयोज्ज्वलनखयोः स्वाभाविकातिरक्तवर्णयोः

श्रुतिवर्णितवैभवयोः देवनतयोः हृतविकसितकमलगर्वयोः श्रीकामाक्षीपादयोरेवाहं लीनो भवाम्येवे त्यर्थः ॥ ७४ ॥

स्वभावादन्योन्यं किसलयमपीदं तव पदं
म्रदिम्ना शोणिम्ना भगवति दधाते सदृशताम् ॥
वने पूर्वस्येच्छा सततमवने किं तु जगतां
परस्येत्थं भेदः स्फुरति सततं देवि सुधियाम् ॥ ७५ ॥

अन्वयः हे भगवति! हे देवि! स्वभावादन्योन्यं किसलयं तवेदं पदमपि म्रदिम्ना शोणिम्ना सदृशतां दधाते किं तु पूर्वस्येच्छा सततं वने परस्य सततं जगतामवने इत्थं सुधियां भेदः स्फुरति ॥ ७५ ॥

टीका ॥ हे ऐश्वर्यादिषड्गुणसंपन्ने! हे विद्योतनशीले! हे प्रकाशरूपिणि! स्वभावादन्योन्यं परस्परं किसलयं नवीनातिमृदुरक्तपत्रं तवेदं पदमपि मृदुतया कोमलतया शोणिम्ना रक्ततया च तुल्यतामेते द्वेऽपि दधाते किमिति प्रश्ने। तु पुनः सुधियां सुबुद्धीनां पुरुषाणां हृदि इत्थममुना प्रकारेण भेदः स्फुरति पूर्वस्य किसलयस्य श्रीमत्याश्चरणसादृश्याभावात्तत्सादृश्यप्राप्तये वने तपः कर्त्तुं इच्छा भवति। यद्वा पूर्वमज्ञानवशात्कृततत्तुल्यतागर्वस्यातिसौन्दर्यबलवता तव चरणेन धिक्कृतस्य किसलयस्येच्छा दूरे वने वासार्थे जाता "सतां माने म्लाने मरणमथवा दूरगमनम्" इति नीतिवाक्यात् ॥ परस्य श्रीमच्चरणस्येच्छा सततमवने न वनं अवनं तस्मिन् गृहे चिन्तामणिमण्डपे गृहराजे सततं नित्यमवनं रक्षणं च तस्मिन् जगद्रक्षणे भवतीत्यर्थः ॥ ७५ ॥

कथं वाचालोपि प्रकटमणिमञ्जीरनिनदैः
सदैवानन्दार्द्रान्विरचयति वाचंयमजनान् ॥
प्रकृत्या ते शोणच्छविरपि च कामाक्षि चरणो
मनीषानैर्मल्यं कथमिव नृणां मांसलयते ॥ ७६ ॥

अन्वयः ॥ हे कामाक्षि! प्रकटमणिमञ्जीरनिनदैर्वाचालोऽपि ते चरणः वाचंयमजनान् सदैवानन्दार्द्रान् कथमिव विरचयति ॥ प्रकृत्या शोणच्छविरपि च नृणां मनीषानैर्मल्यं कथमिव मांसलयते ॥ ७६ ॥

टीका ॥ हे कामाक्षि! प्रकटमणिभिः स्फुटमणिभिः प्रकाशवद्भिर्युक्तयोर्मञ्जीययोर्नीर नदैरव्यक्तशब्दैर्वाचालोऽपि अतिवदनशीलोऽपि वाचंयमजनान् मुनीन्मननशीलान्मौनयुक्तान् वा सदैवानन्दार्द्रान् कथमिव विशेषेण रचयति स्वभावेन रक्तकान्तिरपि च पुनस्ते तव चरणो नृणां भक्तानां मनीषाणां बुद्धीनां नैर्मल्यमत्युज्ज्वलत्वं केन प्रकारेण मांसलयते वर्द्धयत इत्यर्थः ॥ ७६ ॥

चलत्तृष्णावीचीपरिचलनपर्याकुलतया
मुहुर्भ्रान्त्वा तान्तः परमशिववामाक्षि परवान् ॥
तितीर्षुः कामाक्षि प्रचुरतरकर्माम्बुधिममुं
कदाहं लप्स्ये ते चरणमणिसेतुं गिरिसुते ॥ ७७ ॥

अन्वयः ॥ हे परमशिववामाक्षि ! हे गिरिसुते ! हे कामाक्षि ! चलत्तृष्णावीचीपरिचलनपर्याकुलतया मुहुर्भ्रान्त्वा तान्तोऽमुं प्रचुरतरकर्माम्बुधिं तितीर्षुः परवानहं ते चरणमणिसेतुं कदा लप्स्ये ॥ ७७ ॥

टीका ॥ परमशिवे शृङ्गाररसावेशेन वामे कुटिलेऽक्षिणी यस्याः । यद्वा परमशिवस्य वामाक्षी श्रेष्ठाक्षी स्त्री अन्यत्र कुत्सनतायुक्ताक्षीत्यर्थः तत्संबुद्धौ हे तादृशे ! हे गिरिसुते ! हे कामाक्षि ! चलन्त्यो यास्तृष्णावीच्यस्ताभिः परितश्चलनेन सर्वतो व्याकुलतया मुहुर्वारं वारं भ्रान्त्वा भ्रमित्वा तान्तः खिन्नः परवान् परवशः अतिशयेन प्रचुराणीति प्रचुरतराणि तानि च कर्माणि तथोक्तानि तान्येव, अम्बुनि धीयन्ते अस्मिन्निति स जगत्समुद्रस्तं तर्तुमिच्छुरहं ते तव चरण एव मणिसेतुस्तं कस्मिन्काले लप्स्ये प्राप्स्यामीत्यर्थः । इति सोत्कण्ठोक्तिर्वाञ्छानिवेदनं वा भक्तस्य ॥ ७७ ॥

विशुष्यन्त्यां प्रज्ञासरिति दुरितग्रीष्मसमय–
प्रभावेण क्षीणे सति मम मनःकेकिनि शुचा ॥
त्वदीया कामाक्षि स्फुरणचरणाम्भोदमहिमा
नभोमासाटोपं नगपतिसुते किं न कुरुते ॥ ७८ ॥

अन्वयः ॥ हे कामाक्षि ! हे नगपतिसुते ! दुरितग्रीष्मसमयप्रभावेण प्रज्ञासरिति विशुष्यन्त्यां सत्यां शुचा शोकेन मम मनःकेकिनि क्षीणे सति त्वदीयः स्फुरणचरणाम्भोदमहिमा नभोमासाटोपं किं न कुरुते अपि तु कुरुत इत्यन्वयः ॥ ७८ ॥

टीका ॥ हे कामाक्षि ! हे पर्वतराजकन्ये ! दुरितं दुःखं पापं च तदेव ग्रीष्मसमयः ग्रीष्मकालस्तस्य प्रभावेण दुःखरूपसूर्यतेजसा प्रज्ञैव सरित्तस्यां विशुष्यमाणायां सत्यां शोकेन मम मन एव केकी मयूरस्तस्मिन् क्षीणे दुर्बले सति त्वदीयस्फुरणचरणाम्भोदस्य चेष्टमानचरणमेघस्य महिमा श्रावणमासाडम्बरं किं न कुरुते किंतु कुरुत एवेत्यर्थः ॥ ममतापशान्तिं कथं न करोत्यपि तु करोत्येवेति भावः ॥ ७८ ॥

विनम्राणां चेतोभवनबलभीसीम्नि चरण
प्रदीपे प्राकाश्यं दधति तव निर्धूततमसि ॥

असीमा कामाक्षि स्वयमलघुदुष्कर्मलहरी
विघूर्णन्ती शान्तिं शलभपरिपाटीव भजते ॥ ७९ ॥

अन्वयः ॥ हे कामाक्षि ! विनम्राणां चेतोभवनवलभीसीम्नि निर्धूततमसि तव चरणप्रदीपे प्राकाश्यं दधति सति अलघुदुष्कर्मलहरी असीमा विघूर्णन्ती शलभपरिपाटीव शान्तिं भजते ॥ ७९ ॥

टीका ॥ हे कामाक्षि ! विशेषेण प्रेम्णा नम्राणां भक्तानां चेत एव भवनवलभी तस्याः सीम्नि प्रान्ते निर्धूतं तमो येन स तस्मिंस्तव चरणरूपे प्रदीपे प्राकाश्यं दधति सति अलघुदुष्कर्मणां बहुविकर्मकर्मणां लहरी तरङ्गः न विद्यते सीमावधिर्यस्याः सा असीमा विघूर्णन्ती विभ्रमन्ती सती शलभानां पतङ्गानां परिपाटीव स्वयं शान्तिं लयं भजते लभत इत्यर्थः ॥ ७९ ॥

विराजन्ती शुक्तिर्नखकिरणमुक्तामणितते-
र्विपत्पाथोराशौ तरिरपि नराणां प्रणमताम् ॥
त्वदीयां कामाक्षि ध्रुवमलघुवह्निर्भववने
मुनीनां ज्ञानाग्नेररणिरयमङ्घ्रिर्विजयते ॥ ८० ॥

अन्वयः ॥ हे कामाक्षि ! नखकिरणमुक्तामणिततेर्विराजन्ती शुक्तिः प्रणमतां नराणां विपत्पाथोराशौ ध्रुवं यथा स्यात्तथा तरिरपि भववनेऽलघुवह्निर्मुनीनां ज्ञानाग्नेररणिस्त्वदीयोऽयमङ्घ्रिर्विजयते ॥ ८० ॥

टीका ॥ हे कामाक्षि ! नखकिरणा एव मुक्तामणयस्तासां ततेः संतानस्य विराजन्ती शोभमाना शुक्तिः प्रणमतां प्रकर्षेण नमतां भक्तजनानां विपत्पाथोराशौ आपत्समुद्रे ध्रुवं निश्चलं नियतं वा यथा स्यात्तथा तरिर्नौकाऽपि च संसारविपिने अलघुवह्निर्महावह्निर्मुनीनां मननशीलानां ज्ञानाग्नेररणिर्ज्ञानोद्भवकर्त्ता त्वदीयोऽयं अङ्घ्रिर्विजयते सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥८० ॥

समस्तैः संसेव्यः सततमपि कामाक्षि विबुधैः
स्तुतो गन्धर्वस्त्रीसुललितविपञ्चीकलरवैः ॥
भवत्या भिन्दानो भवगिरिकुलं जृम्भिततमो-
वलद्रोही मातश्चरणपुरुहूतो विजयते ॥ ८१ ॥

अन्वयः ॥ हे कामाक्षि ! हे मातः ! समस्तैः संसेव्यो विबुधैरपि च सततं संसेव्यो गन्धर्वस्त्रीसुललितविपञ्चीकलरवैः स्तुतो भवगिरिकुलं भिन्दानो जृम्भिततमोवलद्रोही भवत्याश्चरणपुरुहूतो विजयते ॥ ८१ ॥

टीका ॥ हे कामाक्षि ! हे मातः ! समस्तैर्जगज्जीवैः स्वात्मनां भोगमोक्षार्थं सम्यक् शिवोक्तशास्त्रविधानैः संसेव्यो विबुधैर्देवैः स्वकार्यार्थं मोक्षार्थिभिर्ज्ञानिजनैश्च सततं स्वात्मत्वेन संसे-

व्यः । यद्वा विबुधा अहेतुकभक्तियुक्ताः तवचरणप्रेमिजनास्तैरपि च । यद्वा विबुधा देवा ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्याः सृष्टिस्थितिसंहारपिधानानुग्रहकर्त्तारस्तव चरणयोर्मञ्चचरणफलकरूपाश्चरणमहिमावेदिनस्तैरपि तु सततं शिरसा धारणेन संसेव्यः गन्धर्वाणां याः स्त्रियस्तासां सुष्ठु ललिता ये विपञ्च्या वीणायाः । यद्वा सुललिता विपञ्ची तस्याः कलरवा मनोहरशब्दास्तैः स्तुतः भवः संसारः स एव गिरिः पर्वतस्तस्य कुलं भिन्दानो नाशकर्त्ता जृम्भिततमोवलद्रोही जृम्भितानि एधितानि प्रकाशितानि च तानि तमांसि जृम्भिततमांसि तेषां जृम्भिततमसामन्धकाराणामज्ञानानां नरकाणां पापानां शोकानां कार्याकार्याविवेकिनां विशेषदर्शनविरोधिदोषाणां तमोगुणस्य राहोश्च दैत्यानां बलं सामर्थ्यं सेना वा जृम्भिततमोवलं तेन जृम्भिततमोवलेन साकं द्रोहोस्यास्तीति जृम्भिततमोवलद्रोही हे मातर्भवत्यास्तव चरणरूपपुरुहूतोऽङ्घ्रीन्द्रः विशेषेण जयते सर्वोत्कर्षेण वर्तत इत्यर्थः ॥ ८१ ॥

वसन्तं भक्तानामपि मनसि नित्यं परिलसद्–
घनच्छायापूर्णं शुचिमपि नृणां पापशमनम् ॥
नखेन्दुज्योत्स्नाभिः शिशिरमपि पद्मोदयकरं
नमामः कामाक्ष्याश्चरणयुगमाश्चर्यकरणम् ॥ ८२ ॥

अन्वयः ॥ भक्तानां मनसि नित्यं वसन्तं सन्तमपि शुचिमपि परिलसद्घनच्छायापूर्णमपि पद्मोदयकरं नखेन्दुज्योत्स्नाभिः शिशिरमपि आश्चर्यकरणं पापशमनं कामाक्ष्याश्चरणयुगं नमामो वयमिति शेषः ॥ ८२ ॥

टीका ॥ भक्तानां मनसि नित्यं वसन्तं निवसन्तं, वसन्तं ऋतुमपि च सन्तं; शुचिं स्वयं पवित्रं शुचिं ग्रीष्मर्त्तुं चापि परिलसन्ती घना सघना चासौ छाया कान्तिस्तथोक्ता तया पूर्णं समन्ताल्लसन्ती घनस्य मेघस्य चच्छाया दीप्तिस्तया पूर्णं वर्षर्तुमपि पद्मोदयकरं भक्तहृदयकञ्जस्य हृदयकञ्जे वा उदयं विकाशं प्रकाशं वा करोति तम् । पद्मानां सरोजानां उदयं करोतीति तथोक्तं शरदृतुं चापि नखेन्दुज्योत्स्नाभिर्नखचन्द्रचन्द्रिकाभिः शिशिरं शीतलं शिशिरं ऋतुं चापि हिमं चापि अधिकाश्चर्यकरणं नृणां पापशमनं कामाक्ष्याश्चरणयोर्युगं युगलं नमामो वयमिति शेषः ॥ भक्तमनसि वसन्तं सन्तमपि शुचिं तं सन्तमपि परिलसद्घनच्छायापूर्णं सन्तमपि पद्मोदयकरं, तं सन्तमपि नखेन्दुज्योत्स्नाभिः शिशिरं पापशमनमतोऽधिकाश्चर्यकरणं कामाक्ष्याः पदयुगं नमामः । वयमिति शेषः ॥ ८२ ॥

कवीन्द्राणां नानाभणितिगुणचित्रीकृतवचः
प्रपञ्चव्यापारप्रकटनकलाकौशलनिधिः ॥
अधःकुर्वन्नब्जं सनकभृगुमुख्यैर्मुनिजनै–
र्नमस्यः कामाक्ष्याश्चरणपरमेष्ठी विजयते ॥ ८३ ॥

अन्वयः ॥ कवीन्द्राणां नानाभणितिगुणचित्रीकृतवचःप्रपञ्चव्यापारप्रकटनकलाकौशलनिधिरब्जमधःकुर्वन् सन् सनकभृगुमुख्यैर्मुनिजनैर्नमस्यः कामाक्ष्याश्चरणपरमेष्ठी विजयते ॥ ८३ ॥

टीका ॥ कवीन्द्राणां नानाभणितीनां संस्कृतप्राकृतादिषड्भाषाणां नानोक्तीनां च शृङ्गाररसादिरसालंकारप्रसादमाधुर्यध्वनिव्यङ्ग्याद्यनेककवितागुणैश्चित्राकृतानि वचांसि यस्मिन् यस्माद्वा स चरणोऽपि ब्रह्मापि प्रपञ्चस्य व्यापारो रचनक्रिया तस्य प्रकटनस्य प्रकटने वा याः कलास्तासां तासु वा कौशलनिधिश्चातुर्यकोषः चरणोऽपि ब्रह्मापि चरणोपि स्वस्य सौन्दर्यादिगुणैरब्जं रक्तकमलमधः नीचैः करोतीति कुर्वन् सन् ब्रह्मापि आसनत्वेन कमलमधःकरोति सनकभृगू मुख्यौ येषां ते सनकभृगुमुख्यास्तैर्मुनिजनैर्नमस्यो नमस्कारयोग्यः पूज्य इति यावत्। अतः कामाक्ष्याश्चरण एव परमेष्ठी ब्रह्मा विजयते ॥ ८३ ॥

भवत्याः कामाक्षि स्फुरितपदपङ्केरुहभुवां
परागाणां पूरैः परिहृतकलङ्कव्यतिकरैः ॥
नतानामामृष्टे हृदयमुकुरे निर्मलरुचि
प्रसन्ने निःशेषं प्रतिफलति विश्वं गिरिसुते ॥ ८४ ॥

अन्वयः ॥ हे कामाक्षि ! हे गिरिसुते ! भवत्याः परिहृतकलङ्कव्यतिकरैः स्फुरितपदपङ्केरुहभुवां परागाणां पूरैरामृष्टे निर्मलरुचि प्रसन्ने नतानां हृदयमुकुरे निःशेषं विश्वं प्रतिफलति ॥८४॥

टीका ॥ हे कामाक्षि ! हे पर्वतकन्ये ! भवत्याः स्फुरिते विकसिते चेष्टिते इति यावत्। ये पदपङ्केरुहे ताभ्यां तयोर्वा भवन्तीति पदपङ्केरुहभुवः तेषां परागाणां चरणकञ्जरजसां पूरैः भरैः कीदृशैः परितो हृतस्य अभितो दूरीकृतस्य मायामलस्य दोषस्य व्यतिकरः संबन्धः समूहो वा यैस्तैरासमन्तान्मृष्टे सुसंस्कृते उज्ज्वलिते निर्मला मलरहिता रुक्रुचिर्यस्य स तस्मिन् अत एव प्रसन्ने स्वच्छे नतानां भक्तानां मनोदर्पणे निःशेषं अशेषं विश्वं प्रतिफलतीत्यर्थः। तव चरणकमलध्यानस्य सादरनिरन्तरदृढाभ्यासबलेन करामलकवज्जगत् त्वच्चरणध्यानिनः पश्यन्तीति भावः ॥ ८४ ॥

तव त्रस्तं पादात्किसलयमरण्यान्तरमगात्-
परं रेखारूपं कमलममुमेवाश्रितमभूत् ॥
जितानां कामाक्षि द्वितयमपि युक्तं परिभवे
विदेशे वासो वा शरणगमनं वा निजरिपोः ॥ ८५ ॥

अन्वयः ॥ हे कामाक्षि ! तव चरणात्त्रस्तं किसलयमरण्यान्तरमगात् परं कमलं रेखारूपममुं चरणमाश्रितमभूत् अतो जितानां परिभवे सति विदेशे वासो निजरिपोः शरणगमनं वा इदं द्वितयमपि युक्तमेवेत्यन्वयः ॥ ८५ ॥

टीका ॥ हे कामाक्षि ! तव श्रीमच्चरणात्त्रस्तं भीतं किसलयं पल्लवमरण्यान्तरं वनान्तरमगात् परमन्यत्कमलं दुःखेन रेखारूपं कृशीभूतं श्रीमत्सौन्दर्यसमृद्धिमन्तममुं चरणराजानं प्रति आश्रितं शरणागतमभूत् तस्माज्जितानां परिभवे तिरस्कारे जाते सति निश्चयेन द्वितयं द्विप्रकारकमिदमुपायं युक्तमेव विदेशे परदेशे वासो वाऽथवा निजरिपोः शरणगमनमित्यर्थः । निजरिपोः सकाशात्परिभवे सति जितानां विजयप्राप्तानां शरणगमनं युक्तमेवेति वा योज्यम् ॥ ८५ ॥

गृहीत्वा याथार्थ्यं निगमवचसां देशिककृपा—
कटाक्षार्कज्योतिःशमितममताबन्धतमसः ॥
यतन्ते कामाक्षि प्रतिदिवसमन्तर्द्रढयितुं
त्वदीयं पादाब्जं सुकृतपरिपाकेन सुजनाः ॥ ८६ ॥

अन्वयः ॥ हे कामाक्षि ! देशिककृपाकटाक्षार्कज्योतिःशमितममताबन्धतमसः सुजनाः निगमवचसां याथार्थ्यं गृहीत्वा सुकृतपरिपाकेन त्वदीयं पादाब्जं प्रतिदिवसमन्तर्द्रढयितुं यतन्ते ॥ ८६ ॥

टीका ॥ हे कामाक्षि ! देशिकः श्रीपूज्यपादस्तस्य कृपाकटाक्षः सएवार्कज्योतिः सूर्यतेजस्तेन शमितो नाशितोऽहंताममतारूपो बन्धः ज्ञानप्रतिबन्धकतमोगुणोऽज्ञानं वा येषां ते तथोक्ताः सुजना रहउपासका आत्यन्तिकभक्ताः निगमवचसां तवोपासनावेदवाक्यानां याथार्थ्यं सत्यार्थं भेदभावरहितमर्थं वा गृहीत्वा सुकृतं पुण्यं तस्य परिपाकेन फलेन अन्तरभ्यन्तरे दहराकाशे ब्रह्मरन्ध्रे वा मनसि वा स्थितं त्वदीयं पादाब्जं द्रढयितुं प्रतिदिवसं नित्यं बाह्यपदार्थैर्बाह्ये श्रीचक्रादौ पूजनेन मानसपदार्थैर्मानसे च अनेकविधोपास्तिभेदेषु श्रीनिजनाथदर्शितवर्त्मना यतन्ते यत्नं कुर्वन्ति ते धन्याः तेषां त्वत्कृपया नित्याभ्यासबलात्साक्षात्कारं प्रत्यक्षं त्वच्चरणो भवतीति भावः । अमुना साधनं दर्शितम् ॥ ८६ ॥

जडानामप्यम्ब स्मरणसमये त्वच्चरणयो—
र्भ्रमन्मन्थक्ष्माभृद्घुमघुमितसिन्धुप्रतिभटाः ॥ स्वच्छत्वेनेदं पदम्
प्रसन्नाः कामाक्षि प्रसभमधरस्पन्दनकला
विभान्ति स्वच्छन्दं प्रकृतिपरिपक्वा भणितयः ॥ ८७ ॥

अन्वयः ॥ हे कामाक्षि ! हे अम्ब ! जडानामपि त्वच्चरणयोः स्मरणसमये भ्रमन्मन्थक्ष्माभृद्घुमघुमितसिन्धुप्रतिभटाः प्रसन्नाः प्रसभं स्वच्छन्दमधरस्पन्दनकलाः प्रकृतिपरिपक्वा भणितयो विभान्ति ॥ ८७ ॥

टीका ॥ हे कामाक्षि ! हे अम्ब ! जडानां पाषाणतुल्यबुद्धीनामपि त्वच्चरणयोः स्मरणसमये भ्रमन्सन् यो मन्थक्ष्माभृन्मन्थाचलस्तेन घुमघुमितोतिमथितो भ्रमितो यः सिन्धुः क्षीरसमुद्रस्तस्य प्रतिभटाः प्रतियोध्यः अत्युज्ज्वला इत्यर्थः । प्रसन्नाः प्रसादगुणवत्यः स्वच्छाः दोषर-

हिताः प्रसभं हठात् स्वच्छन्दं स्वतन्त्रं यथा भवति तथाऽधरस्य स्पन्दनकला ओष्ठस्य किंचित्स्फुरणरूपसामर्थ्यं लेशमात्रं यासु ताः प्रकृत्या स्वभावेन परिपक्वाः शास्त्राभ्यासेन विनैव गद्यपद्यात्मिकाः सर्वकविताङ्गसंपन्ना भणितय उक्तयो विभान्ति विशेषेण शोभन्त इत्यर्थः ॥८७॥

वहन्नप्यश्रान्तं मधुरनिनदं हंसकमसौ
तमेवाधः कर्तुं किमिव यतते केलिगमने ॥
भवस्यैवानन्दं विदधदपि कामाक्षि चरणो
भवत्यास्तद्द्रोहं भगवति किमेवं वितनुते ॥ ८८ ॥

अन्वयः ॥ हे कामाक्षि ! हे भगवति ! असौ भवत्याश्चरणः केलिगमने सप्तम्यन्तं संबुद्ध्यन्तं वा पदं अश्रान्तं यथा स्यात्तथा मधुरनिनदं हंसकं वहन्नपि तमेवाधः कर्तुं किमिव यतते भवस्यानन्दं विदधदपि तद्द्रोहं किमेवं वितनुत इत्यन्वयः ॥ ८८ ॥

टीका ॥ हे कामाक्षि ! हे भगवति ! केल्या लीलया गमनं गतिर्यस्याः सा अन्यथा सर्वत्र व्यापकत्वाद्गतेरभावः पराशक्तेरिति भावः। यद्वा केल्यर्थं केवललीलार्थं गमनं स्वलोकान्मर्त्यलोके यस्यां सा वा तत्संबुद्धौ हे तथाविधे ! यद्वा सप्तम्येकवचनम् । लीलया गमने गमनविषयेऽश्रान्तं यथा स्यात्तथा मधुरो मनोहरो निनदोऽव्यक्तशब्दो यस्य तं हंसकं पादकटकं पदाङ्गुलीयाभरणं वा हंस एव हंसकः पक्षिविशेषो राजहंसः कलहंसश्च तं वहन्नपि पुनस्तमेव हंसकं भवत्याश्चरणोऽधो नीचैः कर्तुं किमिव यतते कस्य सदृशं यत्नं करोति ॥ भवः श्रीशिवः संसारश्च तस्याऽऽनन्दं स्वगत्याः सौन्दर्येण स्वालंकृतिमधुररववादनेन ललितगमनेन विदधदपि कुर्वाणोऽपि तद्द्रोहं तस्य वैरं किमर्थमेवं वितनुते विस्तारयति अर्थान्नूपुरादिमधुररवललितगमनलीलालज्जितराजहंसकलहंसः परमशिवानन्दप्रदोऽद्वैतमानरूपाज्ञानपरिणतजगन्नाशकर्त्ता सर्वं खल्विदं ब्रह्मेत्याकारभानभासको भवत्याश्चरण एवेति भावः ॥ ८८ ॥

यदत्यन्तं ताम्यत्यलसगति वार्तास्वपि शिवे
तदेतत्कामाक्षि प्रकृतिमृदुलं ते पदयुगम् ॥
किरीटैः संघट्टं कथमिव सुरौघस्य सहते
मुनीन्द्राणामास्ते मनसि च कथं सूचिनिशिते ॥ ८९ ॥

अन्वयः ॥ हे कामाक्षि ! हे शिवे ! वार्तास्वपि यदलसगति अत्यन्तं ताम्यति तदेतत् प्रकृतिमृदुलं ते तव पदयुगं सुरौघस्य किरीटैः संघट्टं कथमिव सहते च पुनर्मुनीन्द्राणां सूचिनिशिते मनसि च कथमास्ते ॥ ८९ ॥

टीका ॥ हे कामाक्षि ! हे शिवे ! यत् अलसगति अलसा मन्दा गतिर्यस्य यस्मिन्निति तत् पदयुगं वार्त्तास्वपि गमनकथास्वपि। यद्वा अलसगतिवार्त्तास्वपीत्येकं पदम् । यदलसगतिवार्त्तासु मन्दगमनकथास्वप्यत्यन्तं ताम्यति खिन्नं भवति तदेतत्स्वभावेन मृदुलं कोमलं ते तव पदयोर्युगं

सुराणां देवानां य ओघः समूहस्तस्य किरीटैर्मुकुटैः संघट्टं संयोगं पदस्यातिकोमलत्वात्सुरमुकुटानामतिकठोरत्वाद्बाहुल्याच्च कथमिव केन प्रकारेणैव सहते मुनीन्द्राणां सूचिरिव निशितं सूच्यग्रमिवातितीक्ष्णं तस्मिन् मनसि च पुनः कथमास्ते तिष्ठतीत्यर्थः। सदैव कठोरातितीक्ष्णसङ्गेन भक्तमनःसु खेदोतिचित्रं च भवतीति भावः॥ ८९॥

मनोरङ्गे मत्के विबुधजनसंमोदजननी
सरागव्यासङ्गं सरसमृदुसंचारसुभगा॥
मनोज्ञा कामाक्षि प्रकटयतु लास्यप्रकरणं
चलन्मञ्जीरा ते चरणयुगली नर्त्तकवधूः॥ ९०॥

अन्वयः॥ हे कामाक्षि! मत्के मनोरङ्गे विबुधजनसंमोदजननी सरसमृदुसंचारसुभगा मनोज्ञा चलन्मञ्जीरा नर्त्तकवधूस्ते तव चरणयुगली सरागव्यासङ्गं लास्यप्रकरणं प्रकटयतु॥९०॥

टीका॥ हे कामाक्षि! मत्के मामके मनोरङ्गे मनोरूपनर्त्तकक्रीडाङ्गणे विबुधा देवा ज्ञानिनश्च ते च ते जनाश्च तथोक्तास्तेषां संमोदो हर्षस्तस्य जननी उद्भावयित्री रागेण स्नेहेन सह वर्तमानः सरागस्तस्य विशेषेणासमन्तात्सङ्गं संयोग आसक्तिर्वा तत् यथा स्यात्तथा रसेन शृङ्गाररसेन नृत्यरसेन वा "रसो वै सः" इति श्रुतेः। ब्रह्मानन्दरसेन वा सहवर्त्तमानः सरसः स चासौ मृदुसंचारः कोमलपादविक्षेपस्तेन तस्मिन् वा सुभगा सुन्दरी मनोहरा चलन्तौ मञ्जीरौ यस्याः सा नर्त्तकवधूर्नर्त्तकस्य ताण्डवविद्यानिपुणस्य प्रदोषे प्रलये वा। कृतताण्डवस्य श्रीशिवस्य वधूः। यद्वा नर्तकरूपा वधूः। तव चरणयुगलीलास्यं स्त्रीकर्त्तव्यं नृत्यं प्रकटयतु स्फुटीकरोतु मन्मनसि नृत्यतामित्यर्थः। सरागव्यासङ्गमिति पदं लास्यप्रकरणमित्यस्य विशेषणं वा। अर्थस्तु पूर्ववदेवेति॥ ९०॥

परिष्कुर्वन्मातः पशुपतिकपर्दं चरणराट्
पराचां हृत्पद्मं परमभणितीनां च मुकुटम्॥
भवाख्ये पाथोधौ परिहरतु कामाक्षि ममता—
पराधीनत्वं मे परिमुषितपाथोजमहिमा॥ ९१॥

अन्वयः॥ हे कामाक्षि! हे मातः! पशुपतिकपर्दं पराचां हृतपद्मं परमभणितीनां च मुकुटं परिष्कुर्वन् सन् परिमुषितपाथोजमहिमा ते तव चरणराट् भवाख्ये पाथोधौ मे ममतापराधीनत्वं परिहरत्वित्यन्वयः॥ ९१॥

टीका॥ हे कामाक्षि! हे मातः पशुपतेः शिवस्य कपर्दं जटाजूटं पराचां प्राचीनानां पुनः हृत्पद्मं अनाहताख्यं, यद्वा हृद्रूपं मनोरूपं कमलं तत् च पुनः परममणितीनां मुकुटं परमस्य परमेश्वरस्य भणितयः परमाश्च ता भणितयश्च तथोक्तास्तासां वेदरूपवाणीनां वा। मुकुटमुपनिषल्लक्षणं स्वस्थितिकरणेन परिस्कुर्वन् अलं शुद्धं च कुर्वन् सन् परिमुषितपाथोजमहिमा परितो मुषितो हृतः पाथोजस्य महिमा महत्त्वं गौरवं येन स तथोक्तस्ते तव चरणराट् अङ्घ्रिराजा

भवाख्ये पाथोधौ संसारनाम्नि समुद्रे मे मम ममतापराधीनत्वं मामकमिदं धनं मामका इमे पुत्रा इत्याद्याकारिका बुद्धिस्तत्परतंत्रत्वं हरतु नाशयत्वित्यर्थः ॥ ९१ ॥

प्रसूनैः संपर्कादमरतरुणीकुन्तलभवै-
रभीष्टानां दानादनिशमपि कामाक्षि नमताम् ॥
स्वसङ्गात्कङ्केलिप्रसवजनकत्वेन च शिवे
त्रिधा धत्ते वार्त्तां सुरभिरिति पादो गिरिसुते ॥ ९२ ॥

**अन्वयः ॥ हे कामाक्षि ! हे गिरिसुते ! हे शिवे ! अमरतरुणीकुन्तलभवैः प्रसूनैः संपर्कात्ते पादः सुरभिः सुगन्धीति नमतां स्वसङ्गादभीष्टानां दानात्सुरभिः कामधेनुरिति कङ्केलिप्रसवजनकत्वेन च ते पादः सुरभिर्वसन्त इति अनिशं त्रिधा वार्त्तां धत्त इत्यन्वयः ॥ ९२ ॥**

टीका ॥ हे कामाक्षि ! हे गिरिसुते ! हे शिवे ! ते पादः अमरतरुणीकुन्तलभवैर्देवस्त्रीणां केशपाशभवैः प्रसूनैः पुष्पैः संपर्कात्संयोगात्सुरभिः सुगन्धीति नमतां भक्तानां स्वसङ्गादभीष्टानां तत्तन्मनोभिलषितानां दानादपि च पुनः सुरभिः कामधेनुरिति । स्वस्य पादस्य सङ्गात्संबन्धात् कङ्केलेरशोकस्य प्रसवाः पुष्पाणि तेषां जनकत्वेनोत्पादकत्वेन सुरभिर्वसन्त इति त्रिधा त्रिप्रकारा वार्त्ता वर्तनं जनश्रुतिं वा । अनिशं निरन्तरं धत्ते । अमरललनाकुन्तलकुसुमसंयोगात्पादः सुरभिः परिमल इति वार्त्तां नमतां स्वसङ्गादभीष्टदानात्पादः सुरभिः कामदुघा धेनुरिति वार्त्तां कङ्केलिप्रसवजनकत्वेन रक्तपुष्पकान्तीजनकत्वेन च सुरभिर्वसन्त इति त्रिधा वार्त्तां त्रिप्रकारं वर्त्तनं जनश्रुतिं च ते पादो बिभर्तीत्यर्थः ॥ ९२ ॥

महामोहस्तेनव्यतिकरभयात्पालयति यो
विनिक्षिप्तं स्वस्मिन्निजजनमनोरत्नमनिशम् ॥
स रागस्योद्रेकात्सततमपि कामाक्षि रुचिरां
किमेवं पादोसौ किसलयरुचिं चोरयति ते ॥ ९३ ॥

**अन्वयः ॥ हे कामाक्षि ! यस्ते तवासौ पादः स्वस्मिन् विनिक्षिप्तं निजजनमनोरत्नमनिशं महामोहस्तेनव्यतिकरभयात्पालयति स रागस्योद्रेकात्सततमपि रुचिरां किसलयरुचिं एवं किं चोरयति ॥ ९३ ॥**

टीका ॥ हे कामाक्षि ! यस्ते तवासौ पादः स्वस्मिन्विनिक्षिप्तं स्थापितं निजजनानां मनोरत्नं निरन्तरं महामोहस्तेनव्यतिकारभयात् पालयति महामोहोऽज्ञानं देहाहंमानं स्त्रीपुत्रबन्धुगृहादिषु स्नेहः स एव स्तेनोऽज्ञानस्य मोक्षस्य वा चोरस्तस्य व्यतिकरभयात् संबन्धभयान्नित्यं रक्षति सततमपि नित्यमपि सरागस्योद्रेकादाधिक्याद्रुचिरां मनोज्ञामपि किसलयरुचिं पल्लवानां कान्तिमेवं किं चोरयति अमुना प्रकारेण किमर्थं हरतीत्यर्थः ॥ यद्वा निजजनमनोरत्नं स्वस्मिन्विनिक्षिप्तं स्थापितं महामोहस्तेनव्यतिकरभयान्महाऽज्ञानचोरबाहुल्यभयाद्धेतोः पालयति स रागस्योद्रेकात्स्नेहाधिक्याद्रक्तिमाधिक्याच्च स किं नूतनपत्रश्रियं शोभां लक्ष्मीं

तुच्छामेवं किं चोरयति अपि तु नापहरतीति काकुरपि वा ॥ अर्थात्तव चरणोऽतिकृपालुः स्वभावादेवातिरक्तकोमल इति भावः ॥ ९३ ॥

सदा स्वादुंकारं विषयलहरीशालिकणिकां
समास्वाद्य श्रान्तं हृदयशुकपोतं जननि मे ॥
कृपाजाले फालेक्षणमहिषि कामाक्षि रभसा-
द्गृहीत्वा रुन्धीथाश्चरणयुगलीपञ्जरपुटे ॥ ९४ ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि ! हे फालेक्षणमहिषि ! सदा स्वादुंकारं विषयलहरी शालिकणिकां समास्वाद्य श्रान्तं मे मम हृदयशुकपोतं कृपाजाले रभसाद्गृहीत्वा चरणयुगलीपञ्जरपुटे रुन्धीथाः कृपाजाले इति संबोधनपदं वा ॥ ९४ ॥

टीका ॥ हे कामाक्षि ! हे जननि ! हे फालेक्षणमहिषि ! भालनेत्रपट्टराज्ञि ! कृपारूपजालं भक्तमानसमीनबन्धनरूपं यस्याः सा । यद्वा कृपायाः समूहो यस्यां सा तत्संबुद्धौ हे तथाविधे ! कृत्वा मुख्यतः कृपाजाले इति सप्तम्येकवचनं पदम् । सर्वस्मिन्काले अस्वादुं स्वादुं कृत्वा भुङ्क्ते इति स्वादुंकारं यथा स्यात्तथा विषयाणां लहर्य्यस्ता एव शालयो व्रीहयस्तेषां कणिका कणीति लोके प्रसिद्धा तां विषयरसलेशं समास्वाद्य स्वात्मीकृत्य श्रान्तं श्रमितं विषयकणार्थे बहु भ्रमितं मे मम हृदयं मन एव शुकपोतं शुकबालं रभसाद्वेगेन झटिति वा कृपारूपो जालः कृपाजालः विस्तीर्णशीलत्वाद्भक्तमनोग्राहकत्वात्कृपाया जालत्वं, तस्मिन् गृहित्वा चरणयुगल्येव पञ्जरपुटस्तस्मिन् रुन्धीथाः रुंत्स्वेत्यर्थः । विषयासक्तं मम मनः कृपया स्वचरणयोः स्थितं कुरुष्वेति भावः ॥ ९४ ॥

धुनानं कामाक्षि स्मरणलवमात्रेण जडिम-
ज्वरप्रौढिं गूढस्थितिनिगमनैकुञ्जकुहरे ॥
अलभ्यं सर्वेषां कतिचन लभन्ते सुकृतिन-
श्चिरादन्विष्यन्तस्तव चरणसिद्धौषधमिदम् ॥ ९५ ॥

अन्वयः ॥ हे कामाक्षि ! निगमनैकुञ्जकुहरे सर्वेषामलभ्यं गूढस्थितिस्मरणलवमात्रेण जडिमज्वरप्रौढिं धुनानं चिरादन्विष्यन्तः कतिचन सुकृतिनस्तव चरणसिद्धौषधमिदं लभन्ते ॥९५॥

टीका ॥ हे कामाक्षि ! स्मरणस्य लवमात्रेण किंचिच्चिन्तनेन जडिमा मूर्खता देहाहंता सैव ज्वरस्तस्य प्रौढिं तारुण्यम् । यद्वा सर्वप्राकारिकं बुद्धिजाड्यं तेन जातो यस्तापः तस्य तारुण्यं प्राबल्यं धुनानं कम्पयत् तत् निगमो वेदः स एव निकुञ्जो लतागृहं निकुञ्ज एव नैकुञ्जस्तद्रूप कुहरे छिद्रे स्थितिकरणसावकाशरूपे गूढा अलक्ष्या स्थितिर्यस्य तद्गूढस्थिति, अत एव सर्वेषामलभ्यं तत् चिराद्बहुकालपर्य्यन्तमन्विष्यन्तः कतिचन सुकृतिनः केचिद्विरलाः पुण्यकारिणो जनाः तव चरण एव सिद्धौषधं सिद्धं सत्यमनादिसिद्धं च तदौषधं च सिद्धौषधं इदं लभन्ते

प्राप्नुवन्तीत्यर्थः । क्षणमात्रस्मरणजडिमज्वरबाहुल्यहारको निगमसारश्चिरादुपासनोपायतत्परैः केश्चित्सुकृतिभिर्लभ्यः संसारतापनाशकस्तवानादिसिद्धभैषज्यरूपश्चरण इति भावः ॥ ९५ ॥

रणन्मञ्जीराभ्यां ललितगमनाभ्यां सुकृतिनां
मनोवास्तव्याभ्यां मथिततिमिराभ्यां नखरुचा ॥
विधेयाभ्यां पत्या निजशिरसि कामाक्षि सततं
नमस्ते पादाभ्यां नलिनमृदुलाभ्यां गिरिसुते ॥ ९६ ॥

अन्वयः ॥ हे कामाक्षि ! हे गिरिसुते रणन्मञ्जीराभ्यां नलिनमृदुलाभ्यां सुकृतिनां मनोवास्तव्याभ्यां नखरुचा मथिततिमिराभ्यां पत्या निजशिरसि सततं विधेयाभ्यां नलिनमृदुलाभ्यां ते तव पादाभ्यां नमः ॥ ॥ ९६ ॥

टीका ॥ हे कामाक्षि ! हे गिरिजे ! रणन्तौ शब्दायमानौ मञ्जीरौ ययोस्तौ ताभ्यां ललितं मनोहरं गमनं ययोस्तौ ताभ्यां सुकृतिनां पुण्यकर्तॄणां मन एव वास्तव्यं ययोर्मनस्येव वास्तव्यौ वा ताभ्यां नखरुचा कान्त्या नाशितं तिमिरं याभ्यां ताभ्यां पत्या श्रीएकाम्रनाथेनातिप्रेम्णा निजशिरसि सततं नित्यं विधेयाभ्यां धारणीयाभ्यां नलिनं कमलं तद्वन्मृदुलौ कोमलौ यौ ताभ्यां ईदृशाभ्यां ते तव पादाभ्यां नमोऽस्तु इत्यर्थः । तव चरणार्चनस्तवनादिकभक्ताचारासमर्थस्य मम केवलं ते चरणारविन्दाभ्यां नमो मात्रं भवतु एतेनैवाहं कृतकृत्यो भवामीति भावः ॥ ९६ ॥

यशः सूते मातर्मधुरकवितां पक्ष्मलयते
श्रियं दत्ते वित्ते कमपि परिपाकं प्रथयते ॥
सतां पाशग्रन्थिं शिथिलयति किं किं न कुरुते
प्रपन्ने कामाक्ष्याः प्रणतिपरिपाटी चरणयोः ॥ ९७ ॥

अन्वयः ॥ हे मातः ! प्रपन्ने तव श्रीकामाक्ष्याश्चरणयोः प्रणतिपरिपाटी यशः सूते मधुरकवितां पक्ष्मलयते श्रियं दत्ते वित्ते कमपि परिपाकं प्रथयते सतां पाशग्रन्थि शिथिलयति किं किं न कुरुते। अपि तु सर्वं कुरुत इत्यन्वयः ॥ ९७ ॥

टीका ॥ हे मातः ! प्रपन्ने शरणागते तव श्रीकामाक्ष्याश्चरणयोः प्रणतिः प्रकर्षेण नमस्कारस्तस्याः परिपाटी रीतिः परंपरेति यावत् । शरणागते जने यशः सूते उत्पादयते मधुरकवितां श्रुत्यानन्दतृप्तिप्रदां पक्ष्मलयते वर्द्धयति श्रियं लक्ष्मीं दत्ते वित्ते धने सद्व्ययकरणात्किमप्यलौकिकं परिपाकं भक्तिरूपं मोक्षरूपं वा फलं प्रथयते वर्धयते सतां भक्तानां कर्मरूपपाशग्रन्थिं शिथिलयति मोक्षयति प्रपन्ने किं किं न करोति किं तु सर्वं करोति श्रीकामाक्ष्यास्तव चरणनमस्कृतिर्भोगमोक्षयशोदायिनी ॥ "घृणिः शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी । कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः ॥ १ ॥ पाशबद्धः सदा जीवः पाशमुक्तः सदा शिवः" इति उक्तदृढपाशाष्टकरूपबन्धच्छेदं कृत्वा स्वोपासकं जीवं सदा शिवरूपं करोतीति भावः ॥९७॥

मनीषां माहेन्द्रीं ककुभमिव ते कामपि दशां
प्रधत्ते कामाक्ष्याश्चरणतरुणादित्यकिरणः ।
यदीये संपर्के धृतरसमरन्दा कवयतां
परीपाकं धत्ते परिमलवती सूक्तिनालिनी ॥ ९८ ॥

अन्वयः ॥ ते कामाक्ष्याश्चरणतरुणादित्यकिरणो माहेन्द्रीं ककुभमिव मनीषां कामपि दशां प्रधत्ते ॥ यदीये संपर्के धृतरसमरन्दा परिमलवती कवयतां सूक्तिनलिनी परीपाकं धत्ते ॥९८॥

टीका ॥ हे मातः ! ते तव कामाक्ष्याश्चरण एव तरुणादित्यस्तस्य चरणतरुणादित्यस्य किरणो रश्मिः माहेन्द्रीं महेन्द्रसंबन्धिनीं ककुभं दिशां पूर्वदिशमिव कवयतां मनीषां बुद्धिं प्रति कामपि दशामवस्थां प्रधत्ते अतिविकाशवर्तीं अलौकिकश्रीमतीं कुरुते । यदीये चरणादित्यकिरणसंपर्के संयोगे जाते सति धृतः शृङ्गारादिरसरूपः काव्यरसरूपो वा ब्रह्मज्ञानरूपो रसो वा स एव मरन्दो मकरन्दो यया सा तथाविधा परिमलः सुगन्धोऽस्यामस्तीति सा परिमलवती यशोमतीत्यर्थः। कवयतां कविताकर्तॄणां सुष्ठूक्तिः सूक्तिः सैव नलिनी कमलिनी परीपाकं ग्रन्थरचनारूपफलं नैपुण्यं वा धत्ते दधातीत्यर्थः ॥ श्रीमती गुणचरित्रसंयुक्तग्रन्थकल्पनया पुरुषार्थचतुष्टयरूपं फलं दधातीति भावः ॥ ९८ ॥

सुरागे राकेन्दुप्रतिनिधिमुखे पर्वतसुते
चिराल्लभ्ये भक्त्या समधनजनानां परिषदा ॥
मनोभृङ्गो मत्कः पदकमलयुग्मे जननि ते
प्रकामं कामाक्षि त्रिपुरहरवामाक्षि रमताम् ॥ ९९ ॥

अन्वयः ॥ हे कामाक्षि ! हे पर्वतसुते ! हे जननि ! हे त्रिपुरहरवामाक्षि ! सुरागे राकेन्दुप्रतिनिधिमुखे समधनजनानां परिषदा भक्त्या चिराल्लभ्ये ते तव पदकमलयुग्मे मत्को मनोभृङ्गः प्रकामं रमताम्। सुराग इत्यादिपदानि हे कामाक्षि इत्यस्य विशेषणानि संबुद्ध्यन्तानि वा भवितुं शक्यानि; परं त्वत्र वर्ण्यौ चरणावेवातश्चरणस्यैव विशेषणानि भवितुमर्हन्ति ॥९९॥

टीका ॥ हे कामाक्षि ! हे पर्वतसुते ! हे मातः ! त्रिपुरहरे शिवे वामे आनन्दावलोकनेन श्रेष्ठे रमणीयेऽक्षिणी यस्याः सा शिवं कामवशं नेतुं वामे वक्रेऽक्षिणी यस्या वा । यद्वा शिवदर्शनप्रादुर्भूतानङ्गेन हेतुना वामे कुटिले लोचने यस्यास्तथोक्ता तत्संबुद्धौ हेतादृशि ! सुष्ठु रागो रक्तिमा स्नेहश्च यस्य तस्मिन् राकेन्दुः पूर्णेन्दुस्तस्य प्रतिनिधिः तत्स्थानापन्नं मुखरूपं यस्य तत्तस्मिन् सम उपसमं ब्रह्मज्ञानं शान्तिरेव वा धनं येषां ते तथोक्तास्त एव जनास्तेषां परिषदा सभया सामान्यलक्षणया भक्त्या चिराद्बहुकालाल्लभ्ये अचिराद्वा तेन दृढानन्यया भक्त्या शांभवसत्सङ्गत्या शीघ्रलभ्य इत्यर्थः । तव पदकमलयुग्मे मत्को मामको मनोभृङ्गः प्रकामं यथेष्टं रमतां क्रीडत्वित्यर्थः ॥ अनिमुन्दरेऽनेकविभ्रमक्तिमावनापरायणैः

शान्तैर्भक्तजनैश्चिराल्लभ्ये बहुकालदृढाभ्यासात्प्राप्ये सत्सङ्गत्यात्यन्तिकभक्त्या अचिरादपि प्राप्ये श्रीमत्याश्चरणे मम मनो विहरत्वित्यर्थः ॥ ९९ ॥

पदद्वन्द्वं मन्दं गतिषु निवसन्तं हृदि सतां
गिरामन्ते भ्रान्तं कृतकरहितानां परिवृढे ॥
जनानामानन्दं जननि जनयन्तं प्रणमतां
त्वदीयं कामाक्षि प्रतिदिनमहं नौमि विमलम् ॥ १०० ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि ! हे परिवृढे ! इति संबोधनं ॥ सप्तम्यन्तं परिवृढे पदं सतां हृदीत्यस्य विशेषणं वा । गतिषु मन्दं कृतकरहितानां सतां हृदि निवसन्तं गिरामन्ते भ्रान्तं प्रणमतां जनानामानन्दं जनयन्तं त्वदीयं विमलं पदयुगं प्रतिदिनमहं नौमि ॥ १०० ॥

टीका ॥ हे कामाक्षि ! हे परिवृढे ! हे मातः ! गतिषु गमनेषु मन्दं धीरं मनोहरं जपपूजाध्यानादिना कृतं करे हितं भोगमोक्षात्मकं यैस्ते तथाविधास्तेषां कृतकरहितानां निष्कपटानां वा सतां हृदि निवसन्तं गिरां वाणीनामन्ते पारे इति यावत्। उपरि वा भ्रान्तं प्रणमतां जनानामानन्दं जनयन्तं त्वदीयममलं पदयुगं प्रतिदिनमहं नौमि स्तौमीत्यर्थः। श्रीमत्याश्चरणयुगं गतिमनोहरं भक्तमनोवासं उपनिषदर्थसारं सर्वजनानन्दकारि प्रकाशवत् शुद्धं प्रतिदिनं स्तवीमीत्यर्थः ॥१००॥

इदं यः कामाक्ष्याश्चरणनलिनस्तोत्रशतकं
जपेन्नित्यं भक्त्या निखिलजगदाह्लादजनकम् ॥
स विश्वेषां वन्द्यः सकलकविलोकैकतिलक-
श्चिरं भुक्त्वा भोगान्परिणमति चिद्रूपकलया ॥ १०१ ॥

अन्वयः ॥ यो जनो निखिलजगदाह्लादजनकं कामाक्ष्या इदं चरणनलिनस्तोत्रशतकं भक्त्या नित्यं जपेत्स विश्वेषां वन्द्यः सकलकविलोकैकतिलकश्चिरं भोगान् भुक्त्वा चिद्रूपकलया परिणमति ॥ १०१ ॥

टीका ॥ यो जनो निखिलजगदाह्लादजनकमशेषलोकानां भोगमोक्षफलप्राप्त्यानन्दकरं कामाक्ष्या इदं चरणनलिनस्तोत्रशतकं भगवत्याः पादारविन्दयोः स्तुतिश्लोकशतकं भक्त्या परिपूर्णभावेन जपेत्स विश्वेषां वन्द्यस्त्रिलोकीपूज्यः सकलकविलोकैकतिलकः अशेषकविलोकानां मूर्द्धभिरेक एवाभिवन्द्यश्चिरकालं भोगान् भुक्त्वा चिद्रूपकलया चिद्रूपस्य परब्रह्मणः कला ऐश्वर्यं सामर्थ्यं स्वरूपं वा तया श्रीमत्याः सगुणरूपिण्या । यद्वा चिद्रूपा कला तया परिणमति जीवावस्थां त्यक्त्वा परब्रह्मस्वरूपश्रीमतीरूपो भवतीति भावः ॥ १०१ ॥ श्रीमत्पदाब्जमकरन्दजुषां जनानामाकांक्षितोरुमधुरद्रवसंप्रपूर्णम् ॥ नानाफलं ददति देवि दृगन्तपाताः कारुण्यवारिपरिपुष्ट सुरद्रुमास्ते ॥ १ ॥ प्लवं संसाराब्धेः स्वजनतरणायाति सुदृढं महामोहध्वान्तव्ययविधिविभास्वद्रविनिभम् ॥ त्वदीयानां तापप्रशमन धुरीणं शिवनुते कदा द्रक्ष्ये मातस्तवचरणपङ्केरुहयुगम् ॥ २ ॥

इति श्रीमूककविसार्वभौमकृतपञ्चशत्यां तृतीयस्य पादारविन्दशतकस्य सुवर्णमालाख्या टीका समाप्ता ॥ ३ ॥

कारणपरचिद्रूपा काञ्चीपुरसीम्नि कामपीठगता ।
काचन विहरति करुणा काश्मीरस्तबककोमलाङ्गलता ॥ १ ॥

अन्वयः ॥ काञ्चीपुरसीम्नि कामपीठगता कारणपरचिद्रूपा काश्मीरस्तबककोमलाङ्गलता काचन करुणा विहरतीत्यन्वयः ॥ १ ॥

टीका ॥ कारणं सर्वजगद्धेतुभूतं परं परशिवाख्यं चित् चैतन्यं तदेव रूपं यस्याः सा तथाविधा । यद्वा कारणात् षट्त्रिंशत्तत्त्वतः प्रकृतितो वा परा कारणपरा सा चासौ चिद्रूपा च कारणपराचिद्रूपा काञ्च्येव पुरं काञ्चीपुरं तस्य सीम्नि अन्तभागे कामपीठगता कामरूपीठे प्राप्ता काश्मीरं कुङ्कुमं "काश्मीरजन्माग्निशिखम्" इत्यमरः । तस्य यः स्तबको गुच्छस्तद्वत्कोमलाङ्गरूपा लता यस्याः सा तथाविधा काचन कापि सर्वदेवेभ्यः श्रेष्ठा अनिर्वचनीया करुणा करुणारूपिणी जयति । "जयति करुणा काचिदरुणा" इतिसौन्दर्यलहर्यां श्रीमत्याः करुणारूपत्वेन प्रतिपादनात् ॥ १ ॥

कंचन काञ्चीतिलकं करधृतकोदण्डबाणशृणिपाशम् ।
कठिनस्तनभरनम्रं कैवल्यानन्दकन्दमवलम्बे ॥ २ ॥

अन्वयः ॥ कंचन काञ्चीतिलकं करधृतकोदण्डबाणशृणिपाशं कठिनस्तनभरनम्रं कैवल्यानन्दकन्दमवलम्बे ॥ २ ॥

टीका ॥ कंचन श्रेष्ठमनिर्वचनीयं वा काञ्च्यास्तिलकं तत्पुरस्थजनानां शिरसा वन्दनीयं शोभारूपं वा करैर्धृतं कोदण्डबाणशृणिपाशं येन स तथाविधस्तम् । कठिनौ यौ स्तनौ तयोर्भरो भारः तेन नम्रः नतस्तम् । केवलस्य परमेश्वरस्य मायामलरहितस्य भावः कैवल्यं तदेवानन्दस्तस्य वानन्दस्तस्य कन्दो मूलं तम् । अवलम्ब आश्रय इत्यर्थः । अहमिति शेषः ॥ २ ॥

चिन्तितफलपरिपोषणचिन्तामणिरेव काञ्चिनिलया मे ।
चिरतरसुचरितसुलभा चित्तं शिशिरयतु चित्सुधाधारा ॥ ३ ॥

अन्वयः ॥काञ्चिनिलया चिरतरसुचरितसुलभा चिन्तितफलपरिपोषणचिन्तामणिरेव चित्सुधाधारा मे चित्तं शिशिरयत्वित्यन्वयः ॥ ३ ॥

टीका ॥ काञ्चिपुर्यां निलयः स्थानं यस्याः सा अतिशयेन चिरमिति चिरतरं तेन दीर्घकालेन सुष्टु चरितमाचरितं तेन सुलभा । चिन्तितं मनसेप्सितं धर्मार्थकाममोक्षरूपं फलं परिसमन्तात्पोषणं यया सा तथोक्ता सा चासौ चिन्तामणिः । यद्वा चिन्तितफलपरिपोषणे चिन्तामणिरेव । चिन्तितकार्यसिद्धिविधायिका श्रीमत्येवेत्यर्थः । चिदेव सुधा चित्सुधा तस्याः धारा परंपरा एवेत्यवधारणे मे मम चित्तं शिशिरयतु शीतलयत्वित्यर्थः ॥ ३ ॥

१९

परतन्त्रा वयमनया पङ्कजसब्रह्मचारिलोचनया ।
परया काञ्चीपुरया पर्वतपर्यायपीनकुचभरया ॥ ४ ॥

अन्वयः ॥ पङ्कजसब्रह्मचारिलोचनया परया काञ्चीपुरया पर्वतपर्यायपीनकुचभरयाऽनया वयं परतन्त्रा इत्यन्वयः । स्म इति शेषः ॥ ४ ॥

टीका ॥ पङ्कजसब्रह्मचारिलोचनया कमलसवर्णिनेत्रया । " वर्णिनो ब्रह्मचारिणः " इत्यमरः ॥ परया ब्रह्मादितः परया । इन्द्रियजन्यज्ञानतो दूरया वा । सर्वकारणरूपया वा ॥ काञ्ची एव पुरमस्याः सा तया पर्वतस्य पर्यायभूतौ यौ पीनकुचौ पर्वतपर्यायपीनकुचौ तयोर्भरो भारः अतिशयो यस्याः सा तया । पर्वतकठिनपीनोच्चकुचयेत्यर्थः ॥ अनया वयं परतन्त्राः तस्याः स्वामिनीत्वेनेष्टत्वेन च निरन्तरं वशीकृता इत्यर्थः । स्मेति शेषः ॥ ४ ॥

ऐश्वर्यमिन्दुमौलेरैकात्म्यप्रकृति काञ्चिमध्यगतम् ।
ऐन्दवकिशोरशेखरमैदंपर्यं चकास्ति निगमानाम् ॥ ५ ॥

अन्वयः ॥ ॥ काञ्चिमध्यगतं इन्दुमौलेरैश्वर्यं ऐकात्म्यप्रकृति ऐन्दवकिशोरशेखरं निगमानां ऐदंपर्यं चकास्ति ॥ ५ ॥

टीका ॥ काञ्च्या मध्ये गतं प्राप्तं इन्दुमौलेः शिवस्य ऐश्वर्यं कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यरूपम् । यद्वा जगद्रचनपोषणसंहरणरूपम् । एकोद्वयश्चासावात्मा मनो देहो जीवश्चैकात्मा तस्य भाव ऐकात्म्यं तदेव प्रकृतिः स्वभावो यस्य तत् तथोक्तम् । इन्दोरिदं ऐन्दवं बिम्बं तच्च तत् किशोरं अष्टकलावत् च तथोक्तं शेखरे शेखरं वा यस्य तत् । निगमानां वेदानाम् । इदमो भाव ऐदं परस्य श्रेष्ठस्य भावः पर्यम् । यद्वा इदमेवैदं परमेवपर्यं वेदानां इदं उपनिषदर्थरूपं वा परशब्दस्य उत्तरार्थेपि वर्त्तमानत्वात् ब्रह्मवाचकत्वाच्च वेदसिद्धान्तरूपं ब्रह्मरूपं चकास्ति प्रकाशत इत्यर्थः ॥ ५ ॥

तुङ्गाभिरामकुचभरशृङ्गारितमाश्रयामि काञ्चिमध्यगतम् ।
गङ्गाधरपरतन्त्रं शृङ्गाराद्वैततन्त्रसिद्धान्तम् ॥ ६ ॥

अन्वयः ॥ तुङ्गाभिरामकुचभरशृङ्गारितं काञ्चिमध्यगतं गङ्गाधरपरतन्त्रं शृङ्गाराद्वैततन्त्रसिद्धान्तं आश्रयामीत्यन्वयः ॥ ६ ॥

टीका ॥ तुङ्गौ अभिरामौ मनोहरौ कुचौ तयोर्यांभरः भारः तेन शृङ्गारितमलंकृतं काञ्च्याः पुर्या मध्ये गतं प्राप्तं स्थितमित्यर्थः । गङ्गाधरस्य परतन्त्रं गङ्गाधरः परतन्त्रो वा यस्य तत् शृङ्गारे रसे यदद्वैतं तन्त्रं शिवोक्तं तस्य सिद्धान्तं परब्रह्माविनाभूतचिच्छक्तिरूपम् । यद्वा शृङ्गारश्चासावद्वैतश्च शृङ्गारा इतिश्रुतेद्वैतः " रसो वै सः " एकरसरूपः सामरस्यं तस्य तन्त्रं कर्त्तव्यता शिवोक्तशास्त्रं च तस्य सिद्धान्तं फलरूपं आश्रयामि । अस्य याथार्थ्यं तु श्रीमतीरूपावतां शृङ्गाराद्वैतशांभवशास्त्रविदामभिगम्यम् ॥ ६ ॥

मधुरधनुषा महीधरजनुषा नन्दामि सुरभिबाणजुषा ।
चिद्वपुषा काञ्चिपुरे केलिजुषा बन्धुजीवकान्तिमुषा ॥ ७ ॥

अन्वयः ॥ मधुरधनुषा महीधरजनुषा सुरभिबाणजुषा काञ्चिपुरे केलिजुषा बन्धुजीवकान्तिमुषा चिद्वपुषा नन्दामीत्यन्वयः ॥ ७ ॥

टीका ॥ मधुरमैक्षवं धनुर्यस्य तेन, महीधराद्धिमगिरेर्जनुर्यस्य तत् तेन, सुरभि बाणं पुष्परूपं शरं जुषते सेवत इति यत्तेन; काञ्चिपुरे केलिं एकाम्रनाथेन साकं शृङ्गाररसस्य क्रीडां जुषते सेवते यत् तेन, बन्धुजीववृक्षपुष्पस्य कान्तिं मुष्णाति चोरयतीति तत् तेन अत्यारक्तेनेत्यर्थः । चिद्वपुषा चिन्मूर्त्या नन्दामि आह्लाद इत्यर्थः ॥ ७ ॥

कुटिलकचं कठिनकुचं कुन्दस्मितकान्ति कुङ्कुमच्छायम् ।
कुरुते विहृतिं काञ्च्यां कुलपर्वतसार्वभौमसर्वस्वम् ॥ ८ ॥

अन्वयः ॥ कुटिलकचमित्यादिसर्वाणि प्रथमान्तपदानि कुलपर्वतसार्वभौमसर्वस्वमित्यस्य विशेषणानि नपुंसकलिङ्गानि । काञ्च्यां विहृतिं कुरुत इत्यन्वयः ॥ ८ ॥

टीका ॥ कुटिलांनि कचानि यस्य तत् । कठिनौ कुचौ यस्य तत् । कुन्दपुष्पमिव स्मितकान्तिर्यस्य तत् । कुङ्कुममिव च्छाया यस्य तत् । कुलपर्वतेषु महेन्द्रमलयादिषु सार्वभौमश्चक्रवर्त्ती हिमगिरिस्तस्य सर्वस्वं सर्वधनं काञ्च्यां विहृतिं विहारं कुरुत इत्यर्थः ॥ ८ ॥

पञ्चशरशास्त्रबोधनपरमाचार्येण दृष्टिपातेन ।
काञ्चीसीम्नि कुमारी काचन मोहयति कामजेतारम् ॥ ९ ॥

अन्वयः ॥ काचन कुमारी पञ्चशरशास्त्रबोधनपरमाचार्येण दृष्टिपातेन काञ्चीसीम्नि कामजेतारं मोहयतीत्यन्वयः ॥ ९ ॥

टीका ॥ पञ्चशराणि सर्वसंक्षोभणसर्वविद्रावणसर्वाकर्षणसर्ववशीकरणसर्वसंमोहनाख्यानि यस्य स कामस्तस्य यच्छास्त्रं वात्स्यायनसंहितादि कामशास्त्रमित्यर्थः । तस्य बोधनं ज्ञानं तस्मिन् यः परमाचार्यो दीक्षाकर्त्ता मार्गप्रवर्त्तको गुरुस्तेन दृष्टिपातेन कटाक्षपातेन काञ्चीसीम्नि काचन वर्णितुमशक्या कुमारी कुमारावस्थापन्ना, कामं जयतीति कामजेता शिवस्तं मोहयति वशीकरोतीत्यर्थः ॥ ९ ॥

श्रितकम्पासीमानं शिथिलितपरमेशधैर्यमहिमानम् ।
वन्दे पाटलिमानं कंचन कञ्चुकितभुवनभूमानम् ॥ १० ॥

अन्वयः ॥ श्रितकम्पासीमानं शिथिलितपरमेशधैर्यमहिमानं कञ्चुकितभुवनभूमानं कंचन पाटलिमानं वन्द इत्यन्वयः । अहमिति शेषः ॥ १० ॥

टीका ॥ श्रिता कम्पानद्याः सीमा येन स तं शिथलितः अल्पीकृतः परमश्चासावीशश्च परमेशः परमशिवस्तस्य धैर्यरूपः । यद्वा धैर्यस्य महिमा माहात्म्यं येन स तं, कञ्चुकितो रोमोद्गमीकृतः सात्त्विकभाववान् कृत इत्यर्थः । भुवने भुमा भुवनाद्भूमा वा देशातिगः कोटिकोटिब्रह्माण्डरोमकूपः सगुणब्रह्म श्रीएकाम्रनाथो येन तं कंचन अलौकिकमवाग्विषयमित्यर्थः । पाटलिमानं वन्दे स्तौमीत्यर्थः । अहमिति शेषः ॥ १० ॥

आदृतकाञ्चीनिलयामाद्यामारूढयौवनाटोपाम् ॥
आगमवतंसकलिकामानन्दाद्वैतकन्दलीं वन्दे ॥ ११ ॥

अन्वयः ॥ आदृतकाञ्चीनिलयामारूढयौवनाटोपामागमवतंसकलिकामानन्दाद्वैतकन्दलीमाद्यां वन्द इत्यन्वयः ॥ ११ ॥

टीका ॥ आदृतः काञ्ची एव निलयः स्थानं यया सा तां, आरूढो यौवनस्याटोपः समारम्भो यस्यां सा तां, आगमस्य शास्त्रस्य तन्त्रस्य वा वतंसो मुकुटस्तस्य कलिका तां, आगमस्य शास्त्रस्य मुख्यत्वेन वर्त्तमानः शास्त्ररूपपुरुषस्य यच्छिरः वेदः यश्चावतंसः सोपनिषत् तस्या अप्युपरि स्थीयमाना या कलिका सा श्रीमती उपनिषद्गीयमानपादारविन्दा तामित्यर्थः । " श्रुतीनां मूर्द्धानो दधति तव यौ शेखरतया ममाप्येतौ मातः शिरसि दयया धेहि चरणौ " इत्यादिश्रीमच्छंकरभगवत्पूज्यपादोक्तिप्रामाण्यात् । आनन्दस्य योऽद्वैतस्तस्य कन्द एव कन्दली ताम् । यद्वा आनन्द एवाद्वैतः आनन्दाद्वैतः परब्रह्म " आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते " इत्याद्यानन्दस्य ब्रह्मरूपत्वेन प्रतिपादनात् । तस्य कन्दलीं नवाङ्कुररूपां तदभिन्नामित्यर्थः । आद्यां ब्रह्मादीनां कारणरूपां वन्दे नमस्कुर्व इत्यर्थः ॥ ११ ॥

काञ्चीरत्नविभूषां कामपि कन्दर्पसूतिकापाङ्गीम् ।
परमां कलामुपासे परशिववामाङ्कपीठिकासीनाम् ॥ १२ ॥

अन्वयः ॥ काञ्चीरत्नविभूषां कामपि कन्दर्पसूतिकापाङ्गीं परशिववामाङ्कपीठिकासीनां परमां कलामुपास इत्यन्वयः । अहमितिशेषः ॥ १२ ॥

टीका ॥ काञ्च्याः पुर्या रत्नविभूषां काञ्चीपुर्य्यलंकारामित्यर्थः । कन्दर्पस्य सूतिः प्रसवो येभ्यस्ते तथोक्तास्त एवाऽपाङ्गाः कटाक्षाः यस्याः सा तां परशिवस्य वामाङ्कः वाम उत्सङ्गः स एव पीठिका तस्यामासीनां स्थितां कामप्यनिर्देश्यां परमां श्रेष्ठां, कलयति रचयतीति कला तां शिवसामर्थ्यरूपां वा । ऐश्वर्यरूपां वा चन्द्रमण्डलस्थषोडशीं सादाख्यां कलां ह्रासवृद्धिशून्यां वा । अत एव परमामिति विशेषणम् । उपासे तस्या उपासनां कुर्व इत्यर्थः ॥ १२ ॥

कम्पातीरचराणां करुणाकोरकितदृष्टिपातानाम् ।
केलीवनं मनो मे केषांचिद्भवतु चिद्विलासानाम् ॥ १२ ॥

अन्वयः ॥ कम्पातीरचराणामित्यादिषष्ठ्यन्तविशेषणविशिष्टानां मे मनः केलीवनं भवत्वित्यन्वयः ॥ १३ ॥

टीका ॥ कम्पायास्तीरं तटं तस्मिन् चराणां विहरणशीलानां करुणया युक्ताः कोरकिताः कुड्मलिताः सालसा इति यावत्। दृष्टिपाताः कटाक्षाः येषां ते तेषां केषांचिदनिर्वाच्यानां चैतन्यविलासानां केल्या वनं क्रीडारामो मे मम मनो भवत्वित्यर्थः ॥ १३ ॥

आम्रतरुमूलवसतेरादिमपुरुषस्य नयनपीयूषं।
आरब्धयौवनोत्सवमाम्नायरहस्यमन्तरवलम्बे ॥ १४ ॥

अन्वयः ॥ आम्रतरुमूलवसतेरादिमपुरुषस्य नयनपीयूषं आरब्धयौवनोत्सवमाम्नायरहस्यमन्तरवलम्बे इत्यन्वयः ॥ १४ ॥

टीका ॥ आम्रश्चासौ तरुश्चाम्रतरुस्तस्य यन्मूलं तस्मिन्वसतिर्वासो यस्य तस्य, आदिमश्चासौ पुरुषश्च तथोक्तस्तस्य परमशिवस्येत्यर्थः। नयनामृतं नयनतृप्तिप्रदमानन्दप्रदं च। आरब्धः प्रारब्धो यौवनोत्सवः तारुण्यहर्षविलासो येन तत्। आम्नायानां पूर्वाम्नायादीनां षण्णां वेदानां वा रहस्यं गोप्यं वस्तुभूतं तात्पर्यं अन्तःकरणेन मनसा अवलम्ब्य आश्रयेऽहमिति शेषः ॥ १४ ॥

अधिकाञ्चि परमयोगिभिरादिमपरपीठसीम्नि दृश्येन।
अनुबद्धं मम मानसमरुणिमसर्वस्वसंप्रदायेन ॥ १५ ॥

अन्वयः ॥ अधिकाञ्चि आदिमपरपीठसीम्नि परमयोगिभिर्दृश्येनारुणिमसर्वस्वसंप्रदायेन मम मानसमनुबद्धमित्यन्वयः ॥ १५ ॥

टीका ॥ काञ्चिपुरीमधिकृत्य वर्तत इति अधिकाञ्चि आदिमश्चासौ परश्च आदिमपरः सर्वेषां चतुर्दशभुवनानां कारणं परमेश्वरः परशिवः स एव पीठ आधारस्तस्य सीम्नि मध्ये परशिववामोत्सङ्गरूपपीठे परमाश्च ते योगिनश्च तथाविधाः। यद्वा परमः परशिवस्तस्य योगः संबन्धः संयोगो ध्यानेन एषामस्तीति तेषां तैर्दृश्येन द्रष्टुं योग्येन रमणीयेन अरुणस्य भावोरुणिमा तस्य सर्वस्वं सर्वधनं तस्य संप्रदायेन आचारप्रवर्त्तनपरंपरारूपेण मम मानसं मनोनुबद्धं ग्रथितमस्ति अतोऽहो मम भाग्यमिति भावः ॥ १९ ॥

अङ्कितशंकरदेहामङ्कुरितोरोजकङ्कणाश्लेषैः।
अधिकाञ्चि नित्यतरुणीमद्राक्षं कांचिदद्भुतां बालाम् ॥ १६ ॥

अन्वयः ॥ अङ्कुरितोरोजकङ्कणाश्लेषैरङ्कितशंकरदेहां नित्यतरुणीमद्भुतां बालां अधिकाञ्चि अद्राक्षमित्यन्वयः ॥ १६ ॥

१९

टीका ॥ अङ्कुरितौ अभिनवोद्गतौ च तौ उरोजौ कुचौ च तथाविधौ तौ च कङ्कणानि च तथोक्तानि। कङ्कणानि इति चतुर्भुजस्वरूपत्वात्। तैः संयुतो य आश्लेष आलिङ्गनं तेनाङ्कितः शंकरस्य सुखकर्तुः शिवस्य देहो यया तां नित्यं तरुणी नित्यतरुणी नित्या चासौ तरुणी च तथोक्ता वा तां कांचिदनिर्वचनीयां बालां स्त्रीरूपामद्राक्षं दृष्टवानस्मि। तत्तस्याः कारुण्यमहिम्नैवेति भावः। यद्वा ज्ञायते हि बहुजन्मसु मया बहु सुकृतं कृतं तेन वेति भावः। यद्वा बहुजन्मसु रुद्रादीनां कृतोपासनकस्य श्रीमत्या जातदर्शनकृत्यस्य कविसार्वभौमस्येयमुक्तिरित्यर्थः ॥ १६ ॥

मधुरस्मितेन रमते मांसलकुचभारमन्दगमनेन।
मध्येकाञ्चि मनो मे मनसिजसाम्राज्यगर्वबीजेन ॥ १७ ॥

अन्वयः ॥ मध्येकाञ्चि मधुरस्मितेन मांसलकुचभारमन्दगमनेन मनसिजसाम्राज्यगर्वबीजेन मे मनो रमत इत्यन्वयः ॥ १७ ॥

टीका ॥ काञ्च्याः मध्ये इति मध्येकाञ्चि मधुरममृततुल्यं स्मितं यस्य तत्। नयनानन्दजनकत्वात्। तेन मांसलौ स्थूलौ कुचौ मांसलकुचौ तयोर्यो भारस्तेन मन्दगमनं यस्य तत् तेन मनसिजः कामस्तस्य साम्राज्यं एकातपत्रराज्यं तस्य यो गर्वोऽभिमानः तस्य यद्बीजं कारणं तेन मम मनो रमते नान्येन कुतो यत ऐहिकामुष्मिकानन्दप्रदायिनी परप्रेमास्पदा देवता एतस्याः परा कापि नेति भावः ॥ १७ ॥

धरणिमयीं तरणिमयीं पवनमयीं गगनदहनहोतृमयीम्।
अम्बुमयीमिन्दुमयीमम्बामनुकम्पमादिमामीक्षे ॥ १८ ॥

अन्वयः ॥ धरणिमयीमित्यादि अम्बामित्यनेन सार्द्धं योज्यम्। अनुकम्पमीक्ष इत्यन्वयः ॥ १८ ॥

टीका ॥ धरणिः पृथ्वी तरणिः सूर्यः अम्बु जलं इन्दुश्चन्द्रः पवनो वायुः गगनमाकाशं दहनोऽग्निः होता यजमानः पुरुषः एता अष्ट मूर्त्तयः परमशिवस्य अतस्तन्मयी। आभ्यो मूर्तिभ्य आदिमामाद्यामम्बां जगदुत्पत्तिकारिणीं कम्पाया नद्याः समीप इत्यनुकम्पं कम्पानदीसमीपं। ईक्षे अवलोकयामीत्यर्थः अहमिति शेषः। तस्या दर्शनं करोमीत्यतोऽलं योगयागादिना कल्पतरुकामधेन्वादिनाप्यलमिति भावः ॥ १८ ॥

लीनस्थिति मुनिहृदये ध्यानस्तिमितं तपस्यदुपकम्पम्।
पीनस्तनभरमीडे मीनध्वजपरमतात्पर्यम् ॥ १९ ॥

अन्वयः ॥ मुनिहृदये लीनस्थिति ध्यानस्तिमितं उपकम्पं तपस्यत् पीनस्तनभरं मीनध्वजपरमतात्पर्यमीडे अहं इत्यन्वयः ॥ १९ ॥

टीका ॥ मुनीनां हृदयं मुनिहृदयं तस्मिन् लीना स्थितिर्यस्य तत् समाधावेकत्वमापन्नमित्यर्थः । यद्वा लीना लयं गता जगतः स्थितिर्द्वयभावो यस्मिन् तत् अर्धाङ्गिगलितद्वैतभावम् । अतो ध्यानेन शिवयोगशास्त्रोक्तेन स्तिमितं निश्चलितं कम्पायाः नद्या उप समीप इति उपकम्पं तपस्यत् तपश्चर्यां कुर्वत् पीनयोः स्तनयोर्यो भरो भारः तेन नम्रं नतं मीनध्वजस्य कामस्य परमतात्पर्यं सिद्धान्तसाररूपमीडे स्तौमीत्यर्थः ॥ १९ ॥

श्वेता मन्थरहसिते शाता मध्ये च वाङ्मनोतीता ।
शीता लोचनपाते स्फीता कुचसीम्नि शाश्वती माता ॥ २० ॥

अन्वयः ॥ सर्वाणि प्रथमान्तस्त्रीलिङ्गपदानि श्वेतादीनि मातृपदविशेषणानि । मन्थरहसिते मध्ये लोचनपाते कुचसीम्नि इति सप्तम्येकवचनान्तपदैर्यथायथं योज्यानि ॥ २० ॥

टीका ॥ मन्थरं मन्दं च तद्धसितं हास्यं च तथोक्तं तस्मिन् अमृतमयनिर्विकारसहजप्रसादमयत्वात् । श्वेतोज्ज्वला चन्द्रोज्ज्वलहसितेत्यर्थः । मध्ये कटौ शाता तन्वी क्षीणकटिरित्यर्थः । वाक् च मनश्च वाङ्मनसी ताभ्यामतीता अगोचरा वाङ्मनोतीता सगुणस्वरूपस्य विभूतीनां गुणानां चानन्त्यान्निर्गुणस्याऽद्वैतत्वात् स्वसंवेद्यत्वाच्च वाङ्मनसोरगोचरेत्यर्थः । लोचनपाते कटाक्षे शीता शीतला त्रिविधतापहारकत्वात्, कारुण्यामृतमयत्वाच्च दयारसार्द्रकटाक्षेत्यर्थः । कुचयोः सीमा कुचसीमा तस्यां स्फीता स्थूला शाश्वती अनादिमाता ममास्तीति शेषः । तदा मम चिन्ता केति भावः ॥ २० ॥

पुरतः कदा नु करवै पुरवैरिविमर्दपुलकिताङ्गलताम् ।
पुनतीं काञ्चीदेशं पुष्पायुधवीर्यसरसपरिपाटीम् ॥ २१ ॥

अन्वयः ॥ पुरवैरिविमर्दपुलकिताङ्गलतां काञ्चीदेशं पुनतीं पुष्पायुधवीर्यसरसपरिपाटीं नु कदा पुरतः करवै इत्यन्वयः । अहमिति शेषः ॥ २१ ॥

टीका ॥ पुरस्य त्रिपुरासुरस्य वैरमस्यास्तीति वैरी शत्रुस्तेन यो विशेषेण मर्दो मर्दनं गाढालिङ्गनं तेन हेतुना पुलकिता हर्षिताङ्गरूपा लता यस्याः सा तां काञ्चीदेशं पुनतीं पवित्रं कुर्वतीं पुष्पाण्येवायुधानि बाणान्यस्य स तथोक्तस्तस्य यद्वीर्यं पराक्रमः शौर्यमिति यावत् । तस्य रसेन शृङ्गाररसेन सहिता सरसा अधिका वा सरसा चासौ परिपाटी च तथोक्ता तां कामदेवपराक्रमसरसरीतिमित्यर्थः । नु इति वितर्के कदा कस्मिन् समये पुरतो ऽग्रतोऽहं करवै तस्याश्चरणकमलयोर्दर्शनमहं कदा कुर्वे इति भक्तस्योत्कण्ठावचनम् ॥ २१ ॥

पुण्या कापि पुरंध्री पुङ्खितकन्दर्पसंपदा वपुषा ।
पुलिनचरी कम्पायाः पुरमथनं पुलकनिचुलितं कुरुते ॥ २२ ॥

अन्वयः ॥ कापि पुण्या पुरंध्री कम्पायाः पुलिनचरी पुञ्जितकन्दर्पसंपदा वपुषा पुरमथन-पुलकनिचुलितं कुरुत इत्यन्वयः ॥ २२ ॥

टीका ॥ कम्पाया नद्याः पुलिने तटे चरतीति तथाविधा पुञ्जिता विस्तृता कन्दर्पस्य कामस्य संपच्छोभा वा यस्मिन् तेन वपुषा शरीरेण कापि पुण्या शुभा पुरंध्री स्त्री सर्वेषां पुरं शरीरमन्तर्यामितया परमात्मरूपिण्या ध्रियत इति सा तथाविधा वनिता पुरमथनं शिवं पुलकेन सहर्षरोमोद्गमेन निचुलितं कञ्चुकितं कुरुत इत्यर्थः ॥ २२ ॥

तनिमाद्वैतवलग्नं तरुणारुणसंप्रदायतनुलेखम् ।

तटसीमनि कम्पायास्तरुणिमसर्वस्वमाद्यमद्राक्षम् ॥ २३ ॥

अन्वयः ॥ तनिमाद्वैतवलग्नं तरुणारुणसंप्रदायतनुलेखं कम्पायास्तटसीमनि आद्यं तरुणिमसर्वस्वमद्राक्षमित्यन्वयः । अहमिति शेषः ॥ २३ ॥

टीका ॥ तनिम्नः कृशत्वस्य अद्वैतं अद्वितीयं तथाविधं वलग्नं मध्यदेशो यस्य तत् तरुणं च तदरुणं च तथोक्तं तस्य यः संप्रदायः परंपरागताचारः तस्य तनुः सूक्ष्मा लेखा रेखा अङ्गरूपा शास्त्ररूपो लेखो वा यस्मिन् तत् तरुणस्य भावस्तरुणिमा तस्य तरुभिन्नः सर्वस्वं समग्रधनं कम्पाया नद्याः सीमनि समीपे अद्राक्षं दृष्टवानहमस्मीत्यर्थः । तस्याः कृपालीलाम-हिम्नैवेति भावः ॥ २३ ॥

पौष्टिककर्मविपाकं पौष्पशरं सविधसीम्नि कम्पायाः ।

अद्राक्षमात्तयौवनमभ्युदयं किंचिदर्द्धशशिमौलेः ॥ २४ ॥

अन्वयः ॥ कम्पायाः सविधसीम्नि पौष्पशरं पौष्टिककर्म्मविपाकं अर्द्धशशिमौलेः किंचिद-भ्युदयमद्राक्षमित्यन्वयः । अहमिति शेषः ॥ २४ ॥

टीका ॥ कम्पायाः सविधोनिकटदेशस्तस्य सीम्नि प्रान्ते पुष्पाण्येव शरा यस्य स पुष्प-शरः कामः तस्येदं पौष्पशरं पुष्टेरिदं पौष्टिकं तच्च तत्कर्म्म च तथोक्तं तस्य विपाकं फलरूपं आत्तं गृहीतं यौवनं येन तत् अर्द्धं शशिन इत्यर्द्धशशी स मौलौ मुकुटे यस्य तस्य श्रीशि-वस्य किंचिदनिर्वाच्यमभ्युदयं मङ्गलं ऐश्वर्यं संपदं वृद्धिं उन्नतिं वा श्रीमत्याख्यं अद्राक्षं दृष्टवानहमस्मीत्यर्थः । तदद्य मया श्रीगुरुनाथप्रसादजं फलं समग्रं लब्धमिति भावः ॥ २४ ॥

संश्रितकाञ्चीदेशे सरसिजदौर्भाग्यजाग्रदुत्तंसे ।

संविन्मये विलीये सारस्वतपुरुषकारसाम्राज्ये ॥ २५ ॥

अन्वयः ॥ संश्रितकाञ्चीदेशे सरसिजदौर्भाग्यजाग्रदुत्तंसे संविन्मये सारस्वतपुरुषकार-साम्राज्ये विलीय इत्यन्वयः । अहमिति शेषः ॥ २५ ॥

टीका ॥ संश्रित आश्रितः काञ्चीदेशो येन तत् तस्मिन् सरसिजानां कमलानां दुर्भगस्य भावो

दौर्भाग्यं चन्द्ररूपं जाग्रत्सत् उत्तंसे मुकुटे यस्य । यद्वा चन्द्ररूप उत्तंसो यस्य तत् तस्मिन् । सम्यक् वेत्तीति संवित् "संवित्कामेश्वरः स्मृतः" इति तन्त्रराजवचनात् । कामेश्वराभिख्यं परब्रह्म तन्मये सारस्वतपुरुषकारसाम्राज्ये सरस्वत्या अयं सारस्वतः स चासौ पुरुषकारः पुरुषार्थस्तस्य साम्राज्ये एकातपत्रराज्ये विलीये विलीनो भवामीत्यर्थः । अहमिति शेषः ॥ २१ ॥

मोदितमधुकरविशिखं स्वादिमसमुदायसारकोदण्डम् ।
आदृतकाञ्चीखेलनमादिममारुण्यभेदमाकलये ॥ २६ ॥

अन्वयः ॥ मोदितमधुकरविशिखं स्वादिमसमुदायसारकोदण्डं आदृतकाञ्चीखेलनमादिममारुण्यभेदमाकलय इत्यन्वयः ॥ २६ ॥

टीका ॥ मोदिता मधुकरा विशिखैः पुष्पमयैर्येन स तं, स्वादुनो भावः स्वादिमा तस्य यः समुदायः समूहस्तस्य यः सारस्तद्युक्तः कोदण्डो धनुरिक्षुमयं यस्य सः तं, आदृतं काञ्च्यां खेलनं रमणं येन सः तं, आदौ भव आदिमस्तं आदिमं प्रथमं, अरुणस्य भावः आरुण्यं तस्य यो भेदः । आरुण्यरूपो भेदो वा श्रीमतीरूपस्तमाकलये स्तौमीत्यर्थः ॥ २६ ॥

उररीकृतकाञ्चिपुरीमुपनिषदरविन्दकुहरमधुधाराम् ।
उन्नम्रस्तनकलशीमुत्सवलहरीमुपास्महे शंभोः ॥ २७ ॥

अन्वयः ॥ उररीकृतेत्यादि सर्वं पठित्वा शंभोरुत्सवलहरीमुपास्महे इत्यन्वयः ॥ २७ ॥

टीका ॥ उररीकृताऽङ्गीकृता काञ्चिपुरी यया सा तां, उपनिषद एवारविन्दानि तेषां यानि कुहराणि छिद्राणि मुखानि इत्यर्थः । तेभ्यः सकाशात् तेषां वा मधुनो मकरन्दस्यामृतस्य परब्रह्मज्ञानरूपस्य धारा प्रवाहरूपा तां, मधु मकरन्दोऽमृतं वा ब्रह्मज्ञानरूपं तद्रूपा धारा तां, निगमागमसिद्धान्तरूपामित्यर्थः । उन्नम्रौ स्तनकलशौ यस्याः सा तां, शं सुखं ऐहिकामुष्मिकं वस्तुतस्तु ब्रह्मज्ञानानन्दात्मकं भवत्यस्मात्स शंभुस्तस्योत्सवस्य हर्षस्य लहरी तामुपास्महे । तस्या उपासनां कुर्म्मः तस्याः पूज्यपादरेणुप्रसादादिति भावः । एषु पञ्चशतकेषु क्वचित्पुलिङ्गनिर्देशेन वर्णनम्, क्वचिन्नपुंसकेन, बहुधा स्त्रीलिङ्गेनातस्त्रिष्वपि लिङ्गेषु श्रीमत्या विहारो दर्शितः । ब्रह्मरूपेणापि वर्णनं कृतमत एभ्यः पृथगपि स्थितिर्दर्शिता; परंतु कविसार्वभौमोपरि कृपा स्त्रीरूपेण कृतातश्च बहुधा स्त्रीलिङ्गनिर्देशेन वर्णनमित्यलम् ॥ २७ ॥

एणशिशुदीर्घलोचनमेनःपरिपन्थि संततं नमताम् ।
एकाम्रनाथजीवितमेवंपददूरमेकमवलम्बे ॥ २८ ॥

अन्वयः ॥ एणशिशुदीर्घलोचनं, नमतां संततमेनःपरिपन्थि, एकाम्रनाथजीवितमेवंपददूरमेकमवलम्बे । अहमिति शेषः ॥ २८ ॥

टीका ॥ एणो मृगस्तस्य यः शिशुः बालः तस्येवातिदीर्घातिचपलानि लोचनानि यस्य तत् नमतां भक्तजनानां सततं निरन्तरं एनसः परिपन्थि पापस्य शत्रुरित्यर्थः । एकाम्रनाथः शिवः काञ्च्यां प्रसिद्धः तस्य जीवितं जीवनं एवंपदाद्दूरं अमुना प्रकारेण अवर्ण्यं अवाग्विषयमित्यर्थः । कुतो यत एकमद्वयं अवलम्बे आश्रयेऽहमित्यर्थः ॥ २८ ॥

स्मयमानमुखं काञ्चीमयमानं कमपि देवताभेदम् ।
दयमानं वीक्ष्य मुहुर्वयमानन्दाम्बुधौ मग्नाः ॥ २९ ॥

अन्वयः ॥ कमपि दयमानं सन्तं देवताभेदं काञ्चीमयमानं स्मयमानमुखं मुहुर्वीक्ष्य वयमानन्दाम्बुधौ मग्नाः स्मेति शेषः ॥ २९ ॥

टीका ॥ दयमानमनुकम्पमानं सन्तं कमपि अनिर्वचनीयं देवताभेदं देवतायाः प्रकाशशालिन्या भेदं सगुणस्वरूपान्तरं श्रीमत्कामाक्षीनामकं काञ्चीमयमानं काञ्चीनामिकां पुरीं भक्तोद्धाराय लीलया प्राप्नुवानं स्मयमानमुखं सौन्दर्यानन्तगुणवत्त्वेन गर्वन्मुखं यस्य तं, अतृप्तिवशान्मुहुर्वारंवारं वीक्ष्य निरीक्ष्य आनन्दाम्बुधौ सुखसागरे वयं निमग्नाः स्म इत्यर्थः । अत्र वयमिति बहुवचनं तु दर्शनजातातिहर्षवशात्, कृतकृत्यात्मनः कवेर्गौरवार्थकं वचो युक्तमेवेत्यलम् ॥ २९ ॥

कुतुकजुषि काञ्चिदेशे कुमुदतपोराशिपाकशेखरिते ।
कुरुते जनो मनोयं कुलगिरिपरिवृढकुलैकमणिदीपे ॥ ३० ॥

अन्वयः ॥ काञ्चीदेशे कुतुकजुषीतिसर्वाणि सप्तम्येकवचनान्तपदानि तेषु अयं जनो मनः कुरुत इत्यन्वयः ॥ ३० ॥

टीका ॥ काञ्चिरूपो देशः काञ्चिदेशस्तस्मिन् कुतुकं हर्षं केलिं वा जुषते सेवत इति स तस्मिन् कुमुदानां रजनीविकाशिनां कमलानां यत्तपस्तस्य यो राशिः पुञ्जस्तस्य यः पाकः फलं अनेन चन्द्र इत्युक्तं भवति । कुमुदानां प्रफुल्लनकारित्वात् । स शेखरो जातोऽस्य तस्मिन् कुलगिरयो मलयमहेन्द्राद्या अष्टौ पर्वताः तेषु परिवृढः श्रेष्ठः हिमालयः । श्रीमत्याः पार्वतीस्वरूपाया जनकत्वात् । तस्य यत्कुलं वंशस्तस्य एको मुख्यो मणिरूपो दीपः कुलप्रकाशकत्वात् । अयं मूकनामा कविसार्वभौमस्तस्याः कारुण्यमहिम्नैव ध्याने प्रत्यक्षदर्शने च मनः कुरुत इत्यर्थः ॥ ३० ॥

वीक्षेमहि काञ्चिपुरे विपुलस्तनकलशगरिमपरवशितम् ।
विद्रुमसहचरदेहं विभ्रमसमवायसारसन्नाहम् ॥ ३१ ॥

अन्वयः ॥ काञ्चिपुरे विपुलस्तनकलशगरिमपरवशितं विद्रुमसहचरदेहं विभ्रमसमवायसारसन्नाहं वीक्षेमहीत्यन्वयः ॥ ३१ ॥

टीका ॥ काञ्चिनामके पुरे राजधान्यां विपुलौ विस्तृतौ स्तनरूपौ कलशौ तथोक्तौ तयोर्यो गरिमा गौरवं तेन परवशितं परतन्त्रितम्। तस्यातिसौन्दर्यवशात्। विद्रुमाः सहचराः परिचारका यस्य तथाविधो देहो यस्य तं विद्रुमाऽतिश्रेष्ठदेहमित्यर्थः। विशेषेण भ्रमो विभ्रमो हर्षो विभ्रमनामकहावः शृङ्गारचेष्टा वा तस्य यः समवायः समूहस्तस्य यः सारस्तस्य सन्नाहं कवचं शृङ्गारचेष्टासमूहसारकवचमित्यर्थः। वीक्षेमहि द्रक्ष्याम इत्यर्थः॥ अतो वयं कृतकृत्या इति भावः॥ ३१॥

कुरुविन्दगोत्रगात्रं कूलचरं नौमि किमपि कम्पायाः।
कूलंकषकुचकलशं कुसुमायुधवीर्यसारसंरम्भम्॥ ३२॥

अन्वयः॥ कम्पायाः कूलचरमित्यादिपदवाच्यं नौमीत्यन्वयः॥ ३२॥

टीका॥ कुरुविन्दो माणिक्यमणिस्तस्य यद्गोत्रं सजातीयं तद्वच्छरीरं यस्य तत् कम्पायाः कुले चरति गच्छति क्रीडार्थं यत्तत् कूलचरं तटविहारम्। कूलंकषौ भुजस्पृशौ कुचकुम्भौ यस्य तत्। कुसुमायुधस्य कामदेवस्य यद्वीर्यं तस्य यः सारः स संरम्भे कोपे शृङ्गारक्रीडायां यस्य तत्। किमपि अविदितवृत्तांतं जपपूजादावसमर्थोऽहं केवलं नौमि स्तवमात्रमेव विदध इत्यर्थः॥ ३२॥

कुड्मलितकुचकिशोरैः कुर्वाणैः काञ्चिदेशसौहार्दम्।
कुङ्कुमशोणैर्निचितं कुशलपथं शंभुसुकृतसंभारैः॥ ३३॥

अन्वयः॥ कुड्मलितकुचकिशोरैः काञ्चिदेशसौहार्दंकुर्वाणैः शंभुसुकृतसंभारैः कुङ्कुमशोणैः कुशलपथं निचितमित्यन्वयः॥ ३३॥

टीका॥ कुड्मलितौ कोरकितौ कुचौ ताभ्यां युक्ताः किशोरास्तैः किशोरवयःसंपन्नैरित्यर्थः। काञ्चिरूपो देशः काञ्चिदेशस्तस्य सुहृदो भावः सौहार्दं मैत्रीं कुर्वाणैः कुर्वद्भिः। शंभोर्यत्सुकृतं तस्य संभारैः सामग्रीभिरित्यर्थः। कुङ्कुममिव शोणं रक्तैः कुशलपथं मोक्षमार्गं निचितं व्याप्तम्। यद्वा संसारिणामर्थे तैः कृपालुभिर्निर्मितमित्यर्थः। अत्र बहुवचनं कवेः प्रेमातिशयात्। यद्वा क्रीडेच्छया। श्रीमत्या बहुरूपेण तत्र विहरणात्॥ ३३॥

अङ्कितकुचेन केनचिदन्धंकरणौषधेन कमलानाम्।
अन्तःपुरेण शंभोरलंक्रिया कल्प्यते काञ्च्या॥ ३४॥

अन्वयः॥ केनचिच्छंभोरन्तःपुरेण काञ्च्याः काचिदलंक्रिया कल्प्यते॥ कीदृशेन कमलानामन्धंकरणौषधेनाङ्कितकुचेनेत्यन्वयः॥ ३४॥

टीका॥ शं सुखं ज्ञानानन्दरूपं भवत्यस्मादिति शंभुस्तस्यान्तःपुरेण पट्टमहिष्येत्यर्थः। काप्यलौकिकी काञ्च्याः पुर्याः अलंक्रिया शृङ्गारकर्म। यद्वा फलदानेन पूर्णकर्म। यद्वा स्वान

मोच्चारणमहिम्ना काञ्च्याः काञ्चिस्थजनानां पूर्णक्रिया यज्ञयागादिका कल्प्यते तस्याः कल्पना क्रियत इत्यर्थः। कीदृशेन शंभोरन्तः पुरेण। कमलानामन्धंकरणौषधेन संकोचनकरणभैषज्येन चन्द्रेणेत्यर्थः। स्वयंभूशंभुरूपकुचौ शिवकृतवक्रनखक्षत्यार्द्धचन्द्रेण अलंकृतौ सुशोभितौ यस्य तत् तेन कामाक्षीरूपेणेत्यर्थः। चन्द्रकरस्पर्शनेनैव कमलस्य संकुचितत्वेन कोरकाकारत्वात्। कमलानामन्धंकरणौषधेनेति अन्तःपुरेणेत्यस्यैवाविशेषणम्। कमलानां रक्तत्वादपि श्रीमत्याः स्वरूपस्यात्यरुणकान्तित्वात्तेषां दृष्ट्याच्छादकेन श्रीकामाक्षीरूपेणेति वार्थः॥ ३४॥

उररीकरोमि संततमूष्मलफालेन लालितं पुंसा।
उपकम्पमुचितखेलनमुर्वीधरवंशसंपदुन्मेषम् ॥ ३५॥

अन्वयः॥ उपकम्पमुचितखेलनमूष्मलफालेन पुंसा संततं लालितमुर्वीधरवंशसंपदुन्मेषमुररीकरोमीत्यन्वयः॥ ३५॥

टीका॥ कम्पायाः समीपे उचितं यथार्थं खेलनं यस्य तं, ऊष्मलोऽग्निः सः फाले भाले यस्य तेन पुंसा शिवेन संततं लालितं उर्वीधरो धराधरो हिमगिरिस्तस्य यो वंशस्तस्य याः संपदस्तासामुन्मेषो विकाशः तमुररीकरोमि इष्टत्वेन स्वामिनीत्वेन मातृत्वेन सर्वशास्त्रसिद्धान्तत्वेन चाङ्गीकरोमीत्यर्थः॥ ३५॥

अङ्कुरितस्तनकोरकमङ्कालंकारमेकचूतपतेः।
आलोके महि कोमलमागमसंलापसारयाथार्थ्यम्॥ ३६॥

अन्वयः॥ अङ्कुरितस्तनकोरकं एकचूतपतेरङ्कालंकार कोमलमागमसंलापसारयाथार्थ्यं आलोकेमहीत्यन्वयः॥ ३६॥

टीका॥ अङ्कुरितौ अभिनवोद्गतौ स्तनरूपौ कोरकौ कलिके यस्मिन् तत् उद्गमावस्थायां कुचयोः कलिकाकारत्वात्कोरकस्योपमा। एकचूतपतेरेकाम्रनाथस्याऽङ्कालंकारमुत्सङ्गाभरणमित्यर्थः। कोमलं सुकुमारं न तु मणिरिव कठिनमित्यर्थः। आगमस्य शास्त्रस्य यः संलापः कथनं ऊहापोहरूपस्तस्य यः सारस्तस्य याथार्थ्यं सत्यत्वम्। यद्वा आगमसंलापसारयाथार्थ्यं यस्मिन् तत् आलोकेमहि अवलोकयामः। वयमिति शेषः। तन्मे कियद्भाग्यमहत्त्वं वर्णयामीति भावः॥ ३६॥

पुञ्जितकरुणमुदञ्चितसिञ्जितमणिकाञ्चि किमपि काञ्चिपुरे
मञ्जरितमृदुलहासं पिञ्जरतनुरुचि पिनाकिमूलधनम्॥ ३७॥

अन्वयः॥ काञ्चिपुरे जितकरुणं उदञ्चितसिञ्जितमणिकाञ्चि मञ्जरितमृदुलहासं पिञ्जरतनुरुचि किमपि पिनाकिमूलधनं आलोकेमहीति पूर्वेणैवान्वयः॥ ३७॥

टीका॥ पुञ्जिता करुणा यस्मिन् तत् उदञ्चिता व्याप्ता सिञ्जिता शब्दिता मणिकाञ्चिः

कटिरत्नमेखला यस्मिन् तत् किमपि अनिर्वाच्यं मञ्जरितः पुष्पितः मृदुलः कोमलो हासो यस्मिन् तत् पिञ्जरः स्वर्ण इव तनो रुचिर्यस्य तत् पिनाकिनः शिवस्य मूलधनं नीवीधनं काञ्चीपुरे वयं तत्कृपया विलोकेमहीति पूर्वश्लोकेनैवान्वयः । मूलधनमित्युक्त्या शिवस्य यदैश्वर्यं यच्च सामर्थ्यं यच्च सौन्दर्यं या च श्लाघा तत्सर्वं श्रीकामाक्ष्येवेति भावः ॥ ३७ ॥

लोलहृदयोस्मि शंभोर्लोचनयुगलेन लेह्यमानायाम् ।
लालितपरमशिवायां लावण्यामृततरङ्गमालायाम् ॥ ३८ ॥

अन्वयः ॥ शंभोर्लोचनयुगलेन लेह्यमानायां लालितपरमशिवायां लावण्यामृततरङ्गमालायां लोलहृदयोस्मीत्यन्वयः ॥ ३८ ॥

टीका ॥ शंभोः श्रीशिवस्य लोचनयुगलेन लेह्यमानायां आस्वाद्यमानायां लालिता परमशिवेन वक्षसि । यद्वा सर्वकाले सर्वप्रकारैः या सा । यद्वा लालितः परमशिवः शृङ्गारक्रीडायां चेष्टायां वा यया सा तथाविधा तस्यां लावण्यं च प्रियत्वात्तदेवामृतं च तथोक्तं तस्य ये तरङ्गास्तेषां माला परंपरा पंक्तिर्वा यस्यां तस्याम् । यद्वा लावण्यामृततरङ्गानां माला या सा । यद्वा लावण्यामृततरङ्गैर्मालते शोभते या सा तस्यां लोलं चपलं हृदयं यस्य स लोलहृदयोऽस्म्यहं तां किं स्तौमि उत पूजयामि उत मनसा ध्यायामि उताखण्डितदृशा पश्यामि उत सर्वं विहाय हृत्कञ्जे आरोपयित्वा तामेव ध्यायन् सन् तस्यामेव लीनो भवामीति भावः ॥ ३८ ॥

मधुकरसहचरचिकुरैर्मदनागमसमयदीक्षितकटाक्षैः ।
मण्डितकम्पातीरैर्मङ्गलकन्दैर्ममास्तु सारूप्यम् ॥ ३९ ॥

अन्वयः ॥ तृतीयाबहुवचनान्तपदविशेषणविशिष्टैर्मम सारूप्यमस्त्वित्यन्वयः ॥ ३९ ॥

टीका ॥ मधुकराः भृङ्गाः श्यामस्निग्धवर्णसाम्यात् सखितया सह चरन्तीति मधुकरसहचराः भृङ्गालिसदृशा इत्यर्थः । यद्वा स्वाभाविकसुरभिमत्त्वात् । यद्वा सुरभिमत्सुमनोभिर्ग्रथितत्वात् भृङ्गाः सहचरा मित्राणि येषां ते तादृशाः । यद्वा चिकुराणां स्वतन्त्रसुरभिमत्त्वात् सौन्दर्यैश्वर्याधिक्येन च मधुकराः भ्रमराः सहचराः किंकरा येषां ते तथाविधाश्चिकुरा येषां ते तादृशास्तैर्मदनस्य य आगमः शास्त्रं आगमनं वा तस्य यः समयः कालः शपथः प्रतिनियमो वा तस्मिन् तस्य वा दीक्षिताः कृतदीक्षका आचार्या इति यावत् । कटाक्षा येषां ते तथाविधास्तैर्मण्डितं शोभितं कम्पातीरं यैस्तैः मङ्गलस्य कन्दाः मङ्गलकन्दास्तैर्मङ्गलोत्पादकैः समानं रूपं सरूपं तस्य भावः सारूप्यमस्त्वित्यर्थः । ममेति शेषः । कामाक्षीसारूप्यं मम भवत्वित्यर्थः ॥ ३९ ॥

वदनारविन्दवक्षोवामाङ्कतलीवशंवदीभूता ।
पुरुषत्रितये त्रेधा पुरंध्रिरूपा त्वमेव कामाक्षि ॥ ४० ॥

अन्वयः ॥ हे कामाक्षि ! वदनारविन्दवक्षोवामाङ्कतलीवशंवदीभूता पुरुषत्रितये त्रेधा पुरंध्रिरूपा त्वमेवेत्यन्वयः ॥ ४० ॥

टीका ॥ हे कामाक्षि ! वदनमेव अरविन्दं वदनारविन्दं तच्च वक्षश्च वामाङ्कतली च तथोक्तास्तासु वशंवदीभूता वशीभूता सती, पुरुषाणां विधिविष्णुरुद्राणां त्रितयं त्रिकं तस्मिन् त्रिधा त्रिविधा पुरंध्रिरूपा क्रीडया कलया च ब्रह्मणो मुखे सरस्वतीरूपा विष्णोर्वक्षःस्थले लक्ष्मीरूपा शिवस्य वामाङ्कतले गौरीरूपा वशीभूता सती, त्रिशक्तिरूपा त्वमेवासीरित्यर्थः ॥ ४० ॥

बाधाकरीं भवाब्धेराधाराद्यम्बुजेषु विचरन्तीम् ॥
आधारीकृतकाञ्चीं बोधामृतवीचिमेव विमृशामः ॥ ४१ ॥

अन्वयः ॥ भवाब्धेर्बाधाकरीं आधाराद्यम्बुजेषु विचरन्तीं आधारीकृतकाञ्चीं बोधाऽमृतवीचिमेव विमृशाम इत्यन्वयः । वयमिति शेषः ॥ ४१ ॥

टीका ॥ "या मात्रा त्रपुषीलतातनुलसत्तन्तुस्थितिस्पर्द्धिनी वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् । शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः" इति श्रीलघ्वाचार्यवाक्यात् । स्वस्याः ध्यानेन भवाब्धेः संसाराख्यसमुद्रस्य बाधाकरीं नाशकरीं आधाराद्यम्बुजेषु कुण्डलीरूपेण विचरन्तीं ब्रह्मरन्ध्रे साक्षाद्ध्यानोक्तरूपां शिवेन सह समरसीभूत्वा यातायातेन विहरन्तीमित्यर्थः । आधारीकृता काञ्चीपुरी यया सा तामिव कामाक्षीमेव बोधो ज्ञानं यत्प्राप्य न म्रियन्ते जनास्तदेवामृतं ब्रह्म तस्य वीचिकां तरङ्गरूपामतस्तदभिन्नां साक्षात्तद्रूपां विमृशामः पुनः पुनः परिशीलयामो वयमित्यर्थः ॥ ४१ ॥

कलयाम्यन्तः शशधरकलयाङ्कितमौलिममलचिद्वलयाम् ।
अलयामागमपीठीनिलयांवलयाङ्कसुन्दरीमम्बाम् ॥ ४२ ॥

अन्वयः ॥ शशधरकलयाङ्कितमौलिं अमलचिद्वलयां अलयामागमपीठीनिलयां वलयाङ्कसुन्दरीमम्बामन्तः कलयामीत्यन्वयः ॥ ४२ ॥

टीका ॥ शशरूपमङ्कंधरतीति शशधरस्तस्य कलयाङ्कितश्चिन्हितो मौलिर्मस्तकं मुकुटं वा यस्यास्तां न विद्यते मलं यस्याः साऽमला सा चासौ चिच्चामलचित् श्रीकामेश्वरः सैव वलयं वेष्टनं यस्याः सा "लोहितां ललितां बाणचापपाशसृणीन्करैः । दधानां कामराजाङ्के यन्त्रितां मुदितां स्मरेत्" इति तन्त्रराजवचनात् । यद्वा निर्मलचिदिव शुक्लकान्तिमत् वज्रमौक्तिकानां वलयानि कङ्कणानि यस्याः सा तथोक्ता तां, अमलचिति कामेश्वरे वेष्टनमालिङ्गनं यस्याः सा वा । कामेशावलम्बिनीमित्यर्थः । अलयां न विद्यते लयो मृत्युर्यस्याः सा तां, अलयो मोक्षो यस्याः

सकाशात् प्राप्यते जनैरिति वा ताम्। यद्वा "अकारो वासुदेवः स्यात्" इत्येकाक्षरीकोशप्रामाण्येन अः विष्णुस्तस्य लयो यस्यां सा ताम्। "लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेप्यमी सा त्वं काचिदचिन्त्यरूपगहना शक्तिः परा गीयसे" इति लघुस्तवोक्तेः। आगमरूपा चरणपीठी यस्याः सा तां, गाढालिङ्गनसमये परमशिवस्य वलयानामङ्कश्चिन्हं तेन सुन्दरीं शोभास्पदाम्। यद्वा वलयान्येवाङ्कान्याभरणानि तैः सुन्दरीम्। अम्बां मातरमन्तः कलयामि मनसि ध्याय इत्यर्थः ॥ ४२ ॥

शर्वादिपरमसाधकगुर्वानीताय कामपीठजुषे ।
सर्वाकृतये शोणिमगर्वाय समर्प्यते हृदयम् ॥ ४३ ॥

अन्वयः ॥ कामपीठजुषे इत्यस्य सर्वाणि चतुर्थ्यन्तानि विशेषणानि तस्मै हृदयं समर्प्यते इत्यन्वयः। मयेति शेषः ॥ ४३ ॥

टीका ॥ शर्वः शिव आदिर्येषां ते शर्वादयः दिव्यौघसिद्धौघमानवौघपर्यन्ताश्च ते परमसाधकाश्च तथोक्ताः जपानुष्ठानकर्त्तारः उपदेशदीक्षाविधायकाः संप्रदायप्रवर्त्तकास्ते गुरवश्च शर्वादिपरमसाधकगुरवस्तैरानीताय, वाच्यवाचकयोरभेदान्मन्त्ररूपेण भूतलं प्रापिताय। यद्वा शर्वश्चासावादिश्च शर्वादिः स एव संप्रदायप्रवर्त्तकत्वेन साधकः "श्रीविद्योपासकानां च यथा देवो वरः शिवः" इति ब्रह्माण्डपुराणवाक्याच्छिवस्य साधकत्वप्रतिपादनात्। स चासौ गुरुश्च शर्वादिसाधकगुरुः "गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम्। उपायोपेयरूपाय शिवाय गुरवे नमः" इति शास्त्रात्। गुरुस्तेन च परंपरया भूतलं प्रापिताय वा। कामरूपः पीठः कामपीठः तं जुषते सेवत इति तथा तस्मै सर्वा आकृतयः चराचरात्मिका आकाराः यस्य तस्मै शोणिम्नो गर्वः शोणिमगर्वस्तस्मै हृदयं मनः समर्प्यते मयेत्यर्थः ॥ ४३ ॥

समया सांध्यमयूखैः समया बुद्ध्या सदैव शीतलया ।
उमया काञ्चीरतया न मया लभ्येत तादात्म्यम् ॥ ४४ ॥

अन्वयः ॥ सांध्यमयूखैः समया काञ्चीरतयोमया सदैव शीतलया समया बुद्ध्या मया तादात्म्यं न लभ्येत अपि तु लभ्येत एवेत्यन्वयः ॥ ४४ ॥

टीका ॥ संध्याया इमे सांध्याः सांध्याश्च ते मयूखाश्च सांध्यमयूखास्तैः समया समानया आरक्तप्रभयेत्यर्थः। काञ्च्यां रताऽऽसक्ता काञ्चीरता तयोमया उः शंभुस्तस्य मा लक्ष्मीः शोभा वा उमा तया समया उच्चनीचादिद्वैतभावरहितया अत एव सदैव शीतलया बुद्ध्या साधनभूतया मया सह, तस्याः श्रीमत्या आत्मनो भावस्तादात्म्यं न लभ्येत ? अपि तु लभ्येत एवेत्यर्थः। अनेन साधनेन श्रीमतीप्रसादात् सायुज्यं वा सारूप्यं कैवल्यं वा प्राप्स्याम्येवेति भावः ॥ ४४ ॥

जन्तोस्तव पदपूजनसंतोषतरङ्गितस्य कामाक्षि ।
बन्धो यदि भवति पुनः सिन्धोरम्भःसु बम्भ्रमीति शिला ॥४५॥

अन्वयः ॥ तव पदपूजनसंतोषतरङ्गितस्य जन्तोर्बन्धो यदि पुनर्भवति तदा सिन्धोरम्भःसु शिला बम्भ्रमीतीत्यन्वयः ॥ ४५ ॥

टीका ॥ तव पदयोः पूजा तया यः संतोषो भगवत्याः पादपूजनेनैवाहं कृतकृत्योऽस्मि अलं योगयागतीर्थयात्रादिनेतिरूपः । यद्वा तव पदपूजया स्वात्मलाभात् यः संतोषः "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" इति स्मृतेः । तेन तरङ्गितः हर्षितस्तस्य जन्तोर्जीवस्य पुनर्बन्धः व्यावहारिकः कुपितराजादिकृतः । वस्तुतस्तु अहंताममतारूपो यदि चेद्भवेत्तदा सिन्धोरम्भःसु समुद्रजलेषु शिला पाषाणः अतिशयेन पुनःपुनर्वा भ्रमतीति बम्भ्रमीति समुद्रजले अतिशयेन सर्वतस्तरतीत्यर्थः । शिलाया यथा समुद्रजले तरणमसंभाव्यं तथा तव पदपूजकस्य कदापि क्वचिदपि केनापि कीदृशोपि बन्धो नैव भवतीति भावः ॥ ४५ ॥

कुण्डलि कुमारि कुटिले चण्डि चराचरसवित्रि चामुण्डे ।
गुणिनि गुहारणि गुह्ये गुरुमूर्ते त्वां नमामि कामाक्षि ॥ ४६ ॥

अन्वयः ॥ सर्वाणि संबोधनान्तपदानि कामाक्षीत्यस्य विशेषणानि त्वामहं वन्द इत्यन्वयः ॥ ४६ ॥

टीका ॥ कुण्डलाकारत्वात् हे कुण्डलि ! मूलाधारावलम्बिनि ! कुमारि ! कुमारावस्थापन्ने दुर्गारूपिणि बालारूपिणि वा । वस्तुतस्तु केनाप्यपरिणीते अनादिशिवसंयोगिनि कुटिले ! जगद्गमनसमये कुटिलाकारत्वात् वामे इत्यर्थः । चण्डस्त्वत्यन्तकोपनः तस्येयं शक्तिश्चण्डी संबुद्धौ हे चण्डि ! सर्वसंहारकारिणि परब्रह्मरूपिणि चराचरसवित्रि ! चरन्तीति चराः मनुष्यादयः, न चरन्तीत्यचराः वृक्षादयः द्विविधं जगत्सूते या सा तथोक्ता संबुद्धौ तथोक्ते चामुण्डे ! चण्डमुण्डविनाशिनीति कालिकाया अपरं नामेति बोध्यम् । चण्डमुण्डयोः श्रीकालिकया युद्धं यदासीत्तदा श्रीकाली तौ ससैन्यौ हत्वा तयोः शिरसी गृहीत्वा प्रधानदेवीं गौरीदेहादवतीर्णां कौशिकीं चण्डिकादिनाम्ना ख्यातां प्रत्यागत्य, "मया तवात्रोपहृतौ चण्डमुण्डौ महापशू । युद्धयज्ञे स्वयं शुम्भं निशुम्भं च हनिष्यसि" इत्युक्त्वा समर्पिते, तदा साक्षात्सरस्वती कौशिकीतिनाम्ना ख्याता प्रसन्ना जाता सती, "यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता । चामुण्डेति ततो लोके ख्याता देवि भविष्यसि" इति स्वललाटोत्पन्नां कालिकामुवाचेति तदा प्रभृति काली चामुण्डाभिख्या जातेति श्रीसप्तशत्यां प्रसिद्धा अतस्तद्रूपे अनादिसिद्धं नामेदं वा । गुणाः सत्त्वादयोऽणिमादयो वा ऐश्वर्यादयः षट् वा सर्वज्ञत्वसौन्दर्यादयोऽनंता वा एकोनचत्वारिंशद्विष्णुभागवतोक्ता वास्यामस्तीति सा गुणिनी संबुद्धौ तादृशे गुहारणि ! गुहा बुद्धिररणिर्यस्याः बुद्ध्या प्रकाशमानत्वात् । यद्वा बुद्धेररणिः बुद्ध्युत्पादिका संबुद्धौ तादृशे !

गुह्येऽन्तर्यामिणि । यद्वा " अन्यशास्त्रपुराणानि सामान्यगणिका इव । या पुनः शांभवी विद्या गुप्ता कुलवधूरिव " इति तन्त्रेषु यत्र तत्र प्रतिपादनात् हे गुह्ये ! शिवोक्तरूपे वा । लोके हि आत्मानं स्वस्त्रियं बहुधनं वा यत्किंचित्प्रियमनर्घ्यं यद्यद्वस्तु तत् तत् गुप्ततया बहुयत्नेन रक्षन्ति जनाः । राजाऽपि महत्कार्यकारिणं मन्त्रं गुप्तमेव रक्षति " षट्कर्णो भिद्यते मन्त्रः " इति नीतिशास्त्रोक्तत्वात् । तद्वत् श्रीपरमेश्वरस्य आत्मा मूलधनं सर्वस्वं बलं मन्त्रश्रेयमस्ति अतः सर्वशास्त्रेषु परमशिवेनापीयं विद्या गुह्यैव कृता रक्षिता प्रकाशोपि संकेतेनैव कृतः । तस्या उपासनमपि गुह्यकर्त्तव्यतया प्रतिपादितम् । आचारोऽपि गुह्य एव कृतः । स्वरूपगुह्योपासना गुह्याऽऽचारगुह्या तस्मात् हे गुह्ये । ब्रह्मरूपे वा गुह्यकालीरूपे वा । गुरुमूर्त्ते ! " गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् । उपायोपेयरूपाय शिवाय गुरवे नमः " इति रूपो गुरुः श्रीविद्याप्रदो मूर्तिर्यस्याः सा । यद्वा आगमनिगमेषु गुरुदेवतयोरेकत्वप्रतिपादनात् । गुरोर्मूर्त्ते वा । यद्वा सर्वगुरुः श्रीपरमशिवस्तस्य मूर्त्ते । हे कामाक्षि इत्यस्य नाम्नोऽर्थः कटाक्षशतके व्याख्यातोऽतो नात्र व्याख्यायत इति । ईदृशीं त्वां नमामि । एतानि दैवतानि तवैव रूपाण्यतस्तत्तन्नाम्ना त्वामेव संबोध्य त्वां नौमीति भावः ॥ ४६ ॥

अभिदाकृतिर्भिदाकृतिरचिदाकृतिरपि चिदाकृतिर्मातः ।
अनहंता त्वमहंता भ्रमयसि कामाक्षि शाश्वती विश्वम् ॥४७॥

अन्वयः ॥ अभिदाकृतिरित्यादिसर्वे प्रथमान्ताः शब्दाः त्वमित्यस्य विशेषणभूताः कामाक्षीति संबोधनम् । मातरिति च । त्वं विश्वं भ्रमयसीत्यन्वयः ॥ ४७ ॥

टीका ॥ न भिद्यत इत्यभिदा सा आकृतिः स्वरूपं यस्याः सा एकरूपा ब्रह्मरूपेत्यर्थः । भिद्यते आकृतिर्यस्याः सा भेदरूपाकृतिः अनेकाकारसर्वजगद्रूपिणीत्यर्थः । नचिदचित् सैवाकृतिर्यस्याः सा जडरूपेत्यर्थः । चिदेवाकृतिर्यस्याः सा जीवरूपिणी ब्रह्मरूपिणी वा " चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका " इति ब्रह्माण्डपुराणोक्तरहस्यनामसु नामप्रतिपादनात् । न विद्यतेऽहमो भावो यस्याः सा देहाहंभावशून्या पराहंतेत्यर्थः । नाहंता अनहंता वा परिच्छिन्नतारहिता नामरूपादिहीनेत्यर्थः । अहमो भावोऽहंता सर्वाहंकाररूपा शाश्वती अनादिसिद्धा त्वमेव सर्वात्मिकेत्यर्थः । हे कामाक्षि ! हे मातः ! जगत्प्रसूः क्रीडार्थं त्वं विश्वं भ्रमयसि वस्तुतस्तु त्वं सर्वभावविकारशून्या वागविषयेत्यर्थः । यद्वेत्थं योज्यम् । हे कामाक्षि ! हे मातः ! हे जगत्प्रसूः ! त्वं अभिदाकृतिः भेदेन शून्या आकृतिरसि आत्मस्वरूपिणी अद्वयरूपेत्यर्थः । तथा सत्यपि भिदाकृतिः प्रकृतिपुरुषरूपा । यद्वा अनेकाकारजगद्रूपा पुनः कीदृशी पूर्णत्वात् अनहंता देशकालातिगा सर्वदेशसर्वकालस्था । देशकालविभागशून्या, तथा सत्यपि अहंता देशकालविभागवती देहाहंकाररूपेत्यर्थः । पुनः कीदृशी । शाश्वती अनादिसिद्धा चिदाकृतिः यथा सूर्यः स्वसामर्थ्यादेव स्वरूपं प्रकाशयन् विश्वजातं प्रकाशयति तथा त्वमपि अन्यवस्तु अनपेक्ष्यैव

स्वशक्त्या स्वप्रकाशं कुर्वन्ती विश्वजातं प्रकाशयन्ती तथा सत्यपि अचिदाकृतिर्जडरूपा इति लोके अज्ञैर्ज्ञाता सती त्वं विश्वं भ्रमयसीत्यर्थः ॥ ४७ ॥

शिव शिव पश्यन्ति समं श्रीकामाक्षीकटाक्षिताः पुरुषाः ।
विपिनं भुवनममित्रं मित्रं लोष्ठं च युवतिबिम्बोष्ठम् ॥ ४८ ॥

अन्वयः ॥ श्रीकामाक्षीकटाक्षिताः पुरुषाः शिवाशिवेति हर्षे विपिनं भुवनं अमित्रं मित्रं लोष्ठं युवतिबिम्बोष्ठं समं पश्यन्तीत्यन्वयः ॥ ४८ ॥

टीका ॥ श्री कामाक्ष्या भगवत्याः कटाक्षिताः कृपाकटाक्षनिरीक्षिताः पुरुषाः ज्ञानिनः सन्तः विपिनं वनं भुवनं गृहं समं तुल्यं पश्यन्ति वनगृहयोर्द्वेषरागराहित्यात् । यथा वनेऽराग-स्तथा स्वगृहेपि वैराग्यं ममताशून्यत्वमित्यर्थः । यद्वा समं ब्रह्म पश्यन्ति अद्वयस्वरूपज्ञानात् " द्वितीयाद्वै भयं भवति " इति श्रुतेः । नह्येकस्मात् स्वस्माद्भयमस्तीत्यतः अमित्रं शत्रुं भयदं मित्रमिष्टं सुखदं समं ब्रह्मतुल्यं वा पश्यन्ति शत्रौ मित्रे च औदासीन्यात् । लोष्ठं निःसारं निरर्थकमपि युवत्याः तरुण्याः बिम्ब इव रक्तं सुन्दरं स्वादु ओष्ठं ओष्ठपुटं समं तुल्यं पश्यन्ति । लोष्ठं यथा त्यजन्ति तथौष्ठबिम्बमपि रागराहित्यादित्यर्थः । यद्वा समं ब्रह्म पश्यन्ति वस्तुतस्तु सर्वं ब्रह्मरूपं शिव ! शिव ! इति हर्षे पश्यन्ति श्रीकामाक्षीभक्तजनाः सदैव ज्ञानानन्दिनः कृतकृत्या भवन्तीति भावः । यद्वा श्रीमतीदृगञ्चलिताः यत्र विपिनं तत्र गृहं स्वसामर्थ्यरचितं पश्यन्ति अतः समं सुखं पश्यन्ति अमित्रं मित्रं सर्वदोपकारकं स्वेच्छयैव पश्यन्ति अतः समं सुखं पश्यन्ति लोष्ठमपि समं सुखं ब्रह्मरूपं पश्यन्ति युवतिबिम्बोष्ठं समं ब्रह्म पश्यन्ति न तु स्वात्मना पृथक् प्रीत्यास्पदं कामोत्पादकं बन्धकं पश्यन्ति । तदुक्तं दुर्वासालहर्यां " गेहं नाकति गर्वितः प्रणमति श्रीसंगमो मोक्षति द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति । मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात्त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् " इति श्रीमतीभक्ताः सर्वदा सर्वत्र समं ब्रह्म पश्यन्तीति भावः ॥ ४८ ॥

कामपरिपन्थिकामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥ ४९ ॥

अन्वयः ॥ हे कामपरिपन्थिकामिनि ! हे कामेश्वरि ! हे कामपीठमध्यगते ! हे कमले ! हे कामकले ! हे कामकोटि ! हे कामाक्षि ! कामदुघा भवेत्यन्वयः । त्वमिति शेषः ॥ ४९ ॥

टीका ॥ कामस्य परिपन्थिनः शत्रोः शिवस्य हे कामिनि पत्नि ! यद्वा कामपरिपन्थिनि शिवे कामोस्या अस्तीति सा । यद्वा कामपरिपन्थिना शिवेन साकं काम इच्छा जगद्रचनपालन-संहरणरूपास्या अस्तीति सा संबुद्धौ तादृशे ! हे कामेश्वरि ! सर्वकार्याणां मनोरथानां वा कामदेवस्य वा ईश्वरि स्वामिनि कामेश्वरस्येयं श्रीकामेश्वरी वा संबुद्धौ तादृशे ! कामरूपं

पीठं तस्मिन् गते प्राप्ते स्थिते इत्यर्थः । कमले ! लक्ष्मीरूपे । कामकले ! तुरीयस्वररूपे । कामः कोटावग्रे ऽनुचरत्वेन यस्याः सा संबुद्धौ हे तादृशे ! हे कामाक्षि ! कामदुघा सर्वकामनाप्रपूरणी भव त्वमित्यर्थः । सर्वकामप्रदोयं श्लोकरूपो मन्त्रः ॥ ४९ ॥

मध्येहृदयं मध्येनिटिलं मध्येशिरोपि वास्तव्याम् ।
चण्डकरशक्रकार्मुकचन्द्रसमानां नमामि कामाक्षीम् ॥ ५० ॥

अन्वयः ॥ मध्येहृदयं मध्येनिटिलं मध्येशिरोपि वास्तव्यां चण्डकरशक्रकार्मुकचन्द्रसमानां कामाक्षीं नमामीत्यन्वयः ॥ ५० ॥

टीका ॥ हृदयस्य मध्ये इति मध्येहृदयं, निटिलस्य ललाटस्य मध्ये इति मध्येनिटिलं, शिरसो मध्ये इति मध्येशिरोपि, हृदयमध्ये ललाटमध्ये शिरोमध्येऽपि । वसतीति वास्तव्या ताम् । कीदृशीं हृदयमध्ये इत्यादि यथाक्रमेण चण्डकरशक्रकार्मुकचन्द्रसमानाभां हृदयेसूर्यच्छविं, निटिले इन्द्रधनुःसमानरुचिं, शिरोमध्ये चन्द्रतुल्यकान्ति त्वां कामाक्षीमहं नमामीत्यर्थः ॥ ५० ॥

अधिकाञ्चि केलिलोलैरखिलागमयन्त्रतन्त्रमन्त्रमयैः ।
अतिशीतं मम हृदयं विषमशरद्रोहिजीवनोपायैः ॥ ५१ ॥

अन्वयः ॥ अधिकाञ्चि केलिलोलैः अखिलागमयन्त्रतन्त्रमन्त्रमयैः विषमशरद्रोहिजीवनोपायैः मम हृदयमतिशीतमित्यन्वयः । अस्तीति शेषः ॥ ५१ ॥

टीका ॥ काञ्चिविषये केल्या केलौ क्रीडायां वा लोलैश्चपलैः, अखिलाः सर्वे च ते आगमाश्चाखिलागमास्तेषु उक्तानि यन्त्राणि च तन्त्राणि च मन्त्राश्च तन्मयैः, अखिलाश्च त आगमाः शास्त्राणि यन्त्राणि च तन्त्राणि च मन्त्राश्च तथोक्तास्तन्मयै र्वा, विषमाः पञ्चसंख्याकाः शराः यस्य सः कामस्तेन साकं द्रोहो वैरं अस्यास्तीति तथाविधस्तस्य जीवनस्य प्राणधारणस्य उपायैरुद्यमैर्मम हृदयं मनोऽतिशीतमतिसंतुष्टमस्तीति शेषः । बहुवचनं तु श्रीमत्या विम्बरूपायाः क्रीडार्थे किरणरूपनानाकारावरणदेवतात्वेन प्रथितायाः बहुत्वात् । बहुवचनमादरार्थे वेत्यलम् ॥ ५१ ॥

नन्दति मम हृदि काचन मन्दिरयन्ती निरन्तरं काञ्चीम् ।
इन्दुरविमण्डलकुचा विन्दुवियन्नादपरिणता तरुणी ॥ ५२ ॥

अन्वयः ॥ निरन्तरं काञ्चीं मन्दिरयन्ती इन्दुरविमण्डलकुचा विन्दुवियन्नादपरिणता काचन तरुणी मम हृदि नन्दतीत्यन्वयः ॥ ५२ ॥

टीका ॥ निरन्तरं काञ्चीपुरीं मन्दिरमिवाचरतीति मन्दिरयन्ती इन्दुरव्योर्मण्डले कुचौ यस्याः सा इन्दुरविमण्डलकुचा विन्दुरेव वियदाकाशं मुखं यस्याः सा विंदुवियत् । कामक-

लोर्ध्वगबिन्दोरेतस्या वैराजरूपप्रतिपादने आकाशरूपमुखस्य प्रतिपादनात् विन्दुवियद्रूपमुखमित्युक्तं भवति। "नभोमहाविन्दुमुखी चन्द्रसूर्यस्तनद्वयी सुमेरुहार्द्दकलया राजमाना महीपदा ॥ १ ॥ पातालतलविन्यस्ता त्रिलोकीयं तवाम्बिके। कामराजकलारूपा जागर्त्ति सचराचरा ॥ २ ॥" इति। यद्वा विन्दुवियन्नादपरिणता विन्दुवियन्नादेन परिणता रूपान्तरं प्राप्ता विस्तीर्णा वा वहिरभ्यन्तरे च प्रकाशरूपैकाकारतया स्थितेत्यर्थः। "आनन्दलक्षणमनाहतसंनिदेशे नादात्मना परिणतं तव रूपमीशे। प्रत्यङ्मुखेन मनसा परिचीयमानं शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥ १ ॥" इत्यभियुक्तोक्तेः काचनानिर्वचनीया तरुणी युवती नित्यप्रौढप्रकाशवती परप्रेमास्पदा मम हृदि नन्दति समृद्धिं आनन्दं वा करोतीत्यर्थः ॥ ५२ ॥

शंपालतासवर्णं संपादयितुं भवज्वरचिकित्साम्।
लिम्पामि मनसि किंचन कम्पातटरोहिसिद्धभैषज्यम् ॥ ५३ ॥

अन्वयः ॥ भवज्वरचिकित्सां संपादयितुं शंपालतासवर्णं किंचन कम्पातटरोहिसिद्धभैषज्यं मनसि लिम्पामीत्यन्वयः ॥ ५३ ॥

टीका ॥ भवरूपोज्वरस्तापस्तस्य या चिकित्सा रोगनिवृत्तिक्रिया तां संपादयितुं शंपालतासवर्णं शंपा विद्युत्तद्रूपा तस्या वा लता तस्याः सवर्णं तत्सदृशमित्यर्थः। किंचन श्रेष्ठं यस्य कस्याऽप्यग्रेऽकथनीयं पात्राय वाच्यं वर्णनीयं च कम्पातटे रोहतीत्येवं शीलं कम्पातटरोहि सिद्धं च तद्भेषजमेव भैषज्यं औषधं च सिद्धभैषज्यं तत् मनसि लिम्पामि लेपयामि भवज्वरनाशाय श्रीमत्या एकाग्रमनसा ध्यानं करोमीतिभावः ॥ ५३ ॥

अनुमितकुचकाठिन्यामधिवक्षःपीठमङ्गजन्मरिपोः ॥
आनन्ददां भजे तामानङ्गब्रह्मतत्त्वबोधशिराम् ॥ ५४ ॥

अन्वयः ॥ अङ्गजन्मरिपोः अधिवक्षःपीठं अनुमितकुचकाठिन्यां आनन्ददां आनङ्गब्रह्मतत्त्वबोधशिरां तां भज इत्यन्वयः। अहमिति शेषः ॥ ५४ ॥

टीका ॥ अङ्गाजन्म यस्य सोऽङ्गजन्मा कामस्तस्य रिपोः श्रीशिवस्य वक्षश्च तत्पीठं च वक्षःपीठं वक्षःपीठे इत्यधिवक्षःपीठं अनुमितं कुचयोः काठिन्यं यस्यास्तां कुचकाठिन्येन शिवस्यानन्ददां अनङ्ग एव आनङ्गः स एव ब्रह्म "कामो वै भगवान्" इति श्रुतेः। जगत्सिसृक्षावत् ब्रह्म आनङ्गब्रह्म तदेव तत्त्वं तस्य बोधो ज्ञानं तस्य शिरां प्रणालिकां उत्तरोत्तरप्रवाहिनीं नाडीं च। कामेश्वरब्रह्मतत्त्वबोधदायिनीमित्यर्थः। तां प्रसिद्धां भज इत्यर्थः। अहमिति शेषः ॥ ५४ ॥

ऐक्षिषि पाशाङ्कुशधरहस्तान्तं विस्मयार्हवृत्तान्तम्।
अधिकाञ्चि निगमवाचां सिद्धान्तं शूलपाणिशुद्धान्तम् ॥ ५५ ॥

अन्वयः ॥ अधिकाञ्चि पाशाङ्कुशधरहस्तान्तं विस्मयार्हवृत्तान्तं निगमवाचां सिद्धान्तं शूलपाणिशुद्धान्तमैक्षिषीत्यन्वयः ॥ ५५ ॥

टीका ॥ काञ्च्यामित्यधिकाञ्चि काञ्चिमध्ये इत्यर्थः । पाशश्चाङ्कुशश्च पाशांकुशौ तौ धरत इति पाशांकुशधरौ हस्तान्तौ यस्य स तथोक्तस्तं विस्मय आश्चर्यं तस्यार्हस्तद्योग्यो वृत्तान्तो वर्त्तनं चरित्रं यस्य स तं, निगमवाचां वेदवाचां देववाचां सिद्धान्तः सिद्धोन्तो निष्पन्नो निश्चयोत्रसिद्धान्तः, वादिप्रतिवादिभ्यां निर्णीतार्थः सिद्धान्तो वा तं, शूलस्त्रिशूलः पाणौ हस्ते यस्य स शूलपाणिस्तस्य शुद्धान्तस्तं अन्तःपुरमित्यर्थः । उपचारात् कलत्रमित्यर्थः । ऐक्षिषि दृष्टवानहमतो महद्भाग्यं ममेति भावः ॥ ५५ ॥

आहितविलासभङ्गीमाब्रह्मस्तम्बशिल्पकल्पनया ।
आश्रितकाञ्चीमतुलामाद्यां विस्फूर्तिमाद्रिये विद्याम् ॥ ५६ ॥

अन्वयः ॥ आब्रह्मादिकल्पनयेत्यन्तमेकं पदं तृतीयैकवचनम् । अन्यानि द्वितीयैकवचनान्तानि आद्रियेऽहमित्यन्वयः ॥ ५६ ॥

टीका ॥ आब्रह्मेति ब्रह्माणमभिव्याप्य स्तम्बस्तृणगुच्छस्तत्पर्यन्तं आब्रह्मस्तम्बं तस्य शिल्पं घटनं तस्य कल्पनया रचनया आहिताः स्थापिता विलासरूपा भङ्गयस्तरङ्गाः भेदाः यया सा तां आश्रिता काञ्ची यया सा तां न विद्यते तुल्यो यस्याः सा तां आद्यां श्यामारूपिणीं ब्रह्मादिभ्य आद्यां सर्वकारणरूपां वा विस्फूर्त्तिं विशेषेण स्फूर्त्तिं स्फुरणं परब्रह्मणः "एकोऽहं बहुस्यां, एकोऽहं शुद्धोऽहं बुद्धोऽहं नित्योहं निरञ्जनोहमनन्तोहं ब्रह्माहम्" इत्यादिस्फुरणरूपचैतन्यं तदभिन्नाम्। "सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्" इत्याकारां विद्यां श्रीविद्यायाः ब्रह्मविद्यात्वेन निगमागमेषु प्रतिपादनात् । आद्रियेऽवलम्ब इत्यर्थः । अहमिति शेषः ॥ ५६ ॥

मूकोपि जटिलदुर्गतिशोकोऽपि स्मरति यः क्षणं भवतीम् ।
एको भवति स जन्तुर्लोकोत्तरकीर्त्तिरेव कामाक्षि ॥ ५७ ॥

अन्वयः ॥ हे कामाक्षि ! यो जन्तुर्मूकोपि जटिलदुर्गतिशोकोपि क्षणं भवतीं स्मरति स एक एव लोकोत्तरकीर्त्तिर्भवतीत्यन्वयः ॥ ५७ ॥

टीका ॥ मूकः कविसार्वभौमः श्रीमत्याः स्वदृष्टमेव प्रसादप्रभावं वर्णयति । हे कामाक्षि ! यो जन्तुर्भवतीं कामाक्षीं क्षणं क्षणमात्रमपि स्मरति स जीवः मूकोपि वाग्विरहितोऽपि जटिलाऽतिबहुला दुष्टा गतिर्येन स जटिलदुर्गतिः तथाविधः शोको यस्य तथाविधः । यद्वा जटिला चासौ दुर्गतिश्च जटिलदुर्गतिः । जटिलदुर्गतेः शोको यस्य स तथोक्तः लोके त्रिलोके उत्तरा श्रेष्ठा कीर्त्तिर्यस्य स तथोक्तः स एक एवेति निश्चयेन भवति ॥ ५७ ॥

पञ्चदशवर्णरूपं कंचन काञ्चीविहारधौरेयम् ।
पञ्चशरीयं शंभोर्वञ्चनवैदग्ध्यमूलमवलम्बे ॥ ५७ ॥

अन्वयः ॥ पञ्चदशवर्णरूपं कंचन काञ्चीविहारधौरेयं पञ्चशरीयं शंभोर्वञ्चनवैदग्ध्यमूलमवलम्बे इत्यन्वयः ॥ ५८ ॥

टीका ॥ पञ्चदशवर्णात्मको मन्त्रो रूपं यस्य तत् कंचन श्रेष्ठं अनिर्वचनीयं वा । काञ्च्या विहारे धौरेयं अग्रवर्त्ति प्रवीणमिति यावत् । पञ्चशरस्य कामस्य इदं पंचशरीयं अनेन कामराज विद्यारूपत्वं सूचितम् । शंभोर्वञ्चने छलने यद्वैदग्ध्यं चातुर्यं तस्य मूलं आदिकारणं तदवलम्ब आश्रयेऽहमित्यर्थः । अनेन मन्त्रमन्त्रदेवतयोरैक्यं दर्शितमित्यलम् ॥ ९८ ॥

परिणतवतीं चतुर्द्धा पदवीं सुधियां समेत्य सौषुम्णीम् ।
पञ्चाशदर्णकल्पितपदशिल्पां तां नमामि कामाक्षीम् ॥ ५९ ॥

अन्वयः ॥ सुधियां सौषुम्णीं पदवीं समेत्य चतुर्द्धा परिणतवतीं पञ्चाशदर्णकल्पितपदशिल्पां तां कामाक्षीं नमामीत्यन्वयः । अहमिति शेषः ॥ ५९ ॥

टीका ॥ सुष्टु धीर्धिषणा येषां ते सुधियः परमेश्वरीपादभक्तास्तेषां सुषुम्णाया इयं सौषुम्णी तां पदवीं मार्गं समेत्य प्राप्य चतुर्द्धा चतुःप्रकारैः परापश्यन्तीमध्यमावैखरीरूपैः परिणतवतीं अवस्थान्तरं गतवतीं पञ्चाशदेव ळं मुक्त्वा आदिक्षान्ता अर्णा वर्णाः पञ्चाशदर्णास्तैः कल्पितानि पदरूपाणि शिल्पानि चातुर्याणि यया सा तां कामाक्षीं नमामीत्यर्थः । अहमिति शेषः ॥ ९९ ॥

आदिक्षन्मम गुरुराडादिक्षान्तात्मिकां विद्याम् ।
स्वादिष्ठचापदण्डां नेदिष्ठामेव कामपीठगताम् ॥ ६० ॥

अन्वयः ॥ आदिक्षान्तात्मिकां विद्यां स्वादिष्ठचापदण्डां नेदिष्ठामेव कामपीठगतां मम गुरुराडादिक्षादित्यन्वयः ॥ ६० ॥

टीका ॥ अकार आदिर्येषां त आदयः क्षकारोन्ते येषां ते क्षान्ताः आदयश्च ते क्षान्ताश्चादिक्षान्तास्त एव आत्मा स्वरूपं यस्याः सा आदिक्षान्तात्मिका तां विद्यां स्त्रीदैवत्यां ज्ञानप्रदां ज्ञानरूपां स्वादिष्ठ इक्षुरूपश्चापदण्डो यस्याः सा तां इक्षुचापिनीमित्यर्थः । अतिशयेनान्तिका इति नेदिष्ठा तां स्वात्मरूपिणीम् " स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा " इति तन्त्रराजवचनात् । आत्मरूपिणीं सतीमपि भक्तानामुपासनार्थे कामपीठगतां प्राप्तां तत्र सेव्यामित्यर्थः ॥" गृणते तत्त्वमात्मीयमात्मीकृतजगत्त्रयम् । उपायोपेयरूपाय शिवाय गुरवे नमः " इति लक्षणो गुरुश्चासौ राट् राजा च गुरुराट् साक्षात्पराशक्तिरूपः " गुरुरेव परा शक्तिः

सा विमर्शमयी मता । नवत्वं तस्य देहस्य रन्ध्रत्वेनावभासते " इति तन्त्रराजवचनात् । स आदिक्षत् दीक्षां कृतवानित्यर्थः ॥ ६० ॥

तुष्यामि हर्षितस्मरशासनया काञ्चिपुरीकृतासनया ।
स्वासनया सकलजगद्भासनया कलितशम्बरासनया ॥ ६१ ॥

अन्वयः ॥ हर्षितस्मरशासनया काञ्चिपुरीकृतासनया स्वासनया सकलजगद्भासनया कलितशम्बरासनया तुष्यामीत्यन्वयः । अहमिति शेषः ॥ ६१ ॥

टीका ॥ स्मरे शासना यस्याः स्मरः शासनायां वा यस्याः सा तथाविधा हर्षिता चासौ स्मरशासना च तथोक्ता तया । यद्वा स्मरे कामे शासनं शिक्षा यस्य स तादृशः शिवः हर्षितः स्मरशासनो यया सा तया, काञ्चिपुर्यां कृतमासनं यया सा तथोक्ता तया, स्वस्या-मासनं स्थितिर्यस्याः सा तया पराधिष्ठानरहितया स्वे महिम्नि स्थितयेत्यर्थः । सकलं च तज्जगच्च सकलजगत् तस्य भासनं यया सा तथाविधा तया कलितशम्बरासनया कलितं शम्ब-रासनं वरासनं बवयोरैक्यात् । यद्वा शं सुखमस्त्यस्मिन्निति शम्बस्तं राति ददातीति शम्बरः शिवः स एवासनं, यद्वा शम्बरं श्रेष्ठं चित्रमृगचर्मरूपं वासनम् । यद्वा श्रेष्ठासनं कामशास्त्रोक्तं योगशास्त्रोक्तं स्वस्तिकादि वा, यद्वा शं आनन्दस्तद्रूपो वरः शिवस्तथोक्तः स एवासनं, यद्वा शं सुखमेव वरं श्रेष्ठमासनं, निजानन्दरूपं वासनं तथोक्तं कलितं रचितं शम्बरासनं यया सा तथोक्ता तया तुष्यामि ब्रह्मज्ञानप्राप्त्या तस्याः स्वामिनीत्वेन वा संतापितोऽस्मीत्यर्थः ॥ ६१ ॥

प्रेमवती कम्पायां स्थेमवती यतिमनस्सु भूमयति ।
सामवती नित्यगिरा सोमवती शिरसि भाति हैमवती ॥ ६२ ॥

अन्वयः ॥ कम्पायां प्रेमवती यतिमनस्सु स्थेमवती भूमयती नित्यगिरा सामवती शिरसि सोमवती ईदृशी हैमवती भातीत्यन्वयः ॥ ६२ ॥

टीका ॥ कम्पायां नद्यां प्रेमाऽस्या अस्तीति प्रेमवती यतीनां मनस्सु स्थेमवती स्थैर्य-वती सती भूमा ब्रह्मेवाचरतीति भूमयतीति सर्वकालसर्वदेशव्यापिकेत्यर्थः । नित्यगिरा सदा वाचा सामवती प्रियवचनवती शिरसि ललाटे सोमोऽस्याअस्तीति सोमवती चन्द्रशेखरेत्यर्थः । ईदृशी हैमवती हिमवत इयं कन्या हैमवती भाति प्रकाशत इत्यर्थः ॥ ६२ ॥

कौतुकिना कम्पायां कौसुमचापेन कीलितेनान्तः ।
कुलदैवतेन महता कुड्मलमुद्रां धुनोतु नः प्रतिभाम् ॥ ६३ ॥

अन्वयः ॥ कम्पायां कौतुकिना कौसुमचापेनान्तःकीलितेन महता कुलदैवतेन नः कुड्मलमुद्रां प्रतिभां धुनोत्वित्यन्वयः ॥ ६३ ॥

टीका ॥ कम्पायां नद्यां कौतुकमस्यास्तीति तत् तेन, कुसुमैर्विरचितः कौसुमः स एव चापोधनुर्यस्य स तादृशस्तेन कामेनेत्यर्थः । अन्तः कीलितो यस्य तत्तेन कामवशवर्त्तिचित्तेन, कम्पायां कौतुकिना क्रीडापरायणेन महता महीयसा कुले षट्त्रिंशत्तत्त्वमये शरीरे विश्वस्मिन् वा दीव्यति प्रकाशत इति देवः देव एव देवता देवता एव दैवतं तेन वंशदैवतेन वा । कुड्मलः कोरक इव मुद्रा चिह्नमाकारो यस्याः सा तां नोऽस्माकं प्रतिभां धुनोतु संकुचिताकारां बुद्धिं विकसितां करोत्वित्यर्थः ॥ ६३ ॥

केनापि मिलितदेहा यूना स्वाहासहायतिलकेन ।
सहकारमूलदेशे संविद्रूपा कुटुम्बिनी रमते ॥ ६४ ॥

अन्वयः ॥ केनापि यूना स्वाहासहायतिलकेन मिलितदेहा संविद्रूपा कुटुम्बिनी सहकारमूलदेशे रमत इत्यन्वयः ॥ ६४ ॥

टीका ॥ केनाप्यसीमान्तमहिम्ना श्रेष्ठेनानिर्वचनीयेन स्वाहा सहाया यस्य स तथोक्तः स एव तिलको यस्य तेन भालाग्निनेत्रेण शिवेनेत्यर्थः । यूना तरुणेन सह मिलितो देहो यस्याः सा तथाविधा संविद्रूपं यस्याः सा तथोक्ता कुटुम्बमस्या अस्तीति कुटुम्बिनी लीलया स्त्रीरूपिणी सहकारमूलदेशे आम्रतले रमते क्रीडत इत्यर्थः ॥ ६४ ॥

कुसुमशरगर्वसंपत्कोशगृहं भाति काञ्चिमध्यगतम् ।
स्थापितमस्मिन्कथमपि गोपितमन्तर्मया मनोरत्नम् ॥ ६५ ॥

अन्वयः ॥ कुसुमशरगर्वसंपत्कोशगृहं काञ्चिमध्यगतं भाति । अस्मिन् अन्तर्गोपितं मनोरत्नं मया कथमपि स्थापितमित्यन्वयः ॥ ६५ ॥

टीका ॥ कुसुमशरस्य यो गर्वः स एव संपत् धनं तस्याः कोशरूपं गृहं काञ्च्या मध्ये गतं प्राप्तं श्रीकामाक्षीरूपं भाति । अस्मिन् कुसुमशरगर्वसंपत्कोशगृहे श्रीकामाक्षीरूपेन्तर्मध्ये मनोरूपं रत्नं कथमपि केनापि प्रकारेण गुरूक्तयुक्त्या श्रमेण स्थापितं रक्षितं कामक्रोधादितस्करभयं कदापि नास्त्यतोहं परमानन्दी जात इति भावः ॥ ६५ ॥

दग्धषडध्वारण्यं दरदलितकुसुम्भसंभृतारुण्यम् ।
कलये नवतारुण्यं कम्पातटसीम्नि किमपि कारुण्यम् ॥ ६६ ॥

अन्वयः ॥ कम्पातटसीम्नि दग्धषडध्वारण्यं दरदलितकुसुम्भसंभृतारुण्यं किमपि कारुण्यं कलये इत्यन्वयः ॥ ६६ ॥

टीका ॥ कम्पाया नद्याः तटं तस्य सीम्नि समीपे षट्पदाद्या अध्वानो यस्मिन् तत् षडध्वं तच्चारण्यं तथोक्तं दग्धं षडध्वारण्यं साधकस्य येन तत् दरदलितं ईषद्विकसितं च तत्

कुसुम्भं च तत् तथोक्तं तस्य सम्यक् भृतं धृतमारुण्यं रक्तत्वं येन तत् तथोक्तं नवं तारुण्यं यस्य तत् नवयौवनमित्यर्थः। किमपि कारुण्यं कलये स्तौमीत्यर्थः ॥ ६६ ॥

अधिकाञ्चि वर्द्धमानानतुलान्करवाणि पारणामक्ष्णोः ।
आनन्दपाकभेदानरुणिमपरिणामगर्वपल्लवितान् ॥ ६७ ॥

अन्वयः ॥ अधिकाञ्चि वर्द्धमानान् अतुलान् आनन्दपाकभेदान् अरुणिमपरिणामगर्वपल्लवितान् अक्ष्णोः पारणां करवाणीत्यन्वयः ॥ ६७ ॥

टीका ॥ काञ्च्यामित्यधिकाञ्चि वर्द्धमानानुज्जृम्भितान् अतुलान् असमानान् आनन्दस्य यः पाक आनन्दपाकस्तस्य भेदान् अरुणिम्नः परिणामोऽवस्थान्तरगमनं तस्य ये गर्वाः त एव पल्लवा जाताः येषु, अरुणिम्नो रक्ततायाः परिणामस्तस्य गर्वोऽहंकृतिश्चारुणिमपरिणामगर्वस्तस्य पल्लविता विस्तारा वा तान्प्रति अक्ष्णोः नेत्रयोः पारणां पर्याप्तिं नेत्रयोस्तद्दर्शनेन तृप्तिं करवाणि अहमित्यर्थः ॥ ६७ ॥

बाणसृणिपाशकार्मुकपाणिममुं कमपि कामपीठगतम् ।
एणधरकोणचूडं शोणिमपरिपाकभेदमाकलये ॥ ६८ ॥

अन्वयः ॥ बाणसृणिपाशकार्मुकपाणिममुं कमपि कामपीठगतं एणधरकोणचूडं शोणिमपरिपाकभेदमाकलय इत्यन्वयः ॥ ६८ ॥

टीका ॥ बाणाश्च सृणिरंकुशश्च पाशश्च कार्मुकं धनुश्च एषां समाहारः बाणसृणिपाशकार्मुकं तत् पाणिषु यस्य स तथोक्तस्तं अमुं कमपि अनिर्देश्यानुभावं कामपीठगतं कामरूपपीठे प्राप्तम् । यद्वा कामेश्वरः स एव आधारत्वेन पीठं तस्मिन् गतं कामेश्वराङ्कोपगतमित्यर्थः। एणो मृगस्तं धरत एकदेश इति तथोक्तश्चन्द्रस्तस्य कोणः खण्डश्चूडे यस्य स तं शोणिम्नः परिपाकः अतिशयः तस्य भेदं श्रीमतीरूपं आकलये आश्रय इत्यर्थः ॥ ६८ ॥

किं वा फलति ममान्यैर्बिम्बाधरचुम्बिमन्दहासमुखी ।
संबाधकरी तमसामम्बा जागर्ति मनसि कामाक्षी ॥ ६९ ॥

अन्वयः ॥ बिम्बाधरचुम्बिमन्दहासमुखी तमसां संबाधकरी अम्बा कामाक्षी मनसि जागर्ति अतोऽन्यैर्मम किं फलति न किमपीत्यन्वयः ॥ ६९ ॥

टीका ॥ बिम्बाधरं चुम्बतीति बिम्बाधरचुम्बी अदन्तदर्शी किंचिद्दन्तदर्शी वा स चासौ मन्दहासो मुखे यस्याः सा तथोक्ता तमसामज्ञानानां नरकाणां वा संबाधकरी अम्बा कामाक्षी मम मनसि जागर्ति प्रकाशते कामदुघा कल्पतरुचिन्तामणिपादारविन्दा भोगमोक्षकरी करुणारससागरा एषैव हृदिस्था यद्यदीप्सितं तत्सर्वं साधयति अतोऽन्यैर्ब्रह्मादिभिर्भोगमोक्षप्रदैरुपायैश्च मम किं फलति न किमपीत्यर्थः ॥ ६९ ॥

मञ्चे सदा शिवमये परशिवमयपौष्पपर्यङ्के ॥

अधिचक्रमध्यमास्ते कामाक्षी नाम किमपि मम भाग्यम् ॥७०॥

अन्वयः ॥ सदा शिवमये मञ्चे परशिवमयपौष्पपर्यङ्के अधिचक्रमध्यं कामाक्षी नाम किमपि मम भाग्यमास्ते इत्यन्वयः ॥ ७० ॥

टीका ॥ विश्वस्मिन् कृत्यकारिपञ्चदेवमध्ये अनुग्रहकर्त्ता सदाशिवोस्ति तन्मये मञ्चे परशिवः साक्षात्कामेश्वरस्तन्मये पुष्पानामयं पौष्पस्तद्रूपे पर्यङ्के. अधिचक्रमध्यं चक्रस्याधीत्यधिचक्रं अधिचक्रस्य मध्ये इत्यधिचक्रमध्यं श्रीचक्रमध्योपरीत्यर्थः । कामाक्षी नाम यस्य तत्कामाक्षीनाम किमप्यतिश्रेष्ठं अनिर्वचनीयं वा महामहिमशालि मम भाग्यमास्ते तिष्ठतीत्यर्थः । जागर्त्तीतिभावः ॥ ७० ॥

लक्ष्योस्मि कामपीठीलासिकया घनकृपाम्बुराशिकया ।

श्रुतियुवतिकुन्तलीमणिमालिकया तुहिनशैलबालिकया ॥ ७१ ॥

अन्वयः ॥ कामपीठीलासिकया घनकृपाम्बुराशिकया श्रुतियुवतिकुन्तलीमणिमालिकया तुहिनशैलबालिकया लक्ष्योस्मीत्यन्वयः । अहमिति शेषः ॥ ७१ ॥

टीका ॥ कामपीठीं लासयते या सा कामपीठीलासिका तया घना बह्वी कृपा सैवाम्बूनि तेषां राशिः पुञ्जो यस्यां सा तया घनकृपाम्बूनां राशिकयेति वा समासः । घनकृपासमुद्रयेत्यर्थः । श्रुतयश्च ता युवतयश्च श्रुतियुवतयस्तासां कुन्तल्यो मूर्द्धजाः केशपाशास्तत्संबन्धिनी मणिमालिका तया श्रुतिशिरोभूषणरूपया उपनिषदुपरिचरचरणारविन्दयेत्यर्थः । " श्रुतीनां मूर्द्धानो दधति तव यौ शेखरतया ममाप्येतौ मातः शिरसि दयया धेहि चरणौ " इति श्रीमद्भगवत्पूज्यपादोक्तेः । तुहिनस्य हिमस्य तुहिनरूपो वा शैलःपर्वतः तुहिनशैलस्तस्य बालिका कन्यका तया लक्ष्योस्मि अहं दीनः संसारतापितश्चातिदुःखी, अतस्ताहृङ्महिमशालिन्या केवलकृपया द्रष्टुं योग्योस्मीत्यर्थः । तेन गतदुःखप्राप्तानन्दो झटित्येव भविष्यामीतिभावः ॥ ७१ ॥

लीये पुरहरजाये माये तव तरुणपल्लवच्छाये ।

चरणे चन्द्राभरणे काञ्चीशरणे नतार्तिसंहरणे ॥ ७२ ॥

अन्वयः ॥ हे पुरहरजाये ! हे माये ! हे चंद्राभरणे ! हे काञ्चीशरणे ! हे नतार्त्तिसंहरणे ! तव तरुणपल्लवच्छाये चरणेऽहं लीये इत्यन्वयः । यद्वा हे पुरहरजाये ! हे माये ! द्वे पदे संबोधनांते, अन्यानि सर्वाणि चरणे इत्यस्य पदस्य विशेषणानि सप्तम्येकवचनान्तानि तरुणपल्लवच्छाये ! इतीदं पदं संबोधनान्तं वा कार्यम् ॥ ७२ ॥

टीका ॥ हे पुरहरस्य शिवस्य जाये हे शिवपत्नि ! हे माये ! अनेकरूपिणि ! हे मान्ये ! वा हे चन्द्राभरणे ! चन्द्र एवाभरणं यस्याः सा संबुद्धौ तथोक्ते । यद्वा चरणे इत्यस्य

सप्तम्येकवचनस्य चन्द्राभरणे इति वा विशेषणम् । उपमेयस्य ग्रहणादुपमानग्रहणम् । नखानां चन्द्रेण सादृश्यात् चन्द्राः नखाः आभरणत्वेन यस्य स तथोक्तस्तस्मिन् चरणे काञ्च्यां शरणं मन्दिरं यस्याः सा संबुद्धौ हे तथाविधे ! काञ्चीपुर्याः शरणे वा । हे काञ्चीपुरीस्थानां जीवानां आश्रये इत्यर्थः । नतानामार्त्तिः पीडा तां संहरतीति तथोक्ता संबुद्धौ तथोक्ते ! तरुण-पल्लवस्य अतिनूतनपत्रस्यच्छाया कांतिरिवच्छाया यस्य स तथाविधस्तस्मिन् तव चरणे जातित्वादेकवचनम् । लीयेऽहं लीनो भवामीत्यर्थः ॥ ७२ ॥

मूर्तिमयि मुक्तिबीजे ! मूर्ध्नि स्तबकितचकोरसाम्राज्ये ।
मोदितकम्पाकूलं मुहुर्मुहुर्मुमुदिषाऽस्माकम् ॥ ७३ ॥

अन्वयः ॥ मूर्तिमयि ! मुक्तिबीजे ! मूर्ध्नि स्तबकितचकोरसाम्राज्ये ! मोदितकम्पाकूलं मुहुर्मुहुरस्माकं मुमुदिषेत्यन्वयः ॥ ७३ ॥

टीका ॥ मूर्तिमयि ! आकारमात्रमयि ! यद्वा शिलादीनां शिल्प्यादिभिः विरचिताः शास्त्रोक्तविधिना प्रतिष्ठापिता मूर्त्तयस्तन्मयि । हे मुक्तिबीजे ! मुक्तिकारणे ! त्वत्तो मुक्तिर्भवतीत्यर्थः । मूर्ध्नि मस्तके स्तबकितं स्तबक इवाचरितं चकोराणां साम्राज्यं चन्द्रो यया सा हे तादृशे ! मोदितं हर्षितं कम्पायाः नद्याः कूलं तटं यया सा तथाविधे ! मुहुर्मुहुः पुनः पुनरस्माकं मनसि मुमुदिषा हर्षितुमिच्छाऽस्तीत्यर्थः । तां त्वं पूरयेति भावः ॥ ७३ ॥

वेदमयीं नादमयीं बिन्दुमयीं परपदोद्यदिन्दुमयीम् ।
मन्त्रमयीं तन्त्रमयीं प्रकृतिमयीं नौमि विश्वविकृतिमयीम् ॥७४॥

अन्वयः ॥ वेदमयीमित्यादिसर्वाणि द्वितीयैकवचनान्तानि पदानि नौमीत्यन्वयः ॥ ७४ ॥

टीका ॥ वेदमयीं वैखरीमयीं सर्वजगद्व्यवहारमयीमित्यर्थः । नादमयीं ध्वनिमयीं बिन्दु-मयीं शून्यमयीमनुस्वारमयीं वा । " त्रिकोणरूपिणी शक्तिर्बिन्दुरूपी परः शिवः " इत्युक्तत्वात् श्रीचक्रगतबिन्दुरूपपरब्रह्ममयीमित्यर्थः । पद्यत इति पदं परं च तत्पदं च परपदं तस्मिन् सर्वेभ्यः परे पदे ब्रह्मरन्ध्रे । यद्वा परपदमेवोद्यंश्चासाविन्दुश्च उद्यदिन्दुः स्वच्छशीतलप्रकाशरूपपरशिवस्तन्मयीं, मननात् पुनः पुनः परिशीलनात्त्रायन्ते रक्षन्ते इति मन्त्राः त्र्यक्षरपञ्चदशाक्षरषोडशाक्षरैकाक्षराद्यास्तन्मयीं, तन्त्रमयीं तन्त्राणि चतुःषष्टिसंख्याकानि रुद्रयामलादीनि अपरिमितानि वा तन्मयीं क्रियामयीं वा प्रकृतिमयीं मूलप्रकृतिं तत्त्वमयीं वा मन्त्राणां प्रकृतिः स्वरूपत्वेनावस्थानं तन्मयीम् । यद्वा सर्वेषां प्रकृतिः स्वभावः स्वरूपस्थितिरिति यावत् तन्मयीं, विश्वरूपा विकृतिस्तथोक्ता तन्मयीं नौम्यहमित्यर्थः ॥ ७४ ॥

पुरमथनपुण्यकोटी पुञ्जितकविलोकसूक्तिरसधाटी ।
मनसि मम कामकोटी विहरतु करुणाविपाकपरिपाटी ॥७५॥

अन्वयः ॥ सर्वे प्रथमैकवचनान्ताः शब्दाः तद्वाच्या देवता मम मनसि विहरत्वित्यन्वयः ॥ ७५ ॥

टीका ॥ पुरमथनस्य शिवस्य पुण्यानां कोटी कोटीत्युपलक्षणम् । शिवस्य अपरिमितपुण्यफलरूपेत्यर्थः । शिवस्य पुण्यानां कोटी कोटीसंख्यारूपा वा । पुञ्जो जात एषां ते पुञ्जिताः ते च ते कवयश्च पुञ्जितकवयस्ते च ते लोकाश्च पुञ्जितकविलोकास्तेषां याः सूक्तयस्तासां यो रसः माधुर्यादिरूप आनन्दो वा तस्य घाटी परिपाटी यया सा । यद्वा पुञ्जितकविलोकानां सूक्तेरसपरिपाटी साक्षाद्रसरीतिरूपेत्यर्थः । कामानां कार्याणां कोट्यः प्राप्यन्ते यया सा शिवं जेतुं कामानां कोट्यः कोटीसंख्याकाः कामाः यस्याः सा । यद्वा लावण्ये कामस्य कोटी कामकोटी कोटीसंख्यात्मिका वा । करुणाया यो विपाकः प्रसादरूपं फलं तस्य परिपाटी परंपरा । करुणाविपाकस्य परिपाटी यस्याः सकाशात् वा । मम मनसि विहरत्वित्यर्थः ॥ ७५ ॥

कुटिलं चटुलं पृथुलं मृदुलं कचनयनजघनचरणेषु ।
अवलोकितमवलम्बनमधिकम्पातटममेयमस्माभिः ॥ ७६ ॥

अन्वयः ॥ कचनयनजघनचरणेषु यथाक्रमेण कुटिलं चटुलं पृथुलं मृदुलं । अमेयमवलम्बनं अधिकम्पातटं अस्माभिरवलोकितमित्यन्वयः ॥ ७६ ॥

टीका ॥ कचाश्च नयने च जघने च चरणौ च कचनयनजघनचरणास्तेषु अनुक्रमेण कचेषु कुटिलं वक्रं नयनयोश्चटुलं चपलं जघने श्रोणौ पृथुलं स्थविष्ठं चरणयोर्मृदुलं कोमलं अमेयं मातुमयोग्यमपरिमितमित्यर्थः । ईदृशमवलम्बनमाश्रयं कम्पातटे अस्माभिः अवलोकितमित्यर्थः ॥ ७६ ॥

प्रत्यङ्मुख्या दृष्ट्या प्रसाददीपाङ्कुरेण कामाक्ष्याः ।
पश्यामि निस्तुलमहः पचेलिमं किमपि परशिवोल्लासम् ॥ ७७ ॥

अन्वयः ॥ कामाक्ष्याः प्रसाददीपाङ्कुरेण प्रत्यङ्मुख्या दृष्ट्या पचेलिमं किमपि परशिवोल्लासं निस्तुलमहः पश्यामीत्यन्वयः ॥ ७७ ॥

टीका ॥ कामाक्ष्याः प्रसादश्चासौ दीपश्च प्रसाददीपस्तस्य अङ्कुरोऽभिनवोद्गमस्तेन प्रत्यञ्चति गच्छतीति प्रत्यक् सा चासौ मुखी च तथाविधा तया अन्तर्मुख्येत्यर्थः । दृष्ट्या दृशा पचेलिमं बहुलं किमप्यकथनीयं श्रेष्ठं वा परशिवस्योल्लासं परमेश्वरविलासं निर्गता तुला यस्मात् तत् तथोक्तं च तन्महस्तेजश्च निस्तुलमहस्तदहं पश्यामि । कामाक्ष्याः प्रसाददीपाङ्कु-

रेण सूक्ष्मेण प्रत्यङ्मुख्या दृष्ट्या च यद्बहुलं परशिवोल्लासस्य निस्तुलमहसो दर्शनवर्णनेन महदाधिक्यं तेन प्रसाददीपाङ्कुरस्य सूचितं महदाश्चर्यं चेत्यलम् ॥ ७७ ॥

विद्ये विधातृविषये कात्यायनि कालि कामकोटि कले ।
भारति भैरवि भद्रे शाकिनि शांभवि शिवे स्तुवे भवतीम् ॥ ७८ ॥

अन्वयः ॥ सर्वसंबुद्ध्येकवचनान्तपदानि शिवे इति पदविशेषणानि । भवतीं स्तुवे इत्यन्वयः । अहमिति शेषः ॥ ७८ ॥

टीका ॥ विद्ये क्रियामात्ररूपे ! "विद्याः समस्तास्तव देवि भेदाः" इति मार्कण्डेयात् ज्ञानरूपे च । "न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते । मोक्षैकहेतुविद्या च श्रीविद्या नात्र संशयः" इति ब्रह्माण्डपुराणस्यश्रीहयग्रीववाक्यप्रामाण्यात् श्रीविद्यारूपे च । हे विधातृविषये ! विधाता विषयो यस्याः सा, विधातुर्वा ब्रह्माणीरूपधारणत्वात् विषया तस्याः संबुद्धौ हे तथाविधे ! कतस्य ऋषेरपत्यं स्त्री कात्यायनी तत्संबुद्धौ हे तथोक्ते ! हे कालि ! श्यामवर्णे काल‌रूपिणि वा । महाकालशक्ते वा । हे कामकोटि ! कलयतीति कला सम्बुद्धौ हे कले ! परशिवस्यैश्वर्यरूपे वा चन्द्रकलारूपे वा षोडशीसादाख्यकले वा । हे भारति सरस्वति ! भरणाद्भैरवः भयहरणाद्भैरवः भीषणत्वाद्भैरवस्तच्छक्तिरूपिणि भद्रे कल्याणि शाकिनि मूलाधारस्थचतुर्दलपङ्कजासना पञ्चमुखी स्वर्णाभा देवता तद्रूपिणि । "मुद्गौदनासक्तचित्ता शाकिन्यम्बास्वरूपिणि" इतिब्रह्माण्डात् । शांभवि शंभोरियं शक्तिः शांभवी संबुद्धौ हे शांभवि ! शांभवीमुद्रारूपिणी वा । भवतीमेव सर्वरूपिणीं त्वां स्तुवे स्तौम्यहमित्यर्थः ॥ ७८ ॥

मालिनि महेशचारिणि काञ्चीखेलिनि विपक्षहालिनि ते ।
शूलिनि विद्रुमशालिनि सुरजनपालिनि कपालिनि नमोस्तु ॥ ७९ ॥

अन्वयः ॥ सर्वे शब्दाः संबुद्ध्यन्ताः ते तुभ्यं नमोस्त्वित्यन्वयः । ममेति शेषः ॥ ७९ ॥

टीका ॥ रत्नमालाः सन्त्यस्यामिति हे मालिनि ! अमरत्वाधिष्ठाता साक्षाच्छिवांशः सिद्धयोगी श्रीजलंधरनाथस्तस्य माता मालिनी देवी इति गोरक्षसंहितायां प्रतिपादनात् तद्रूपे वा नामैकदेशग्रहणान्नामग्रहणम् "यथा भीमो भीमसेनः" इति परिभाषया हे भगमालिनि ! हे ज्वालामालिनि वा चतुःषष्टियोगिन्यन्तर्गतमालिनीयोगिनीरूपे वा "श्रीमन्मालिनि मन्त्रराजसहितं वन्दे गुरोर्मण्डलम्" इति श्लोकस्य व्याख्याने मातृकाया मालिनीनाम्ना कथनात् हे मातृकारूपे वा । महेशेन सह चरतीति तादृशा संबोधने तथाविधे ! काञ्च्यां खेलनं यस्याः सा संबोधने हे तथाविधे ! विपक्षेषु हल एव हालः आयुधत्वेनास्या अस्तीति तथाविधे ! शूलं त्रिशूलं अरिमारणार्थं भक्तत्राणार्थं च अस्या अस्तीति तथाविधे ! विद्रुम इव कान्त्या शालते शोभते

तच्छीला हे तथाविधे ! सुरजनानां पालनमस्याः हे तादृशे कृपालिनि ते तुभ्यं नमोस्तु भव-त्वित्यर्थः ॥ ७९ ॥

देशिक इति किं शङ्के तत्तादृक् तव तरुणिमोन्मेषः ।
कामाक्षि शूलपाणेः कामागमतन्त्रयज्ञदीक्षायाम् ॥ ८० ॥

अन्वयः ॥ शूलपाणेः कामागमतन्त्रयज्ञदीक्षायां तत् तादृक् तव तरुणिमोन्मेषः तत्तस्मात् देशिकः किमित्यहं शङ्के इत्यन्वयः ॥ ८० ॥

टीका ॥ शूलं त्रिशूलं पाणौ करे यस्य स तस्य शिवस्य कामागमः मदनागमनं तस्य तन्त्रं क्रिया तेनोत्पाद्यमानो यो यज्ञः । यद्वा कामस्यागमाः शास्त्राणि तान्येव तन्त्राणि तेषु तैरुक्तो वा यज्ञः ऐक्यसंपादकः सामरस्यरूपस्तस्य दीक्षायाम् " दीयते परमं ज्ञानं क्षीयन्ते चास्य चापदः । तेन दीक्षेति संप्रोक्ता भोगमोक्षकरी मता " इति श्लोकोक्तलक्षणायां तादृक् तादृशो यथोक्तलक्षणस्तव तरुणिम्न उन्मेषः उल्लसनं तत्तस्मात् दिशति ज्ञानं मन्त्रं वेति देशिकः श्रीगुरुर्यज्ञकारयिता किं प्रश्ने अहं शङ्के तर्कयामीत्यर्थः ॥ ८० ॥

वेतण्डकुम्भडम्बरवैतण्डिककुचभरार्त्तमध्याय ।
कुङ्कुमरुचे नमस्यां शंकरनयनामृताय रचयामः ॥ ८१ ॥

अन्वयः ॥ वेतण्डकुम्भडम्बरवैतण्डिककुचभरार्त्तमध्याय कुङ्कुमरुचे शंकरनयनामृताय नमस्यां रचयाम इत्यन्वयः ॥ ८१ ॥

टीका ॥ वेतण्डाः मदमत्ताः हस्तिनस्तेषां कपोलरूपाः कुम्भास्तेषां यो डम्बर ऐश्वर्यं तस्य वैतण्डिकौ विवादकारिणौ प्रतिद्वंद्विनौ च तौ कुचौ च तथोक्तौ तयोर्भरो भारस्तेनार्त्तं पीडितं मध्यं कटिदेशो यस्य तस्मै कुङ्कुममिव रुग् रुचिर्यस्य तस्मै शंकरस्य नयनानि शंकरनयनानि तेषाममृतं प्रियत्वेनाह्लादकरं संतुष्टिदायकमिष्टं च तस्मै नमस्यां नमः क्रियां रचयामः कुर्म इत्यर्थः ॥ ८१ ॥

अधिकाञ्चितमणिकाञ्चन काञ्चीमधिकाञ्चिकाञ्चिदद्राक्षम् ।
अवनतजनानुकम्पामनुकम्पाकूलमस्मदनुकूलाम् ॥ ८२ ॥

अन्वयः ॥ अधिकाञ्चीतमणिकाञ्चनकाञ्ची अवनतजनानुकम्पां कांचिदस्मदनुकूलां अधिकाञ्चि अनुकम्पाकूलं अद्राक्षमित्यन्वयः ॥ ८२ ॥

टीका ॥ अधिकाऽत्यञ्चिता पूजिता शोभिता वा मणिकाञ्चनस्य काञ्ची कटिभूषणं यस्याः सा तां अवनतजनानामुपर्यनुकम्पा यस्याः सा तां कांचिदवाच्यमहिम्नीं अस्मदनुकूलां अस्मत्प्रस-

न्मामस्मदुपरि दयाकरामित्यर्थः । काञ्च्यामधीत्यधिकाञ्चि कम्पाकूलस्यानु इत्यनुकूलं कम्पाकूल-समीपे अद्राक्षं मया तत्कृपावशाद्दर्शनं कृतमित्यर्थः ॥ ८२ ॥

परिचितकम्पातीरं पर्वतराजन्यसुकृतसन्नाहम् ।
परगुरुकृपया वीक्षे परम शिवोत्सङ्गमङ्गलाभरणम् ॥ ८३ ॥

अन्वयः ॥ परिचितकम्पातीरं पर्वतराजन्यसुकृतसन्नाहं, परमशिवोत्सङ्गमङ्गलाभरणं परम-गुरुकृपया वीक्षे। अहमिति शेषः ॥ ८३ ॥

टीका ॥ परिचितं व्याप्तं शोभितं श्लाघितं वा कम्पातीरं स्वमहिम्ना येन तत् पर्वतराजन्यस्य हिमगिरेः यानि सुकृतानि तेषां सन्नाहं कवचं रक्षकमित्यर्थः । परमश्चासौ शिवश्च परमशिवः कामेश्वरस्तस्य उत्सङ्गः अङ्कस्तस्य मङ्गलरूपमाभरणमलंकारः परश्चासौगुरुश्च परगुरुः परमेश्वर-रूपगुरुः श्रेष्ठगुरुर्वा शास्त्रोक्तलक्षणः सिद्धविद्यस्तस्य कृपया वीक्षे निरीक्षे अहमित्यर्थः ॥ ८४ ॥

दग्धमदनस्य शंभोः प्रथीयसीं ब्रह्मचर्यवैदग्धीम् ।
तव देवि चतुरिमश्रीस्तरुणिमपाको न चक्षमे मातः ॥ ८४ ॥

अन्वयः ॥ दग्धमदनस्य शंभोः प्रथीयसीं ब्रह्मचर्यवैदग्धीं हे देवि ! हे मातः ! तव चतुरि-मश्रीस्तरुणिमपाको न चक्षमे इत्यन्वयः ॥ ८४ ॥

टीका ॥ दग्धो मदनो येन स तादृशस्तस्य शंभोः प्रथीयसीमतिपृथुलां ब्रह्मचर्यस्य विषय-त्यागस्य ब्रह्मचर्ये वा वैदग्धीं चातुरीं हे देवि ! द्योतनशीले ! हे अत्यलौकिकरूपवति मातः ! तव चतुरिमश्रीश्चातुर्यस्य शोभा । यद्वा चतुरिमैव श्रीः संपत् । यद्वा चातुर्यस्य शोभा यस्मिन् स तरुणिम्नः पाकः प्राबल्यं पूर्णता वा न चक्षमे सोढुं समर्था । सा च स च समर्थो न बभूवेत्यर्थः । मुख्यतया तु चतुरिम्णः शोभा यस्मिन्निति तरुणिमपाकस्यैव विशेषणं समी-चीनमित्यलम् । अर्थाच्छ्रीशिवस्य ब्रह्मचर्यं तव चतुरिमश्रीस्तरुणिमपाकः खण्डितं चकारेति-भावः ॥ ८४ ॥

मदजलतमालपत्रा वसनितपत्रा कराहतखनित्रा ।
विहरति पुलिन्दयोषा गुञ्जाभूषा फणीन्द्रकृतवेषा ॥ ८५ ॥

अन्वयः ॥ सर्वाणि प्रथमैकवचनान्तपदानि पुलिन्दयोषापदस्य विशेषणानि । विहरतीति क्रियापदम् ॥ ८५ ॥

टीका ॥ मदजलं हस्तिमदजलं तस्य तमालपत्रं तमालपत्राकृति तिलकविशेषं यस्याः सा वसनानि जातानि वसनितानि परिधानयोग्यानि भूर्जादिपत्राणि यस्याः सा आयुधत्वेन करे आहृतं खनित्रं यया सा पुलिन्दस्य किरातरूपस्य शिवस्य योषा स्त्री गुञ्जाभूषा

गुञ्जानां रक्तिकानां भूषा भूषणानि यस्याः सा फणीन्द्राणां शेषवासुक्यादिनागश्रेष्ठानां कृतो वेषः कङ्कणादिवेषरचना यया सा ईदृशीं कामाक्षी रूपान्तरेण शबरीरूपेण विहरतीत्यर्थः ॥ ८६ ॥

अङ्के शुकिनी गीते कौतुकिनी परिसरे च गायकिनी ।
जयसि सविधेऽम्ब भैरवमण्डलिनी श्रवसि शङ्खकुण्डलिनी ॥ ८६ ॥

अन्वयः ॥ हे अम्ब ! अङ्के शुकिनी गीते कौतुकिनी परि रे च गायकिनी श्रवसि शङ्खकुण्डलिनी सविधे भैरवमण्डलिनी त्वं जयसीत्यन्वयः ॥ ८६ ॥

टीका ॥ अङ्के उत्सङ्गे शुकोऽस्या अस्तीति तथा, गीते गाने कौतुकं विनोदो हर्षोऽस्या अस्तीति तथा, परिसरे कम्पानदीसमीपे काञ्चीपुरीप्रान्तभूमौ गायकिनी वह्वचः संगीतदेवता अप्सर आदयो वा सन्ति अस्याः सा, सविधे समीपे सह विध्यतीति सविधः सविधाने वा भैरवानां मण्डलं अस्या अस्तीति तथा, श्रवसि जात्यैकवचनम् । कर्णयोः शङ्खकुण्डले अस्याः आस्त इति तथा हे अम्ब ! त्वं ईदृग्रूपिणी मातङ्गी जयसि सर्वोत्कर्षेण वर्तसे इत्यर्थः ॥८६॥

प्रणतजनताऽपवर्गा कृतरणसर्गा ससिंहसंसर्गा ।
कामाक्षि मुदितभर्गा हतरिपुवर्गा त्वमेव सा दुर्गा ॥ ८७ ॥

अन्वयः ॥ हे कामाक्षि ! प्रणतजनताऽपवर्गा कृतरणसर्गा ससिंहसंसर्गा मुदितभर्गा हतरिपुवर्गा सा दुर्गा त्वमेव ॥ ८७ ॥

टीका ॥ प्रकर्षेण नतजनसमूहानामपवर्गो मुक्तिर्यस्याः सकाशात् यया वा सा, कृतो रणस्य युद्धस्य सर्गो रचनाप्रकारो यया सा, सिंहस्य सर्गः संयोगो विहारार्थे यस्याः सा, मुदितो भर्गः शिवो यया सा, हतो रिपुवर्गः शत्रुसमूहः स्वस्य च भक्तानां वा यया सा हे कामाक्षि ! सा दुर्गा त्वमेवेत्यर्थः ॥ ८७ ॥

श्रवणचलद्वेतण्डा समरोद्दण्डा धृतासुरशिखण्डा ।
देवि कलितान्त्रखण्डा धृतनरमुण्डा त्वमेव चामुण्डा ॥ ८८ ॥

अन्वयः ॥ श्रवणचलद्वेतण्डा समरोद्दण्डा धृतासुरशिखण्डा कलितान्त्रखण्डा धृतनरमुण्डा हे देवि ! ईदृशी चामुण्डा त्वमेवेत्यन्वयः ॥ ८८ ॥

टीका ॥ श्रवणयोश्चलन्तौ वेतण्डौ मत्तहस्तिनौ यस्याः सा, समरे उद्दण्डानि प्रगल्भानि धृतान्यसुराणां शिखण्डानि मस्तकानि यया सा, कलितान्यात्तानि धृतान्यसुराणामन्त्रखण्डानि यया सा धृतं नरमुण्डं यया सा, हे देवि ! कामाक्षि ! त्वमेवैवंविधा चामुण्डेत्यर्थः । ८८ ॥

उर्वीधरेन्द्रकन्ये दर्वीभरितेन भक्तपूरेण ॥
गुर्वीमकिंचनार्ति खर्वीकुरुषे त्वमेव कामाक्षि ॥ ८९ ॥

अन्वयः ॥ हे उर्वीधरेन्द्रकन्ये ! हे कामाक्षि ! दर्वीभरितेन भक्तपूरेण गुर्वीमकिंचनार्ति त्वं खर्वीकुरुष इत्यन्वयः ॥ ८९ ॥

टीका ॥ उर्वीं पृथ्वीं धरन्तीति उर्वीधराः पर्वतास्तेषामिन्द्रस्तथोक्तस्तस्य हे कन्ये ! हे कामाक्षि ! दर्वीसिद्धान्नोद्धरणपात्रविशेषस्तया भरितेन पूरितेन भक्तानां भर्जितानामोदनानां पूरः अतिशयो भक्तपूरणं भक्तानां पूरणं अलं तृप्तिर्येन स भक्तपूरणस्तेन दर्वीभरितेन दर्व्या भरितं पूरितं दर्वीभरितं तेन दर्वीभरितेन एकदर्वीगतान्नेन अलंतृप्तिप्रदेन गुर्वीं महतीं न विद्यते किंचन वस्तुमात्रमन्नादिवस्तु येषां ते अकिंचनास्तेषामार्तिं पीडाम् । यद्वा ममताशून्याः ज्ञानिनो वा । यद्वा स्वीयत्वेन नास्ति किंचन येषां ते भक्तशिरोमणयः सर्वं श्रीत्रिपुराया मन्यमानास्तेषामार्तिः पीडा जन्ममरणरूपा तां खर्वीकुरुषे नाशयसीत्यर्थः ॥ अर्थादन्नपूर्णारूपिणी भोगदात्री मोक्षदायिनी च त्वमेव भक्तक्षुधां सर्वविधां पीडां च निवारयसीत्यर्थः ॥ ८९ ॥

ताडितरिपुपरिपीडनभयहरणनिपुणहलमुसला ।
क्रोडपतिभीषणमुखी क्रीडसि जगति त्वमेव कामाक्षि ॥ ९० ॥

अन्वयः ॥ हे कामाक्षि ! त्वमेव ताडितरिपुपरिपीडनभयहरणनिपुणहलमुसला क्रोडपतिभीषणमुखी जगति क्रीडसीत्यन्वयः ॥ ९० ॥

टीका ॥ प्रथमतस्ताडिता ये रिपवस्तेभ्यो यत्परिपीडनं तस्य यद्भयं तद्धरणे दूरीकरणे निपुणे हलमुसले आयुधत्वेन हस्तयोः यस्याः सा तथोक्ता । यद्वा ताडितं नाशितं रिपुपरिपीडनं याभ्यां ते तथोक्ते च ते भयहरणनिपुणे च ताडितरिपुपरिपीडनभयहरणनिपुणे ईदृशे हलमुसले यस्याः सा क्रोडपतेर्भीषणमुखमिव मुखं यस्याः सा तथाविधा जगति विश्वस्मिन् वाराहीरूपेण दण्डनाथारूपेण कामाक्षि ! त्वमेव क्रीडां करोषीत्यर्थः ॥ ९० ॥

स्मरमथनवरणलोला मन्मथहेलाविलासमणिशाला ।
कनकरुचिचौर्यशीला त्वमम्ब बाला कराब्जधृतमाला ॥ ९१ ॥

अन्वयः ॥ हे अम्ब ! अन्यसर्वपदानि प्रथमैकवचनान्तानि बालापदविशेषणानि त्वमित्यन्वयः । असीति शेषः ॥ ९१ ॥

टीका ॥ स्मरं मथ्नातीति स्मरमथनः शिवः तस्य वरणे संवरणे लोला चपला मन्मथस्य हेला मदनस्य केलिस्तस्या यो विलासस्तस्य चिन्तामणिमयः अर्थात् यो कामेश्वरमनसि कामकेलिविलास उत्पद्यते तस्य तस्य सर्वस्य पूरयित्री कामाक्षी भवतीति । एकापि चिन्तामणि-

हस्तगता सर्वं मनोरथं साधयति किमु वक्तव्यं तादृशमणीनां शालेत्यलम् । स्वर्णस्य या रुचिः कनकरुचिस्तस्याश्चोरस्येदं कर्म चौर्यं तस्मिन् तदेव वा शीलं स्वभावो यस्याः सा कराब्जे हस्तकमले धृता माला रुद्राक्षस्य स्फटिकस्य वा यया सा तथाविधा हे अम्ब ! कामाक्षि ! त्वमेव साक्षात् बालाऽसि न तु वाराह्यादिस्वरूपवत्पृथक्रूपिणी । अन्यानि रूपाणि तु तव विभूतयोऽतश्च तासां रूपेणापि त्वमेव क्रीडसि । तदुक्तं मार्कण्डेयपुराणे श्रीमत्याश्रीमुखेनवाक्यम् । " अहं विभूत्या बहुभिरिहरूपैर्यदास्थिता " इत्यादि । बाला त्ववस्थाभेदे त्वमेवासीति भावः ९१

विमलपटी कमलकुटी पुस्तकरुद्राक्षशस्तहस्तपुटी ।
कामाक्षि पक्ष्मलाक्षि कलितविपञ्ची विभासि वैरञ्ची ॥ ९२ ॥

अन्वयः ॥ सर्वाणि पदानि वैरञ्चीतिपदविशेषणानि । हे कामाक्षि ! त्वं ईदृशी विभासीत्यन्वयः ॥ ९२ ॥

टीका ॥ विमलाः श्वेता नित्यं नवीनाः पटा वस्त्राणि यस्याः सा, कमलमेव कुटी वासस्थानं यस्याः सा, पुस्तकरुद्राक्षैः शस्ता प्रशस्ता हस्तपुटी यस्याः सा, पक्ष्मलान्यक्षीणि यस्याः सा, कलिता धृता विपञ्ची वीणा यया हे कामाक्षि ! ईदृशी त्वं विरञ्चस्येयं शक्तिर्वैरञ्ची विभासि सरस्वतीरूपा प्रकाशसे त्वं ब्रह्माणीरूपधारिणीत्यर्थः ॥ ९२ ॥

कुङ्कुमरुचिपिङ्गमसृक्पङ्किलमुण्डालिमण्डितं मातः ।
जयति तव रूपभेदं जपवटिपुस्तकवराऽभयाब्जकरम् ॥ ९३ ॥

अन्वयः ॥ तव रूपभेदमिति नपुंसकलिङ्गस्य प्रथमैकवचनान्तस्यान्यानि विशेषणानि हे मातः ! संबोधनं जयतीत्यन्वयः ॥ ९३ ॥

टीका ॥ कुङ्कुमस्य काश्मीरस्य रुचिरिव पिङ्गं पीतरक्तं कुङ्कुमरुचिपिङ्गमसृक् रुधिरं तेन पङ्किलानि च तानि मुण्डानि च तथोक्तानि तेषां या आलिर्माला तया मण्डितमलंकृतं जपवटिश्च पुस्तकं च वरश्चाभयं च तथोक्तानि तानि अब्जरूपकरेषु यस्य तत् हे मातरीदृक् तव रूपभेदो भैरव्याख्यो जयतीत्यर्थः ॥ ९३ ॥

कनकमणिकलितभूषां कालायसकलहायमानकान्तिजालाम् ।
कामाक्षि शीलये त्वां कपालशूलाभिरामकरकमलाम् ॥ ९४ ॥

अन्वयः ॥ कनकमणिकलितभूषां कालायसकलहायमानकान्तिजालां कपालशूलाभिरामकरकमलां हे कामाक्षि ! त्वामीदृशीं शीलये ध्यायेहमित्यन्वयः ॥ ९४ ॥

टीका ॥ कनकेन युक्ता मणयः कनकमणयस्तैः कलिता व्याप्ता रचिता वा भूषा यस्याः सा तां कालायसेन कृष्णलोहेन कलहायमानं युद्ध्यमानं कान्तेर्जालं समूहो यस्याः सा तां

घनश्यामवर्णामित्यर्थः । कपालशूलाभ्याममिरामे मनोहरे करकमले यस्याः सा तां, हे कामाक्षि ! ईदृग्रूपिणीं त्वां शीलये अहमित्यर्थः । कालायसेत्येकविंशतिमात्रिको द्वितीयः पादः कविसार्वभौमकृतावसंभाव्यो दृश्यते, परं त्वेतत्तत्त्वं आर्याछन्दसि छन्दःशास्त्रविद्भिर्ज्ञायते न जानेहम् । अतश्च कालायसकलहकरकान्तिजालामिति साधुः ॥ ९४ ॥

लोहितिमपुञ्जमध्ये मोहितभुवनं मुदा निरीक्षन्ते ।
वदनं तव कुचयुगलं काञ्चीसीमां च केऽपि जनाः ॥ ९५ ॥

अन्वयः ॥ हे कामाक्षि ! केऽपि जनाः लोहितिमपुञ्जमध्ये तव मोहितभुवनं वदनं कुचयुगलं काञ्चीसीमां च मुदा निरीक्षन्त इत्यन्वयः ॥ ९५ ॥

टीका ॥ हे कामाक्षि ! केऽपि श्रेष्ठजनाः लोहितस्य भावो लोहितिमा तस्य यः पुञ्जस्तस्य मध्ये अरुणतेजोमध्य इत्यर्थः। मोहितानि चतुर्दश भुवनानि येन तत् तथोक्तं तव मुखं कुचयोर्युगं काञ्च्याः सीमां च मुदा हर्षेण निरीक्षन्त इत्यर्थः ॥ ९९ ॥

जलधिद्विगुणितहुतवहदशदिनेशकलाश्विनेयदलैः ।
नलिनैर्महेशि गच्छसि सर्वोत्तमं त्वं करन्ध्रधृतनलिनम् ॥९६॥

अन्वयः ॥ जलधिद्विगुणितहुतवहदशदिनेशकलाश्विनेयदलैर्नलिनैः सर्वोत्तमं करन्ध्रधृतनलिनं प्रति हे महेशि त्वं गच्छसीत्यन्वयः ॥ ९६ ॥

टीका ॥ जलधयश्च ४, द्विगुणिता हुतवहा अग्नयश्च ६, दश च १०, दिनेशा १२ श्च, कला १६ श्च, आश्विनेयौ २ च जलधिद्विगुणितहुतवहदशदिनेशकलाश्विनेयाः तत्संख्याकानि दलानि येषां तानि तथोक्तानि तैर्नलिनैः हे महेशि ! सर्वेभ्यः कमलेभ्य उत्तमं सर्वोत्तमं कस्य मस्तकस्य रन्ध्रे धृतं नलिनं सहस्रदलकमलम् । यद्वा करन्ध्रं ब्रह्मरूपं रन्ध्रं छिद्रं तस्मिन् धृतं नलिनं सहस्रदलकमलं येन स तथोक्तस्तं परमशिवं चिच्चन्द्रमण्डलाकारबिन्दुरूपं कुण्डलिनीरूपेण यासि त्वं गच्छसीत्यर्थः । मूलाधारमणिपूरकस्वाधिष्ठानाहतविशुद्ध्याज्ञाचक्रचतुर्दलषड्दलदशदलद्वादशदलषोडशदलद्विदलकमलैः स्वर्णविद्रुमनीलेन्द्रमणिपिशङ्गधूम्रविद्युद्वर्णैः मूलाधारोत्थिता सुषुम्णांतश्चित्रनाड्यन्तर्गता अष्टात्रिंशत्कलारूपिणी अग्निसूर्यसोमस्वरूपिणी पञ्चाशद्वर्णमयी मूलाक्षररूपिणी साधकस्येष्टदेवतामयी प्रथमप्रयाणे महाप्रकाशशालिनी आनन्दास्पदा प्रतिप्रयाणेऽमृतझरी कुण्डलिनीस्वरूपा त्वं सर्व्वेभ्यो ब्रह्मविष्णुरुद्रेभ्य उत्तमं अधोमुखकरन्ध्रधृतनलिनं ब्रह्मरन्ध्रस्थिताधोमुखसहस्रदलकमलकर्णिकान्तर्गता कथादित्रिरेखात्मकत्रिकोणमध्यवर्तिबिन्दुरूपं चिच्चन्द्रमण्डलाकारं परशिवं प्रति गच्छसि शिवेन सह समरसी भवसीत्यर्थः। " कुलारविन्दादकुलारविन्दे गत्वामृतौघैः परिषिच्यमानाम्। रसारविन्दानि निजारविन्दे पुनः

प्रयान्तीं प्रभजे परेशीम् ॥ १ ॥ " पुनः ॥ " मूलालवालकुहरादुदिता भवानी निर्भिद्य षट्सरसिजानि तडिल्लतेव । भूयोपि तत्र विशसि ध्रुवमण्डलेन्दुं निष्यन्दमानपरमामृतवृष्टिरूपा ॥ २ ॥ प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणे त्वमृतायमानाम् । अन्तःपदव्यामनुसंचरन्तीमानन्दमुद्रामवलोकयामः ॥ ३ ॥ " अस्या इदानीं प्रतिचक्रं ब्रह्मरन्ध्रान्तं शास्त्रोक्तमार्गेण ध्यानपूजारहस्यविदो विरला उत्थापनकारिणः । उपासकास्तु अनन्तपुण्योदयभाजना विरलतमा एव क्वचित्क्वचित्सन्ति नवेत्यलम् । यत्र कुत्रापि एतत्पद्यद्वितीयपादे षोडशमात्राश्चतुर्थे चोनविंशतिः सन्ति तत्कवेर्न दोषः । " सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च सः । वा पदान्ते त्वसौ ग्वक्रो ज्ञेयोन्यो मातृको ऌजुः " इत्युक्तत्वात् ॥ ९ ॥

सत्कृतदेशिकचरणाः सबीजनिर्बीजयोगनिःश्रेण्या ।
अपवर्गसौधवलभीमारोहन्त्यम्बकेऽपि तव कृपया ॥ ९७ ॥

अन्वयः ॥ हे अम्ब ! सबीजनिर्बीजयोगनिःश्रेण्या तव कृपया सत्कृतदेशिकचरणाः केऽपि महान्तः अपवर्गसौधवलभीमारोहन्तीत्यन्वयः ॥ ९७ ॥

टीका ॥ हे अम्ब ! तव कृपया हेतुभूतया सत्कृता आदरपूर्वकपूजिता देशिकानां श्रीगुरूणां चरणा यैस्ते तथाविधाः केऽपि महान्तः सबीजनिर्बीजयोगनिःश्रेण्या सबीजा ध्यानावलम्बिनी निर्बीजा ध्यानरहिता तया उभयरूपया योगनिःश्रेण्या योगश्चित्तवृत्तिनिरोधः जीवात्मपरमात्मनोरैक्यं वा योगः कुण्डलिनीपरशिवयोरैक्यं वा योगः। योगो यमानियमासनप्राणायामप्रत्याहारध्यानधारणासमाधय इत्यष्टाङ्गरूपो वा यया कयापि गुरूक्तयुक्त्या स्वमनोनिरोधलक्षणो वा योगः शिवशक्त्यैक्यसंपादकः सार्द्धत्रिकोटिसंख्याकः शैवशास्त्रे प्रतिपादितः । स तु सर्वः शिवैकसंवेद्यस्तन्मध्येऽष्टाङ्गःयोगस्याष्टमाङ्गःसमाधिः फलरूपः पूर्वोक्तःसबीजनिर्बीजाख्यस्तद्रूपया निःश्रेण्या मुक्तिहर्म्योपरिगमनोपायभूतया, अपवर्गो मुक्तिरेव सौधवलभी हर्म्याली तामारोहन्ति, ते तदुपर्यारूढा भवन्तीत्यर्थः । स्वाराध्यकृपापात्राः तव कृपया लब्धसबीजनिर्बीजयोगसमाधयो मुक्ता भवन्तीति भावः ॥ ९७ ॥

अन्तरपि बहिरपि त्वं जन्तुततेरन्तकान्तकृदहंते ।
चिन्तितसंतानकला संततमपि संतनुष्व महिमानम् ॥ ९८ ॥

अन्वयः ॥ हे जन्तुततेरन्तकान्तकृदहंते ! यद्वा हे जन्तुततेरन्तकान्तकृत् ! हे अंहते ! त्वं संततमपि चिन्तितसंतानकला सती अन्तरपि बहिरपि ते महिमानं संतनुष्वेत्यन्वयः ॥ ९८ ॥

टीका ॥ जन्तूनां जीवानां ततिर्विस्तारस्तस्य योन्तकः कालः तस्याऽप्यन्तकृत् कालकालो मृत्युंजयः परब्रह्म परशिव इत्यर्थः। तस्याऽहमो भावोऽहंता सम्बुद्धौ हे तादृशे ! हे शिवाहंकाररूपिणि ! संततं निरन्तरमपि चिन्तितानां स्वाभीष्टानां संतानं विस्तारं कलयति रचयतीति

तथाविधा । यद्वा चिन्तितस्य स्वात्मस्वरूपस्य विस्तारकला " सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् " इत्याकारिका । यद्वा चिन्तितानामभीष्टानां संताने विस्तारे कला सामार्थ्यं यस्याः सा । यद्वा हे जन्तुततेरन्तकान्तकृत् ! इति भिन्नं पदं संबुद्ध्यन्तं तेन हे जनकाले ! हे अहंते ! इति च भिन्नम् । अहम आत्मनो जीवात्मनः परमात्मनो वा भावोऽहंता । यद्वा अकारादिहकारान्तोऽहंप्रत्याहारस्तस्य अहमो भावोहंता तेन च समस्तमन्त्रतन्त्रवेदशास्त्ररूपा समस्तवैखरीवर्णवाच्यसमस्तविश्वरूपा । वस्तुतस्तु आत्मरूपा संबुद्धौ हे अहंते ! ब्रह्माहमस्मीति त्वं चिन्तिता चासौ संतानकला वर्द्धनसामर्थ्या च तथोक्ता ध्याता प्रसरणशीला इत्यर्थः । सर्वं ब्रह्माकारावभासिकेत्यर्थः । अत एव हे जन्तुततेरन्तकान्तकृत् हे कालकाले हे अहंते आत्मरूपे इति संबोधनम् । त्वं संततं चिन्तिता संतानकला सती अन्तर्मनसि मूलाधारादिब्रह्मरध्रान्तसुषुम्णामध्येपि वा तेजःपुञ्जमहत्त्वं बहिर्जगति अपि महिमानं सर्वं ब्रह्म ब्रह्मैवाहमस्मीत्याकारकं संतनुष्व विस्तारयस्वेत्यर्थः ॥ ९८ ॥

जय जय जगदम्ब शिवे जय जय कामाक्षि जय जयाद्रिसुते
जय जय महेशदयिते जय जय चिद्गगनकौमुदीधारे ॥ ९८ ॥

अन्वयः ॥ हे जगदम्ब हे शिवे त्वं जय २ । हे कामाक्षि ! हे अद्रिसुते ! त्वं जय २ । हे महेशदयिते त्वं जयजय, हे चिद्गगनकौमुदीधारे ! त्वं जय जयेत्यन्वयः ॥ ९९ ॥

टीका ॥ कविः स्वात्मानं कृतकृत्यं मत्वा स्वहर्षमुद्घाटयन् श्रीमतीं हर्षयति । हे जगदम्ब ! जगन्मातः जय जय सर्वोत्कर्षेण वर्त्तस्व । हे शिवे ! कल्याणरूपिणि ! त्वं जय जय । प्रसिद्धमुख्यनाम्ना संबोधयति । हे कामाक्षि ! त्वं जय २ । अहो अनाद्यन्ता सकलमाताऽद्यापि शिवे पत्यौ गिरौ भक्ते चातिप्रेमवत्यतः सतीचरित्रं तदनु कुमारीपार्वतीचरितं स्मारयंश्चावतारत्वेन स्तौति । हे अद्रिसुते ! श्रीगिरिराजेश्वरकन्यके ! त्वं जय २ । अत एव महेशो दयितः प्रिय आत्मैव यस्याः सा महेशस्य श्रीपरमेश्वरैकाम्रनाथकामेश्वरस्यापि दयिते प्रिये देहात्मरूपे वा त्वं जय २ । चिच्चैतन्यमेव निर्लेपत्वादनन्तत्वाद्व्यापकत्वात्पूर्णत्वादाधारत्वादवकाशप्रदानत्वात् गगनमाकाशं प्रकाशरूपाकाशः तस्य तस्मिन्वा । कौमुद्याश्चन्द्रिकाया धारया उत्तरोत्तरप्रवाहरूपे सच्चिदानन्दचन्द्रचन्द्रिके परशिवालम्बिनि परशिवाभिन्ने । " चिदानन्दमयी ज्योत्स्ना सदाशिवविधूदिता । आस्वादमस्या यो वेद वेदस्तस्य वशे स्थितः " इति तन्त्रात् । त्वं जय जय वीप्सात्र हर्षे इत्यर्थः ॥ ९९ ॥

आर्याशतकं भक्त्या पठतामार्याकटाक्षेण ।
निस्सरति वदनकमलाद्वाणी पीयूषधोरणी दिव्या ॥ १०० ॥

अन्वयः ॥ भक्त्यार्याशतकं पठतां नराणामार्याकटाक्षेण वदनकमलात्पीयूषधोरणी दिव्या वाणी निस्सरतीत्यन्वयः ॥ १०० ॥

टीका ॥ भक्त्याऽऽर्याछन्दसां शतकं आर्यायाः श्रीशिवाया वा स्तुतेः श्लोकशतकं पठतां पुरुषाणामार्यायाः श्रीकामाक्ष्याः कृपाकटाक्षेण वदनमेव कमलं तस्मात्पीयूषधोरणी अमृतानुकारिणी दिव्या दैवी संस्कृतरूपा श्रीमतीस्वरूपप्रकाशिनी वा वाणी सरस्वती निस्सरति निर्याति प्रसरतीत्यर्थः ॥ १०० ॥

इति श्रीमूककविसार्वभौमविरचितं आर्याशतकं समाप्तम् ॥ इति श्रीराजराजेश्वरमहाराजाधिराजमहाराजमरुदेशाधीशराठोडवंशावतंसयोधपुरनाथमहाराजश्रीश्री १०८ श्रीश्रीमानसिंहात्मजचतुर्ग्रामाधीशशिवराष्ट्रपुरपतिश्रीआनन्दानन्दनाथाऽनन्दाम्बाचरणारविन्दाराधकहरिहरब्रह्मेन्द्रचन्द्रादिवन्दनीयश्रीमत्त्रिपुरसुन्दरीचरणचञ्चरीकरावराजेन श्रीशोभनसिंहेन विरचिता श्रीमूककविसार्वभौमकृतशतकपञ्चकमध्यस्थचतुर्थार्याशतकस्य सुवर्णमालाख्या टीका संपूर्णा ॥

श्लोकः । धाम्ने त्रिलोकधाम्नेऽपरिमितनाम्नेऽतिचैत्याय । प्रस्फुटललितानाम्ने कारुण्याय लुभ्यते मम चेतः ॥ १ ॥

पाण्डित्यं परमेश्वरि स्तुतिविधौ नैवाश्रयन्ते गिरां
वैरञ्चान्यपि गुम्फनानि विगलद्गर्वाणि शर्वाणि ते ॥
स्तोतुं त्वा परिफुल्लनीलनलिनश्यामाक्षि कामाक्षि मां
वाचालीकुरुते तथापि नितरां त्वत्पादसेवादरः ॥ १ ॥

अन्वयः ॥ हे परमेश्वरि ! हे शर्वाणि ! हे परिफुल्लनीलनलिनश्यामाक्षि ! हे कामाक्षि ! ते तव स्तुतिविधौ विगलद्गर्वाणि वैरञ्चान्यपि गुम्फनानि गिरां पाण्डित्यं नैवाश्रयन्ते, तथापि त्वां स्तोतुं नितरां त्वत्पादसेवादरो मां वाचालीकुरुत इत्यन्वयः ॥ १ ॥

॥ श्रीगणेशाय नमः ॥ श्रीगुरुपादुकाभ्योनमः ॥ श्रीकामाक्ष्यम्बाश्रीपादुकाभ्यो नमः ॥ श्री-एकाम्रनाथश्रीपादुकाभ्यो नमः ॥ श्रीकम्पानदीश्रीपादुकाभ्यो नमः ॥ श्रीकाञ्चीपुरीश्रीपादुकाभ्यो नमः ॥ श्रीमूककविसार्वभौमश्रीपादुकाभ्यो नमः ॥ श्रीमूककविसार्वभौमसुधासहचरीवाणीश्रीपादुकाभ्योनमः ॥ श्रीसरस्वत्यैनमः ॥

टीका ॥ कर्तुमकर्तुमन्यथाकर्तुं समर्थ ईश्वरः परमश्चासावीश्वरश्च परमेश्वरः साक्षात्परशिवस्तस्य स्त्री जगद्रचनपालनसंहरणभक्तोद्धरणादिसामर्थ्यरूपाद्भुतचमत्कारिणी अनाद्यन्तसंयोगा " सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् " इति विमर्शस्वभावा । " शिवस्याभ्यन्तरा शक्तिः शक्तेरभ्यन्तरः शिवः । अन्तरं नैव जानीयाच्चन्द्रचन्द्रिकयोरिव " इतिश्रीगोरक्षनाथकृतसिद्धसिद्धान्तपद्धत्युक्तवचनात् प्रकाशरूपपरमशिवमयी " शक्त्या विना शिवे सूक्ष्मे नामधाम न विद्यते । शिवं विना चित्कलाया न क्वचित्कलनं भवेत् " इति परस्पराभिन्ना शिवेन सह सदैकरसरूपा । शक्नोत्यनया जगदुत्पत्त्यादि कर्तुमिति शक्तिः । शक्नोति व्याप्नोति इति शक्तिर्वा परमेश्वरी स्त्रीलिंगवाच्या परदेवता संवित्तत्संबुद्धौ हे तथोक्ते ! इति तुर्यारूपां संबोध्य तामेव तमोगुणाविष्टचिद्रूपस्य हरस्य शक्तिरूपेण संबोधयति । शृणाति हिनस्ति दैत्यान् भक्तस्याज्ञानं पापं दुःखं प्रलये विश्वं वा । स शर्वो हरस्तस्य स्त्री हरणरूपसामर्थ्याख्या, सदा तदभिन्नशक्तिरूपा शर्वाणीरूपा । इन्द्रादीनामानुक्ङीष् च । तत्संबुद्धौ हे तादृशे ! यद्वा शब्दानामनादिसिद्धत्वात्परमेश्वरीशर्वाणीत्यादिशब्दा रूढ्यैव श्रीमन्महात्रिपुरसुन्दरीवाचकाः । सिद्धा इति । पर्यभितः फुल्लति विकसतीति परिफुल्लं तथोक्तं च तन्नीलनलिनं च तथोक्तं तदिव श्यामे अक्षिणी यस्याः सा तत्संबुद्धौ हे परिफुल्लनीलनलिनश्यामाक्षि ! कामः कन्दर्पोऽक्ष्णोर्यस्याः सा । यद्वा कामा भक्तमानसेप्सितकामना धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थरूपा वा देयत्वेनाक्ष्णोर्यस्याः सा तत्संबुद्धौ हे तथाविधे ! ते तव कामाक्ष्याः परमेश्वर्याः स्तुतिविधौ नितरां नित्यं विशेषेण गलन्तो गर्वा येषां तानि तथोक्तानि विरञ्चस्येमानि वैरञ्चानि गुम्फनानि ग्रन्थरचनानि ग्रन्थरचितवाक्यसमूहा इति यावत् । गिरां वाणीनां पाण्डित्यं चातुर्यं नैवाश्रयन्ते नावलम्बन्ते यथावद्वर्ण-

नाभावात् । तथापि त्वां स्तोतुं त्वत्पादसेवायां जपध्यानार्चनादिरूपायां य आदरो मान एकत्र स्थित्वा दृढतरनित्याभ्यासरूपो मां वाचालं बहुभाषिणं कुरुत इत्यर्थः । " मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् " इत्यादिपुराणात् श्रीशिवावतारमहामुनिक्रोधभट्टारककृतलहर्यां च " गेहं नाकति गर्वितः प्रणमति स्त्रीसंगमो मोक्षति द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति । मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवनात्त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् ॥ १ ॥ " मया मूककविनाऽधुनैव तव प्रसादात्प्रत्यक्षतस्तव सेवाप्रभावो दृष्ट इति भावः । शार्दूलविक्रीडितं छन्द एकोनविंशतिश्लोकान्तम् ॥ १ ॥

तापिच्छस्तबकत्विषे तनुभृतां दारिद्र्यमुद्राद्विषे
संसाराख्यतमोमुषे पुररिपोर्वामाङ्कसीमाजुषे ॥
कम्पातीरमुपेयुषे कवयतां जिह्वाकुटीं जग्मुषे
विश्वत्राणपुषे नमोऽस्तु सततं तस्मै परज्योतिषे ॥ २ ॥

**अन्वयः ॥ तापिच्छस्तबकत्विषे तनुभृतां दारिद्र्यमुद्राद्विषे संसाराख्यतमोमुषे पुररिपोर्वामाङ्कसीमाजुषे कम्पातीरमुपेयुषे कवयतां जिह्वाकुटीं जग्मुषे विश्वत्राणपुषे तस्मै परज्योतिषे सततं नमोऽस्तु इत्यन्वयः ॥ २ ॥**

**टीका ॥** तापिच्छास्तमाला मयूरपिच्छा वा तेषां ये स्तबका गुच्छाश्चन्द्रका इत्यर्थः । तद्वत्त्विट् कान्तिर्यस्य स तथोक्तस्तस्मै नीलकान्तये नानारत्नाभरणवसनकज्जलकस्तूरिकागरुचन्दनकुंकुमसिन्दूरजंगालादीनां धारणेन नानावर्णावभासमानाय वेत्यर्थः । यद्वा तापिच्छस्तमालस्तस्य स्तवक इव त्विट्यस्य तस्मै श्यामवर्णायेत्यर्थः । तनुभृतां शरीरिणां दरिद्रस्य भावो दारिद्र्यं तस्य मुद्रा चिह्नमाकृतिरिति यावत् । तस्या द्विषे वैरिणे प्रपन्नप्राणिदारिद्र्यनाशकायेत्यर्थः । संसाराख्यं तमोऽज्ञानं तन्मुष्णातीति तथोक्तं तस्मै स्वरूपप्रकाशेन भक्तानां भेदरूपाज्ञानतमोहारकायेत्यर्थः । पुररिपोः श्रीशिवस्य वामाङ्को वामोत्सङ्गस्तस्य या सीमाऽवधिस्तां जुषते इति तथोक्तं तस्मै परमशिववामाङ्कवासिन इत्यर्थः । कम्पा नाम्नी नदी तस्यास्तीरं तस्योप समीपे ईयुषे प्राप्तवते कम्पातीरविहरणशीलायेत्यर्थः । कवयतां काव्यकर्तॄणां जिह्वैव कुटी वासस्थानं तां प्रति गन्तुमिच्छवे कविजिह्वाग्रगमनेच्छावत इत्यर्थः । विश्वेषामनन्तब्रह्माण्डानां त्राणं रक्षणं पुष्णातीति तथोक्तं तस्मै विश्वरक्षणपुष्टिकर्त्रे इत्यर्थः । तस्मै पूर्ववर्णिताय परं च तज्ज्योतिस्तेजश्च परज्योतिस्तस्मै प्रकाशान्तरमनपेक्ष्यैव स्वरूपस्य विश्वजातस्य च प्रकाशयित्रे " स्वयंप्रकाशः परमः शिवः " इति परमशिवरूपायेत्यर्थः । जपध्यानपूजादावशक्तस्य मम नमोमात्रं भवतु । अनेनैवाहं कृतकृत्यो भवामीति भावः ॥ २ ॥

ये संध्यारुणयन्ति शंकरजटाकान्तारचन्द्रार्भकं
सिन्दूरन्ति च ये पुरंदरवधूसीमन्तसीमान्तरे ॥
पुण्यं ये परिपक्वयन्ति भजतां काञ्चीपुरे माममी
पायासुः परमेश्वरप्रणयिनीपादोद्भवाः पांशवः ॥ ३ ॥

अन्वयः ॥ ये शंकरजटाकान्तारचन्द्रार्भकं संध्यारुणयन्ति ये च पुरंदरवधूसीमान्तरे सिन्दूरन्ति ये च काञ्चीपुरे भजतां पुण्यं परिपक्वयन्ति तेऽमी परमेश्वरप्रणयिनीपादोद्भवाः पांशवो मां पायासुरित्यन्वयः ॥ ३ ॥

टीका ॥ ये शंकरस्य जटैव कान्तारं तस्मिन् चन्द्रार्भकं बालचन्द्रं शुक्लद्वितीयाया अष्टम्या वा संध्यायामरुणः संध्यारुणः तं कुर्वन्तीति तथा । ये च पुनः पुरंदरस्य वधूरिन्द्राणी तस्याः सीमन्तः ललाटोपरि द्विधाकृतकेशपाशविन्यासस्तस्य सीमा मध्यसरणिस्तस्या अन्तरे मध्ये सिन्दूरमिवाचरन्तीति तथा, ये च पुनः काञ्चीपुरे भजतां सेवमानानां भक्तानां पुण्यं सुकृतं परिपक्वयन्ति परिपक्वदशां नयन्ति परमेश्वरस्य परशिवस्य प्रणयः स्नेहोऽस्यां परमेश्वरे स्नेहोऽस्या वाऽस्तीति सा तस्याः पादोद्भवा अमी पांशवः चरणरजःकणाः मां पायासुः रक्षेयुरित्यर्थः ॥ ३ ॥

कामाडम्बरपूर्णया शशिरुचा कम्रस्मितानां त्विषा
कामारेरनुरागसिन्धुमधिकं कल्लोलितं तन्वती ॥
कामाक्षीति समस्तसज्जननुता कल्याणदात्री नृणां
कारुण्याकुलमानसा भगवती कम्पातटे जृम्भते ॥ ४ ॥

अन्वयः ॥ कामाडम्बरपूर्णया शशिरुचा कम्रस्मितानां त्विषा कामारेः अनुरागसिन्धुमधिकं कल्लोलितं तन्वती सती समस्तसज्जननुता नृणां कल्याणदात्री कारुण्याकुलमानसा भगवती कामाक्षी इति प्रसिद्धा कम्पातटिन्यास्तटे जृम्भते इत्यन्वयः ॥ ४ ॥

टीका ॥ कामस्य आडम्बरः कामाडम्बरः कामैश्वर्यं तेन पूर्णा कामाडम्बरपूर्णा कामाडम्बरः पूर्यत इति कामाडम्बरपूर्णा वा तया । शशिनो रुक् इव रुक् कान्तिर्यस्याः सा तया । कम्रस्मितानां त्विषा कम्राणि मनोहराणि च तानि स्मितानि च तथोक्तानि तेषां त्विषा कान्त्या हेतुभूतया कामारेः कामशत्रोः श्रीशिवस्य अनुरागसिन्धुं स्नेहसमुद्रमधिकं बहु कल्लोलितं महातरङ्गितं तन्वती विस्तारयन्ती । समस्ताश्च ते सज्जनाः सत्पुरुषाश्च तथोक्ताः । यद्वा समस्ताश्च ते सतो ब्रह्मणः परशिवस्य भक्तिसंबन्धिनो ज्ञानैकात्म्यसंबन्धिनो वा जनाश्च तथोक्ता ईश्वरीयजना इत्यर्थः । तैर्नुता नृणां कल्याणदात्री कल्याणं नाम धन्यधान्यस्त्रीपुत्रकुटुम्बबहुसंपन्म-

द्राज्यशरीरारोग्यबलपुष्टिशौर्यवीर्यधैर्यगाम्भीर्य्यौदार्यसौन्दर्यसद्बुद्धिधृतिसर्वोपरिस्थितिसद्गुणगणशास्त्राभ्यासपरमेश्वरीप्रसादसद्गुरुलाभपरापादारविन्दभजनाप्तिरूपं मोक्षो वा तस्य दात्री। कारुण्यं करुणाया भावस्तेनाकुलं व्याप्तं वा मानसं यस्याः सा तथोक्ता भगवती "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भगइतीरणा" इति श्लोकोक्तभगवाचिनः षट्पदार्थास्ते सन्ति अस्याम् सा। यद्वा "प्रवृत्तिं च निवृत्तिं च भूतानामगतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" प्रवृत्तिनिवृत्तिभूतगतिभूतागतिविद्याऽविद्याज्ञानवती वा भगवती ईदृशी कामाक्षी कम्पानदीतटे जृम्भते विलसतीत्यर्थः ॥ ४ ॥

कामाक्षीणपराक्रमप्रकटनं संभावयन्ती दृशा
श्यामा क्षीरसहोदरस्मितरुचिप्रक्षालिताशान्तरा ॥
वामाक्षीजनमौलिभूषणमणिर्वाचां परा देवता
कामाक्षीति विभाति कापि तरुणी कम्पातटिन्यास्तटे ॥ ५ ॥

**अन्वयः॥ कामाक्षीणपराक्रमप्रकटनं दृशा संभावयन्ती श्यामा क्षीरसहोदरस्मितरुचिप्रक्षालिताशान्तरा वामाक्षीजनमौलिभूषणमणिर्वाचां परा देवता कामाक्षीति कापि तरुणी कम्पातटिन्यास्तटे विभाति इत्यन्वयः ॥ ५ ॥**

टीका ॥ कामदेवस्य अक्षीणो यः पराक्रमस्तस्य यत्प्रकटनं स्फुटीकरणं तत् दृशा दृष्ट्या संभावयन्ती उत्पादयन्ती सती श्यामा षोडशवार्षिकी क्षीरस्य दुग्धस्य या सहोदरा एकमात्रिका पयःसदृशी मन्दहासस्मितरुचिस्तया प्रक्षालितं आशान्तरं दिगन्तरं भक्तानामभिलाषान्तरं च यया सा वामे श्रेष्ठे कुटिले वा अक्षिणी यासां तास्तथाभूतास्ता एव जना लोकाः तेषां ये मौलयो मस्तकानि मुकुटानि वा तेषां भूषारूपा मणिः लक्ष्मीशच्यादिस्त्रीमात्रश्रेष्ठा श्रीगिरादिस्त्रीमात्रशिरोवधार्यपादारविन्देत्यर्थः। वाचां वाणीनां परोत्तमा उल्लङ्घ्यवर्त्तिनी देवता महाप्रकाशशालिनीत्यर्थः। इत्यमुना प्रकारेण वर्णिता ईदृशी कामाक्षीनाम्नी काप्यनन्यादृशमहिम्नी तरुणी प्रेमास्पदा बाल्यवार्द्धक्यशून्या अजरामरत्वात् सदैव। तरुणी सुन्दरीत्यनेन त्रिपुरसुन्दरीति ध्वन्यते। करुणेति पाठे करुणारूपिणी "जयति करुणा काचिदरुणा" इतिसौन्दर्य्यलहर्याम्। कम्पातटिन्याः कम्पानामकनद्यास्तटे विशेषेण भाति प्रकाशत इत्यर्थः ॥ ५ ॥

श्यामा काचन चन्द्रिकात्र भुवने पुण्यात्मनामानने
सीमाशून्यकवित्ववर्षजननी या कापि कादम्बिनी।

मारारातिमनोविमोहनविधौ काचित्तमःकन्दली
कामाक्ष्याः करुणाकटाक्षलहरी कामाय मे कल्पताम् ॥ ६ ॥

अन्वयः ॥ याऽत्र भुवने काचन श्यामा चन्द्रिका पुण्यात्मनामानने सीमाशून्यकवित्ववर्षजननी कापि कादम्बिनी मारारातिमनोविमोहनविधौ काचित्तमःकन्दली सा कामाक्ष्याः करुणाकटाक्षलहरी मे कामाय कल्पतामित्यन्वयः ॥ ६ ॥

टीका ॥ या अत्र भुवने अस्मिल्लोके श्यामा श्यामवर्णा काचनाद्भुतचमत्कृतिरूपा चन्द्रिका ज्योत्स्ना अज्ञानतमोनाशकत्वाद्भक्तानामानन्दप्रदप्रकृतित्वाच्चन्द्रिकेत्युक्तिः। या काप्यद्भुतचमत्कारिणी कादम्बिनी मेघमाला पुण्यः पवित्र आत्मा जीवो देहो मनो वा येषां ते तथाविधास्तेषामाननेषु मुखेषु सीमया शून्यं अवधिना रहितं कवेर्भावः कवित्वं ग्रन्थरचनाचातुर्यं सामर्थ्यं तस्य यद्वर्षं वर्षणं तस्य जननी उत्पादयित्री शुद्धात्मनां मुखे निरवधिकवितामृतधारावर्षिणीत्यर्थः। मारारातेः कामशत्रोर्यन्मनस्तस्य विशेषेण मोहनविधौ मोहनकरणे वशीकरणे काचित् वागविषया तमःकन्दली तमसां नवाङ्कुररूपा स्वसौन्दर्येण शिवदृष्टिहारिणीत्यर्थः। या श्यामा चन्द्रिका सैव कादम्बिनी तमः कन्दली चेति कथनात्तस्या अनिर्वचनीयत्वं युक्तमेव। सा कामाक्ष्याः करुणायुक्तो यः कटाक्षस्तस्य लहरी मे मम कामाय मनोभिलाषापूरणाय कल्पतां समर्था भवतु इत्यर्थः ॥ ६ ॥

प्रौढध्वान्तकदम्बके कुमुदिनीपुण्याङ्कुरं दर्शय-
ञ्ज्योत्स्नासंगमनेऽपि कोकमिथुनं मिश्रं समुद्भावयन्।
कालिन्दीलहरीदशां प्रकटयन्कम्रां नभस्यद्भुतां
कश्चिन्नेत्रमहोत्सवो विजयते काञ्चीपुरे शूलिनः ॥ ७ ॥

अन्वयः ॥ प्रौढध्वान्तकदम्बके कुमुदिनीपुण्याङ्कुरं दर्शयन् ज्योत्स्नासंगमनेपि कोकमिथुनं मिश्रं समुद्भावयन् नभसि कम्रां अद्भुतां कालिन्दीलहरीदशां प्रकटयन् सन् शूलिनः कश्चिन्नेत्रमहोत्सवः काञ्चीपुरे विजयत इत्यन्वयः ॥ ७ ॥

टीका ॥ प्रौढं तरुणं च तद्ध्वान्तमन्धकारश्च तथोक्तं तस्य कदम्बके समूहे कुमुदिनीनां रजनिविकाशिकमलिनीनां पुण्याङ्कुरं पुण्यस्याङ्कुरः पुण्यरूपोऽङ्कुरश्चन्द्रस्तं दर्शयन् चन्द्रस्य कुमुदिनीनां प्रफुल्लीकरणरूपहर्षदायकत्वात् हर्षस्य हि पुण्येन विनाऽसंभवात् कार्यकारणयोश्चैक्यात् कुमुदिनीनां पुण्याङ्कुरं तमोरूपं केशपाशद्वैधीभावं भित्वैव निःसृतमिव मुखचन्द्रं प्रकटयन्नित्यर्थः ज्योत्स्नायाश्चन्द्रिकायाः। यत्संगमनं संयोगस्तस्मिन् सत्यपि कोकस्य चक्रवाकस्य मिथुनं युगं मिश्रमेकत्र गतं सं सम्यगुद्भावयन् रचयन् मन्दहासकान्तिरूपचन्द्रिकासंयोगे चक्रवाकयुग्मरूपं स्तनयुगलं सहस्थितं समुद्भावयन् संप्रकटयन् संजतानन्नि-

त्यर्थः । नभस्याकाशे कम्रां मनोहरामद्भुतां विस्मयास्पदं कालिन्द्या यमुनाया या लहर्यस्तासां या दशावस्था तां प्रकटयन्स्फुटयन् नभोरूपमध्यदेशे कटौ यमुनाया लहरीरूपामतिश्यामस्निग्धकान्तिमनोहरां रोमावलीं स्फुटयन्नित्यर्थः । शूलिनः श्रीपरशिवस्य कश्चिदलौकिकनेत्राणामुत्सवो नेत्रनन्दाजनकः काञ्चीपुरे विशेषतया जयति, सर्वोत्कृष्टतया वर्त्तत इत्यर्थः ॥ ७ ॥

तत्राभूततमालनीलसुषमैस्तारुण्यलीलागृहै-
स्तारानाथकिशोरलाञ्छितकचैस्ताम्रारविन्देक्षणैः ॥
मातः संश्रयतां मनो मनसिजप्रागल्भ्यनाडिंधमैः
कम्पातीरचरैर्घनस्तनभरैः पुण्याङ्कुरैः शांकरैः ॥ ८॥

अन्वयः ॥ तत्र काञ्चीपुरे अभूततमालनीलसुषमैस्तारानाथकिशोरलाञ्छितकचैरित्यादितृतीयाबहुवचनान्तपदानि शांकरैः पुण्याङ्कुरैरित्यस्य विशेषणानि । तैः सह हे मातः! मनः संश्रयतामित्यन्वयः ॥ ८ ॥

टीका ॥ तत्र काञ्चिपुरे अभूतोऽपूर्वोऽतिमनोहरः स चासौ तमालश्चाभूततमालः अभूततमालस्य सुषमा येषां ते तथाभूतास्तैः घनश्यामैरित्यर्थः । तारुण्यस्य या लीलास्तासां गृहैस्तारुण्यक्ष्वेल्यावासैः ताराणां नाथश्चन्द्रः स चासौ किशोरो बालचन्द्रस्तेन लाञ्छिता अलंकृताः कचा मूर्द्धजा येषां ते तथाभूतास्तैः ललाटार्द्धचन्द्रभूषणैः । ताम्रवर्णानि च तानि अरविन्दानि च तथोक्तानि तानीक्षणानि येषां ते तथाभूतास्तैः रक्तारविन्दलोचनैः मनसिजस्य प्रागल्भ्यस्य नाडिंधमाः डलयोरैक्यात् नालिंधमाः स्वर्णकाराः स्फूतकृत्याग्निवृद्धिकरास्तैः कामबाहुल्यकरैरित्यर्थः । कम्पायास्तीरेषु चरन्तीति तथाविधास्तैः घनौ पीनौ च तौ स्तनौ च तथोक्तौ तयोर्भरो भारो येषां येषु वा तैस्तथाविधैः। पीनोच्चकठिनघनस्तनभरश्रमैरित्यर्थः पुण्यानामङ्कुरा उद्गमाः पुण्याङ्कुराः शंकरस्येमे शांकारास्तैः सह हे मातः! मनः सम्यक् श्रयतामालम्बतामित्यर्थः । मर्मतिशेषः ॥ ८ ॥

नित्यं निश्चलतामुपेत्य मरुतां रक्षाविधिं पुष्णती
तेजःसंचयपाटवेन किरणानुष्णद्युतेर्मुष्णती ॥
काञ्चीदेशगतापि दीप्तिजननी विश्वान्तरे जृम्भते
काचिच्चित्रमिह स्मृतापि मनसो निर्वापिका दीपिका ॥ ९ ॥

अन्वयः ॥ नित्यं निश्चलतामुपेत्य मरुतां रक्षाविधिं पुष्णतीतिचित्रम् । तेजःसंचयपाटवेनोष्णद्युतेः किरणान्मुष्णतीतिचित्रम् । काञ्चीदेशगतापि विश्वान्तरे दीप्तिजननीतिचित्रम् । इह स्मृतापि मनसो निर्वापिका काचिद्दीपिका जृम्भते इतिचित्रम् इत्यन्वयः ॥ ९ ॥

टीका ॥ नित्यं निश्चलस्य भावो निश्चलता तां उपेत्य प्राप्य मरुतां वायूनां ऊनपञ्चाशद्भ्यवधिष्ठातृदेवतानां च रक्षाया विधिः रक्षाविधिस्तं पुष्णती पुष्टं कुर्वन्तीत्यस्मिंल्लोके चित्रम् । तेजसां संचयस्य संग्रहस्य पाटवेन चातुर्येण बाहुल्येन वोष्णद्युतेर्भास्करस्य किरणान् करान् मुष्णती चोरयन्तीति इहास्मिन् लोके चित्रमाश्चर्यम् । काञ्चीदेशगता सत्यपि विश्वान्तरे दीप्तिजननी प्रकाशकर्त्रीतीह चित्रम् । काचिदद्भुतमहिमशालिनी इहास्मिंल्लोके स्मृता चिन्तितापीति निश्चयेन मनसो निर्वापिका लयकर्त्री सती दीपिका दीप इह अत्रैव सदा भासमाना जृम्भते वर्द्धत इति चित्रमित्यर्थः ॥ ९ ॥

कान्तैः केशरुचां चयैर्भ्रमरितं मन्दस्मितैः पुष्पितं
कान्त्या पल्लवितं पदाम्बुरुहयोर्नेत्रत्विषा पत्रितम् ॥
कम्पातीरवनान्तरं विदधती कल्याणजन्मस्थली
काञ्चीमध्यमहामणिर्विजयते काचित्कृपाकन्दली ॥ १० ॥

अन्वयः ॥ कान्तैः केशरुचां चयैर्भ्रमरितं मन्दास्मितैः पुष्पितं पदाम्बुरुहयोः कान्त्या पल्लवितं नेत्रत्विषा पत्रितं कम्पातीरवनान्तरं विदधती कल्याणजन्मस्थली काञ्चीमध्यमहामणिः काचित्कृपाकन्दली विजयत इत्यन्वयः ॥ १० ॥

टीका ॥ कान्तै रमणीयैः केशानां रुचां चयैः कान्तिपुञ्जैः भ्रमरितं भ्रमराः संजाता अस्य तद्भ्रमरितं मन्दानि च तानि स्मितानि च तथोक्तानि तैर्मन्दास्मितैः पुष्पितं पुष्पाणि जातान्यस्य तत् तादृशं पद एवाम्बुरुहे तयोः कान्त्या पल्लवितं पल्लवानि जातानि अस्य तत् नेत्राणां त्विषादीप्त्या पत्रितं पत्राणि जातानि अस्य तत् कम्पा नाम्न्या नद्यास्तीरेषु वनान्तरं विदधती सती कल्याणजन्मस्थली कल्याणस्याऽभ्युदयस्य मङ्गलस्यैश्वर्यस्य मोक्षस्य वा जन्मस्थली उत्पत्तिभूमिका काञ्च्या मध्यं काञ्चिमध्यं तस्मिन्महती चासौ मणिश्च महामणिश्चिंतामणिरित्यर्थः काचिदनिर्वचनीयमहिम्नी कृपायाः कन्दली अङ्कुररूपा विशेषेण जयति सर्वोत्कर्षेण वर्त्तत इत्यर्थः ॥ १० ॥

राकाचन्द्रसमानकान्तिवदना नाकाधिराजस्तुता
मूकानामपि कुर्वति सुरधुनीनीकाशवाग्वैभवम् ॥
श्रीकाञ्चीनगरीविहाररसिका शोकापहन्त्री सता--
मेका पुण्यपरंपरा पशुपतेराकारिणी राजते ॥ ११ ॥

अन्वयः ॥ राकाचन्द्रसमानकान्तिवदना नाकाधिराजस्तुता मूकानामपि सुरधुनीनीकाश-

वाग्वैभवं कुर्वन्ती श्रीकाञ्चीनगरीविहाररसिका सतां शोकापहन्त्री पशुपतेरेका पुण्यपरंपराऽऽकारिणी राजत इत्यन्वयः ॥ ११ ॥

टीका ॥ राकायाः पूर्णिमाया यश्चन्द्रस्तस्य समाना कान्तिर्वदने यस्याः सा नाकाधिराज इन्द्रस्तेन स्तुता मूकानां वाणीविरहितानां सुरधुनी गङ्गा तत्सदृशं वाचां वैभवमैश्वर्यं कुर्वती दोषरहितकविताधाराप्रवाहसामर्थ्यदायिनीत्यर्थः । श्रीकाञ्ची एव नगरी तस्या विहारे रसिका सतां भक्तानां शोकापहन्त्री धनादिविरहजशोकनाशना वस्तुतस्तु जन्ममरणादिशोकनाशकर्त्री धनादीनां दानेनेह लोके ज्ञानविज्ञानयोर्दानेनामुष्मिँल्लोके च सुखदात्रीत्यर्थः । पशुपतेः शिवस्यैका कापि श्रेष्ठा मुख्या केवला सत्याद्वया उक्तं च मार्कण्डेये "एकैवाहम्" इति । पुण्यानां परंपरा उत्तरोत्तरपंक्तिः आकारिणी मूर्तिमती राजते शोभत इत्यर्थः॥ ११ ॥

जाता शीतलशैलतः सुकृतिनां दृश्या परं देहिनां
लोकानां क्षणमात्रसंस्मरणतः संतापविच्छेदिनी ॥
आश्चर्यं बहु खेलनं वितनुते नैश्चल्यमाबिभ्रती
कम्पायारतटसीम्नि कापि तटिनीकारुण्यपाथोमयी ॥ १२ ॥

अन्वयः ॥ शीतलशैलतो जाता सुकृतिनां देहिनां दृश्या परं पुन र्लोकानां क्षणमात्रसंस्मरणतः संतापविच्छेदिनी नैश्चल्यमाबिभ्रती सती कारुण्यपाथोमयी कापि तटिनी कम्पायास्तटसीम्नि आश्चर्यं यथा तथा बहु खेलनं वितनुत इत्यन्वयः ॥ १२ ॥

टीका ॥ शीतलश्चासौ शैलश्च तथोक्तो हिमगिरिस्तस्माच्छीतलशैलतः "सार्वविभक्तिकस्तसिल्" इत्यनेन पञ्चम्यर्थे तसिल् । हिमगिरिसकाशात्प्रादुर्भूतेत्यर्थः । सुकृतिनां देहिनां परं दृश्या अतिशयेन दर्शनीया लोकानां जनानां च सम्यक् स्मरणात् संतापो दुःखं तस्य विच्छेदिनी नैश्चल्यं ध्रुवतां आबिभ्रती सती करुणाया भावः कारुण्यं तदेव पाथो जलं तन्मयी काप्यनिर्वचनीया तटिनी नदी कम्पानाम्न्या नद्यास्तटस्य सीम्नि आश्चर्यं यथा स्यात्तथा बहु अति महद्वा खेलनं क्रीडां विशेषेण तनुते विस्तृणोतीत्यर्थः । अन्या नदी स्नानाच्छीतलं करोति चपला च, इयं क्षणमात्रसंस्मरणात्संतापच्छेदिनीत्याश्चर्यम् । इयं कारुण्यपाथोमयी तटिनी कम्पानदीतटोपरि बहुविधं खेलनं विस्तारयतीत्याश्चर्यम् ॥ १२ ॥

ऐक्यं येन विरच्यते हरतनौ दंभावपुंभावके
रेखा यत्कचसीम्नि शेखरदशां नैशाकरी गाहते ॥
औन्नत्यं मुहुरेति येन स महान्मेनासखः सानुमान्
कम्पातीरविहारिणा सशरणास्तेनैव धाम्ना वयम् ॥ १३ ॥

अन्वयः ॥ दंभावपुंभावके हरतनौ येन धाम्ना ऐक्यं विरच्यते, यत्कचसीम्नि नैशाकरी रेखा शेखरदशां गाहते, येन मेनासखः स महान् सानुमान्मुहुरौन्नत्यमेति तेनैव कम्पातीरविहारिणा धाम्ना वयं सशरणा जाताः स्म इति शेषः ॥ १३ ॥

टीका ॥ दंभावपुंभावके दंभावेन युक्तः पुंभावो दंभावपुंभावः स विद्यतेऽस्य स तथोक्तस्तस्मिन् हरतनौ शिवशरीरे येन धाम्ना तेजसा अतिप्रेम्णा ऐक्यं अर्द्धनारीश्वररूपं पराप्रासादमन्त्रदेवतात्मकं विरच्यते यद्वा । स्वभक्तानां शिवभक्तानां चैक्यज्ञानं भवतु तदनु शिवशक्त्योरैक्यज्ञानान्मुक्तिर्भवतु आवयोर्भिन्नज्ञानान्माधः पतन्तु शिवशक्तिभक्ता इति मनसि कृत्वा एकस्य भाव ऐक्यं विशेषेण रच्यते। यद्वा मदनलीलायामतृप्ततया शिवया क्षणं पृथक् स्थितिमसहमानया हरतनौ दंभावयुक्ते पुंभावे दक्षभागाङ्गरूपे ऐक्यं शक्तिरूपमेव विरच्यते पूर्वं तु स्नेहवशाद्वामाङ्गरूपमर्धाङ्गमेवापहृतम् । तदनु चावशिष्टं दक्षाङ्गमप्यपहृतमित्यत्रार्थे " वपुरपरितृप्तेन मनसा " इति सौन्दर्यलहर्याः श्लोकः स्मर्त्तव्य इत्यलं विस्तरेण। यस्य कचानां सीम्नि नैशाकरी चान्द्री रेखा शेखरस्य मुकुटस्य दशां गाहते प्राप्नोति मेना नाम्नी सखी वयस्या यस्य स तथोक्तः स प्रसिद्धो महान् गुरुः सानूनि शिखराणि सन्त्यस्य स सानुमान् हिमगिरिर्मुहुः पौनःपुन्येन उन्नत्या भाव औन्नत्यमेति याति कम्पातीरे विहारोस्याऽस्तीति कम्पातीरविहारी तेन कम्पातीरविहारिणा तेनैव धाम्ना तेजसा शरणेन सह वर्त्तमानाः सशरणा वयं तत्कृपयैव जाताः स्म इत्यर्थः ॥ १३ ॥

अक्ष्णोश्च स्तनयोः श्रिया श्रवणयोर्बाव्होश्च मूलं स्पृश-
न्नुत्तंसेन मुखेन च प्रतिनं द्रुह्यन्पयोजन्मने ॥
माधुर्येण गिरां गतेन मृदुना हंसाङ्गनां ह्रेपयन्
काञ्चीसीम्नि चकारित कोऽपि कवितासंतानबीजाङ्कुरः ॥ १४ ॥

अन्वयः ॥ अक्ष्णोः श्रिया श्रवणयोर्मूलं स्पृशन् स्तनयोः श्रिया बाव्होश्च मूलं स्पृशन् उत्तंसेन मुखेन च प्रतिदिनं पयोजन्मने द्रुह्यन् गिरां माधुर्येण मृदुना गतेन च हंसाङ्गनां ह्रेपयन् कोपि कवितासंतानबीजाङ्कुरः काञ्चीसीम्नि चकास्ति इत्यन्वयः ॥ १४ ॥

टीका ॥ अक्ष्णोर्नेत्रयोः श्रिया शोभया श्रवणयोः कर्णयोर्मूलं स्पृशन् सन् स्तनयोः श्रिया बाव्होर्मूलं च स्पृशन् सन् उत्तंसेन उत्थितेन रमणीयेनेत्यर्थः । मुखेन च पयोजन्मने कमलाय द्रुह्यन् द्रोहं कुर्वन् सन् गिरां माधुर्येण कलहंसाङ्गनां मृदुना मन्थरेण गतेन गमनेन च राजहंसाङ्गनां जात्येकवचनं ह्रेपयन् लज्जयन् कोपि अनिर्वचनीयः कवितायाः यः संतानः प्रसरणं तस्य यत् बीजं कारणं तस्याङ्कुरोऽभिनवोद्गमः काञ्चीसीम्नि काञ्चीसीपुरीसमीपे चकास्ति प्रकाशत इत्यर्थः ॥ १४ ॥

खण्डं चान्द्रमसं वतंसमनिशं काञ्चीपुरे खेलनं
कालायश्छवितस्करीं तनुरुचिं कर्णेजपे लोचने ॥
तारुण्योष्मनखंपचस्तनभरं जङ्घास्पृशं कुन्तलं
भाग्यं देशिकसंचितं मम कदा संपादयेदम्बिके ॥ १५ ॥

अन्वयः ॥ श्रीश्यामारूपेण स्तौति । चान्द्रमसं खण्डं अनिशं वतंसं दधत् काञ्चीपुरे अनिशं खेलनं दधत् कालायश्छवितस्करीं तनुरुचिं दधत् कर्णेजपे लोचने दधत् तारुण्योष्मनखंपचस्तनभरं दधत् जङ्घास्पृशं कुन्तलं दधत् ईदृशं देशिकसंचितं मम भाग्यं हे अम्बिके ! कदायं जनः संपादयेत् इत्यन्वयः ॥ १५ ॥

टीका ॥ चन्द्रमस इदं चान्द्रमसं खण्डं शकलं नित्यं वतंसं मुकुटं दधत् काञ्चीपुरे अनिशं नित्यं खेलनं क्रीडनं दधत् कालं कृष्णं च तदयो लोहं च कालायस्तस्य या छविर्दीप्तिः तस्यास्तस्करीं चौरिणीं तनोः शरीरस्य रुचि कान्तिं दधत् कर्णे कमलमत्स्ययोरसौन्दर्यं जपत इति कर्णेजपे विभक्तेरलुक्। अर्थात् लोचने दधत् सुन्दरात्यायतचपललोचने बिभ्रदित्यर्थः । तारुण्यस्य यौवनस्य य ऊष्मा घर्मः तेन नखानि पचते तापयति यः स तारुण्योष्मनखंपचः सच स्तनभरस्तं दधत् जङ्घां स्पृशतीति जङ्घास्पृक् तं कुन्तलं केशपाशं दधत् देशिकैः श्रीगुरुभिः संचितं संगृहीतं ईदृशं श्रीमतीरूपं मम भाग्यं हे अम्बिके ! कदा संपादयेत्प्राप्नुयादित्यर्थः । अयं जन इतिशेषः ॥ १५ ॥

तन्वानं जनकेलिसौधसरणिं नैसर्गिकीणां गिरां
केदारं कविमल्लसूक्तिलहरीशस्यश्रियां शाश्वतम् ॥
अंहोवञ्चनचञ्चु किंचन भजे काञ्चीपुरीमण्डनं
पर्यायच्छवि पाकशासनमणेः पौष्पेषवं पौरुषम् ॥ १६ ॥

अन्वयः ॥ जनकेलीसौधसरणिं तन्वानं कविमल्लसूक्तिलहरीशस्यश्रियां नैसर्गिकीणां गिरां शाश्वतं केदारं अंहो..ञ्चनचञ्चु काञ्चीपुरीमण्डनं पाकशासनमणेः पर्यायच्छवि किंचन पौष्पेषवं पौरुषं भज इत्यन्वयः । अहमिति शेषः ॥ १६ ॥

टीका ॥ जनस्य केलिर्जनकेलिः जनकेल्या युक्ता ये सौधा राजसदनानि । यद्वा जनस्य केलिर्यासु याभिर्वा ता जनकेलयो वराङ्गनास्ताभिर्युक्ताःसौधास्तेषां सरणिः तथोक्ता ताम्। वररमणीयुक्तहर्म्यालीं भक्तानां कृते विस्तारयन्तम् अर्थात्सर्वसंपद्वरस्त्रीकीर्तिबलबुद्धिदायिनी श्रीमतीत्यनेनोक्तं भवति । कविषु मल्लाः श्रेष्ठाः शास्त्रसिद्धान्तप्रतिपादने समर्थास्तेषां याः सूक्तयस्तद्रूपा लहर्यस्तासां वा लहर्यस्ता एव शस्यानि नवीनोद्गतधान्यानि फलानि वा तेषां श्रियः शोभाः संपदो वा यासु तासां नैसर्गिकीणां स्वभावसिद्धानां गिरां वाणीनां शाश्वतं ध्रुवं नि-

त्यरूपं केदारं धान्यवपनक्षेत्रं आलवालं वा अर्थात्सुकवित्वोत्पादिनी श्रीमती कामाक्षीत्यर्थः। अंहः पापं तस्य यद्वञ्चनं छलनं तेन वित्तम्। यद्वा आहो वञ्चनेनवित्तमिति चञ्चु प्रवीणम् भक्तपापनाशननिपुणा श्रीमतीत्यर्थः। काञ्चीपुर्या मण्डनमाभरणं पाकशासनमणेरिन्द्रगोपमणेः पद्मरागरत्नस्य पर्यायच्छवि अपरच्छवि रक्तवर्णछविः। श्रीमतीत्यर्थः। स्वस्यात्मनि सर्वेषां रागात् रागलौहित्ययोरैक्यात्स्वात्मरूपिणी श्रीमतीत्युक्तं भवति "स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा" इति श्रीतन्त्रराजवचनात् किंचनानिर्देश्यं वाङ्मनसोरगोचरमित्यर्थः। पुष्पाणीषवो बाणा यस्य स पुष्पेषुस्तस्येदं तथोक्तं पुरुषस्येदं पौरुषं बलं अनिर्वचनीयकामदेवपराक्रमरूपिणी श्रीमतीत्यर्थः। तां भजे सेव इत्यर्थः। पाकशासनमणेरित्यस्य इन्द्रनीलमणिरिति व्याख्यानं तु तस्य श्यामवर्णत्वात् श्रीमत्याः श्यामरूपेण वा मातङ्गीरूपेण वर्णनमिति ध्येयम्। यद्वा पाकशासनमणेरित्युक्त्या पाकशासन इन्द्रस्तस्य मणिः प्रकाशकत्वात् शोभाकारकत्वात् तद्रूपः तस्य परशिवस्य परमेश्वरस्य पर्यायच्छवि अपरच्छवि द्वितीयरूपं श्रीमती "परशिवसमानव्यसनिनी" इति सौन्दर्यलहर्युक्तेः। इत्यलं पल्लवितेन ॥ १६ ॥

आलोके मुखपङ्कजे च दधती सौधाकरीं चातुरीं<br>
चूडालंक्रियमाणपङ्कजवनीवैरागमप्रक्रियाम् ॥<br>
मुग्धस्मेरमुखी घनस्तनतटी मूर्छालमध्याञ्चिता<br>
काञ्चीसीमनि कामिनी विजयते काचिज्जगन्मोहनी ॥ १७ ॥

अन्वयः ॥ आलोके मुखपङ्कजे सौधाकरीं चातुरीं दधती चूडालंक्रियमाणपङ्कजवनीवैरागमप्रक्रियां च दधती मुग्धस्मेरमुखी घनस्तनतटी मूर्छालमध्याञ्चिता काचिज्जगन्मोहनी कामिनी काञ्चीसीमनि विजयत इत्यन्वयः ॥ १७ ॥

टीका ॥ आलोके आतपप्रकाशे सूर्योदयसमये इति यावत्। मुखपङ्कजे सौधाकरीं चान्द्रीं प्रवीणतां दधती धारयन्ती सतीत्याश्चर्यम्। आतपे चन्द्रस्य तेजोहीनताप्तेः। यद्वा आलोके श्रीशिवालोके सति स्वमुखपङ्कजे चान्द्रीं चातुरीं दधती आह्लादं प्रकाशयन्ती तथा चूडायां ग्रथितकेशजूटे मुकुटे वा अलंक्रियमाणा या पङ्कजानां बहुत्वाद्वनी तस्याः वैरस्यागमप्रक्रिया द्वेषरचना तां च दधती चन्द्रोदये जाते सति कमलानां मीलनसंभवात्। चूडायाः कोरकैः ग्रथनात्। मुग्धं मनोहरं स्मेरं मन्दहासयुक्तं मुखं यस्याः सा तथोक्ता घना निविडा स्तनयोः तटी यस्याः सा मूर्छाजातास्मिन्सन्समूर्छालः कृशः स चासौ मध्यः कटिभागस्तेन अञ्चिता शोभितेत्यर्थः। काञ्चीपुरीसीमनि काचित् सिद्धान्तप्रतिपादिता देवता मनोवागगोचरा जगन्मोहनस्वरूपसंपदया जगतो मोहकर्त्रीत्यर्थः। कामिनी श्रीकामेश्वरैकाम्रेशे वाञ्छावती विशेषेण जयतीत्यर्थः ॥ १७ ॥

यस्मिन्नम्ब भवत्कटाक्षरजनी मन्देऽपि मन्दस्मित--
ज्योत्स्नासंस्नपिता भवत्यभिमुखी तं प्रत्यहो देहिनम् ॥
द्राक्षामाक्षिकमाधुरीमदभरव्रीडाकरी वैखरी
कामाक्षि स्वयमातनोत्यभिसृतिं वामेक्षणेव क्षणात् ॥ १८ ॥

अन्वयः ॥ हे कामाक्षि ! अम्ब ! मन्दस्मितज्योत्स्नासंस्नपिता भवत्कटाक्षरजनी यस्मिन्मन्देप्यभिमुखी भवति तं मन्दमपि देहिनं प्रत्यहो द्राक्षामाक्षिकमाधुरीमदभरव्रीडाकरी वैखरी वामेक्षणेव क्षणात् स्वयमभिसृतिमातनोतीत्यन्वयः ॥ १८ ॥

टीका ॥ हे कामाक्ष्यम्ब ! भवत्कटाक्ष एव रजनी कीदृशी मन्दस्मितरूपा या ज्योत्स्ना तया संस्नपिता यस्मिन्मन्देपि चेदभिमुखी संमुखी भवति तंमन्ददेहिनं प्रत्यहो इत्याश्चर्यं द्राक्षा च माक्षिकं च द्राक्षामाक्षिके तयोर्या माधुरी मिष्ठता तस्या यो मदो गर्वस्तस्य भरः पूरस्तस्य व्रीडा लज्जा तां करोतीति तथोक्ता वैखरी जिह्वोष्ठतालुमूलकण्ठनासिकाद्युच्चार्यमाणत्रिषष्ठिवर्णसमूहरूपा गद्यपद्यात्मिका सर्वजनकर्णमनोहरा वाणी तव प्रसादात् वामेक्षणेव श्रेष्ठनयनेव रसावेशात्कृतवक्रनयनेव क्षणात् झटिति स्वयं स्वतः पठनश्रवणादिसाधनं विनैवाभिसृतिमातनोति सर्वतः सरणं विस्तारयतीत्यर्थः । वामेक्षणेवेति क्षणादिति स्वयमिति च कथनाद्भगवतीमन्दस्मितयुक्तकृपाकटाक्षपतितं मन्दमपि जनं वामेक्षणापि पुरुषकृतसामाद्युपायान्तरं विनैव कामबाणपीडिता झटिति भजतीति स्फुटं भासते ॥ १८ ॥

कालिन्दीजलकान्तयः स्मितरुचिस्वर्वाहिनीपाथसि
प्रौढध्वान्तरुचः स्फुटाधरमहालौहित्यसंध्योदये ॥
माणिक्योपलकुण्डलांशुशिखिनि व्यामिश्रधूमश्रियः
कल्याणैकभुवः कटाक्षसुषमाः कामाक्षि राजन्ति ते ॥ १९ ॥

अन्वयः ॥ स्मितरुचिस्वर्वाहिनीपाथसि कालिन्दीजलकान्तयः स्फुटाधरमहालौहित्यसंध्योदये प्रौढध्वान्तरुचः माणिक्योपलकुण्डलांशुशिखिनि व्यामिश्रधूमश्रियः कल्याणैकभुवः हे कामाक्षि ! ते तव कटाक्षसुषमाः राजन्तीत्यन्वयः ॥ १९ ॥

टीका ॥ हे कामाक्षि ! स्मितस्य या रुचिः सैव स्वर्वाहिनीपाथस्तस्मिन् स्मितरुचिगङ्गाजले कालिन्द्या यमुनाया जलानां कान्तय इव कान्तयो यासां तास्तथाभूताः स्फुटं प्रकटमधरस्य महालौहित्यमत्यरुणता तदेव संध्याया उदयस्तस्मिन् अधरकान्तिसंध्योदये प्रौढाश्च ते ध्वान्ता अन्धकाराश्च तथोक्तास्तेषां इव रुचो दीप्तयो यासां ताः तथाविधाः प्रौढान्धकारदीप्तयः माणिक्यमयानां कुण्डलानां योंशुः किरणः जातित्वादेकवचनम् । स एव शिख्य-

गिनस्तस्मिन्विशेषेण समन्तान्मिश्रो मिलितश्चासौ धूमश्च तथोक्तस्तस्येव श्रियः शोभाः यासां तास्तथोक्ताः कुण्डलांश्चग्निमिलितधूमस्येव शोभा इत्यर्थः कल्याणानां उदयमङ्गलैश्वर्यमोक्षाणां एका भूमयो जन्मस्थानानीत्यर्थः ईदृश्यस्ते तव कटाक्षस्य सुषमाः शोभा राजन्ति दीप्यन्त इत्यर्थः ॥ १९ ॥

कलकलरणत्कांची काञ्ची विभूषणमालिका
कचभरलसच्चंद्रा चंद्रावतंससधर्मिणी ।
कविकुलगिरः श्रावं श्रावं मिलत्पुलकाङ्कुरा
विरचितशिरःकम्पा कम्पातटे परिशोभते ॥ २० ॥

अन्वयः ॥ कलकलरणत्कांची काञ्चीविभूषणमालिका कचभरलसच्चंद्रा चंद्रावतंससधर्मिणी कविकुलगिरः श्रावं२ मिलत् पुलकांकुरा विरचितशिरःकम्पा कम्पातटे परिशोभत इत्यन्वयः ॥ २० ॥

टीका ॥ कलकल इति रणंती शब्दायमाना कांची कटिमेखला यस्याः सा रमणीयशब्दायमानकटिमेखलावतीत्यर्थः । कांचीपुर्या विभूषणानां मालिका काञ्चीपुर्या आभरणमालापरमशोभाप्रदेत्यर्थः । कचानां यो भरो भारस्तत्र लसन्दीप्यमानश्चंद्रो यस्याः सा विलसचंद्रचूडेत्यर्थः । चन्द्रोवतंसे मुकुटे यस्य स तेन समानो धर्मोऽस्या अस्तीति सा तादृशी शिवसमानधर्मिणीत्यर्थः । परशिवसमानव्यसनिनीति सौंदर्यलहर्याः । कवीनां कुलं समूहो वंशो वा तस्य गिरः कविकुलगिरः श्रावंश्रावं श्रुत्वा२ मिलंतःपुलकरूपाअंकुरा उत्थितरोमांकुरा हर्षितास्त्वचो वा यस्याः सा कविसमूहगिरः पुनःपुनःश्रुत्वा२जातरोमांचेत्यर्थः । कवीनां स्वभक्तानां काव्यभावनापरिपक्वबुद्धीनां गिरः श्रुत्वा२ तदनुभूतार्थविशेषेण रचितः शिरसः कंपो रसोपलब्ध्या यया सा कृतशिरःकंपा कंपानामनद्यास्तटे परिशोभते समंताद्भातीत्यर्थः ॥ हरिणीछंदः । एकोनचत्वारिंशच्छ्लोकान्तम् ॥ २० ॥

सरसवचसां वीची नीचीभवन्मधुमाधुरी
भरितभुवना कीर्तिर्मूर्तिर्मनोभवजित्वरी ॥
जननि मनसो योग्यं भोग्यं नृणां तव जायते
कथमिव विना काञ्चीभूषे कटाक्षतरङ्गितम् ॥ २१ ॥

अन्वयः ॥ हे काञ्चीभूषे! हे जननि! नीचीभवन्मधुमाधुरी सरसवचसां वीची भरितभुवना कीर्त्तिर्मनोभवजित्वरी मूर्त्तिर्मनसो योग्यं भोग्यं नृणां तव कटाक्षतरङ्गितं विना कथमिव जायत इत्यन्वयः ॥ २१ ॥

टीका ॥ हे काञ्चीभूषे ! हे जननि ! रसेन सह वर्त्तमानानि सरसानि यानि वचांसि

तेषां वीची तरङ्गः कीदृशी वीची नीचीभवन्ती मधूनां माधुरी यस्याः सा तथोक्ता भरितं भुवनं यया सा भरितभुवना कीर्त्तिर्दिगन्तव्यापि यशः मनोभवं जेतुं शीला सा मनोभवजित्वरी मूर्त्तिः मदनसौन्दर्यहारि शरीरं मनसो योग्यं भोग्यं स्वेच्छानुकूलस्रक्चन्दनमाल्याभरणवसनपानभक्ष्य-भोज्यवराङ्गनारत्यादिरिन्द्रियार्थमात्रपदार्थ इत्यर्थः । तव कटाक्षस्य तरङ्गितं विलसितं विना कथमिव केन प्रकारेण जायते उत्पद्यते अपि तु नैवोत्पद्यते पूर्वोक्तं सर्वं तव कृपाकटाक्षावलोकनादेव भवतीति भावः ॥ २१ ॥

भ्रमरितसरित्पूरे नीलोत्पलप्रभयाऽऽभया
नतजनतमःखण्डी तुण्डीरसीम्नि विजृम्भते ॥
अचलतपसामेकः पाकः प्रसूनशरासन
प्रतिभटमनोहारी नारीकुलैकशिखामणिः ॥ २२ ॥

अन्वयः ॥ नतजनतमःखण्डी अचलतपसामेकः पाकः प्रसूनशरासनप्रतिभटमनोहारी नारीकुलैकशिखामणिः भ्रमरितसरित्पूरे नीलोत्पलप्रभया भया तुण्डीरसीम्नि विजृम्भत इत्यन्वयः ॥ २२ ॥

टीका ॥ नताश्च ते जनाश्च नतजनास्तेषां यानि तमांसि नतजनतमांसि तानि खण्डयतीति तथोक्तः । अचलतपसामेकः पाकः अचलस्य हिमगिरेः बहुविधानां तपसामद्वयमनिर्वाच्यं वा फलम् । यद्वा न चलति कदाचिदपीत्यचलः परशिवस्तस्य तपसामेकः पाकोऽनन्यफलं इदमेवैकं फलमित्यर्थः । प्रसूनमयं शरासनं धनुर्यस्य स प्रसूनशरासनः कामस्तस्य यः प्रतिभटः प्रतियोद्धा शिवः तस्य मनोहारी सरस्वत्यादिनारीणां कुलस्य एकशिखामणिः सर्वनारीमस्तकभूषणभूता श्रीमतीत्यर्थः । भ्रमरिता या सरित्तस्याः पूरे नीलोत्पलानामिव प्रभा यस्याः सा तया आसमन्तात् भातीत्याभा तया आभया तुण्डीराख्यदेशविशेषस्तस्य सीमायां विजृम्भते प्रकाशत इत्यर्थः । भ्रमरितसरित्पूरे इति तुण्डीरसीम्नीत्यस्य विशेषणं वा ॥ २२ ॥

मधुरवचसो मन्दस्मेरा मतङ्गजगामिन—
स्तरुणिमजुषस्तापिच्छाभास्तमःपरिपन्थिनः ॥
कुचभरनताः कुर्युर्भद्रं कुरङ्गविलोचनाः
कलितकरुणाः काञ्चीभाजः कपालिमहोत्सवाः ॥ २३ ॥

अन्वयः ॥ श्रीमत्परदेवतायाः सर्वरूपत्वात्क्वचित्स्त्रीलिङ्गनिर्देशेन कुत्रापि नपुंसकेन कुत्रापि पुल्लिङ्गनिर्देशेन च वर्णनम् । अत्र च पूर्ववत्पुल्लिङ्गविशेषणनिर्देशेन स्तौति । सर्वाणि प्रथमाबहुवचनान्तानि पदानि महोत्सवाः इत्यस्य विशेषणानि ते भद्रं कुर्युरस्माकमित्यन्वयः ॥ २४ ॥

टीका ॥ मधुराणि वचांसि येषां ते तथा मन्दस्मेरा मन्दहासा येषां ते तथाभूता मन्दहासवन्त इत्यर्थः । मतङ्गज इव गच्छन्तीत्येवं शीलास्ते तथाभूताः तरुणिमानं जुषन्ते इति तथोक्ताः तापिच्छानामाभा इवाभा येषां ते तादृशाः तमसां परिपन्थिनो नाशकर्त्तारः कुचानां यो भरो भारस्तेन नता नम्रीभूताः कुरङ्गाणां विलोचनानीव विलोचनानि येषां ते तथाभूताः कलिता स्वीकृता करुणा यैस्ते तादृशाः काञ्चीपुरीं भजन्ते ते तथा कपालोस्यास्तीति कपाली परशिवः तस्य महोत्सवा अस्माकं भद्रं कल्याणं कुर्युः विदध्युरित्यर्थः ॥ २३ ॥

कमलसुषमाकक्षारोहे विचक्षणवीक्षणाः
कुमुदसुकृतक्रीडाचूडालकुन्तलबन्धुराः ॥
रुचिररुचिभिस्तापिच्छश्रीप्रपञ्चनचञ्चवः
पुरविजयिनः कम्पातीरे स्फुरन्ति मनोरथाः ॥ २४ ॥

अन्वयः ॥ कमलसुषमाकक्षारोहे विचक्षणवीक्षणाः कुमुदसुकृतक्रीडाचूडालकुन्तलबन्धुराः रुचिररुचिभिस्तापिच्छश्रीप्रपञ्चनचञ्चवः पुरविजयिनो मनोरथाः कम्पातीरे स्फुरन्तीत्यन्वयः ॥ २४ ॥

टीका ॥ कमलानां याः सुषमाः शोभास्तासां कक्षा तस्यां आरोहे आरोहणे विचक्षणे वीक्षणे नयने येषां ते तथोक्ताः कुमुदानां यत्सुकृतं कारणकार्ययोरभेदाचन्द्रः तदेव क्रीडाचूडालः मुकुटः तेन युक्तैः कुन्तलैः कचैर्बन्धुराः श्रेष्ठा रुचिरा मनोहरा रुचयो दीप्तयो रुचिररुचयस्ताभिः तापिच्छानां तमालवृक्षाणां मयूरपुच्छानां वा श्रीः शोभा तस्याः प्रकर्षेण वञ्चनेन च्छलनेन चञ्चवो वित्ताः विचक्षणाः "प्रपञ्चनचञ्चवः" इति पाठे प्रपञ्चनेन विस्तारेण वित्ताः पुरविजयिनः शिवस्य कम्पातीरे मनोरथा मनोऽभिलाषाः स्फुरन्ति प्रकाशन्त इत्यर्थः ॥ २४ ॥

कलितरतयः काञ्चीलीलाविधौ कविमण्डली–
वचनलहरीवासन्तीनां वसन्तविभूतयः ।
कुशलविधये भूयासुर्मे कुरङ्गविलोचनाः
कुसुमविशिखारातेरक्ष्णां कुतूहलविभ्रमाः ॥ २५ ॥

अन्वयः ॥ काञ्चीलीलाविधौ कलितरतयः कविमण्डलीवचनलहरीवासन्तीनां वसन्तविभूतयः कुरङ्गविलोचनाः कुसुमविशिखारातेरक्ष्णां कुतूहलविभ्रमाः मे मम कुशलविधये भूयासुरित्यन्वयः ॥ २५ ॥

टीका ॥ काञ्च्या लीलाया विधौ विधानार्थे कलिता रचिता रतयः प्रीतयो यैस्ते कविमं-

ण्डलीनां वचनानां लहर्यः परंपरास्ता एव वसन्ते भवा वासन्त्यो माधव्यादयो लतास्तासां वसन्तस्य ऋतोर्विभूतयः ऐश्वर्याणि येषु ते तथोक्ताः। यद्वा कुरङ्गाणां मृगाणां विलोचनानीव विलोचनानि नेत्राणि येषां ते तथोक्ताः कुसुमान्येव विशिखा बाणा यस्य स तादृशः कामस्तस्याराते: शिवस्य अक्ष्णोर्नेत्रयोः कुतूहलजनका विभ्रमा विलासाः शृङ्गाररसस्य ललितचेष्टारूपा मे मम कुशलविषये अभ्युदयविधानाय भूयासुर्भवन्त्वित्यर्थः ॥ २९ ॥

कवलिततमःखण्डास्तुण्डीरमण्डलमण्डनाः
सरसिजवनीसंतानानामरुंतुदशेखराः ॥
नयनसरणेर्नेदीयांसः कदा नु भवन्ति मे
तरुणजलदश्यामाः शंभोस्तपःफलविभ्रमाः ॥ २६ ॥

अन्वयः ॥ कवलिततमःखण्डास्तुण्डीरमण्डलमण्डनाः सरसिजवनीसंतानानामरुंतुदशेखराः तरुणजलदश्यामाः शंभोस्तपःफलविभ्रमाः नयनसरणेर्नेदीयांसो नु कदा मे भवन्तीत्यन्वयः ॥ २६ ॥

टीका ॥ कवलिताः कवलीकृताः तमसां खण्डाः शकलानि यैस्ते तथोक्ताः तुण्डीराख्यदेशमण्डलस्य मण्डना अलंकाररूपाः सरसिजानां कमलानां वनमेव वनी दिनविकाशिकमलसमूहस्तस्याः संतानानां विस्ताराणामरुंतुदः अरूंषि मर्माणि तुदति पीडयतीति तथोक्तः चन्द्रः स शेखरे येषां ते तथोक्ताः तरुणाश्च ते जलदाश्च तथोक्तास्तद्वच्छ्यामाः शंभोस्तपसां फलरूपाः फलस्य वा विभ्रमा विलासाः मे मम नयनसरणेर्नेत्रमार्गस्य नेदीयांसोऽतिनिकटवर्तिनो नु वितर्के कदा भवन्ति भविष्यन्तीति सोत्कण्ठोक्तिः कवेः। वर्त्तमानसामीप्ये भविष्यति लट् ॥ २६ ॥

अचरममिषुं दीनं मीनध्वजस्य मुखश्रिया
सरसिजभुवो यानं म्लानं गतेन च मञ्जुना ॥
त्रिदशसदसामन्नं खिन्नं गिरा च वितन्वती
तिलकयति सा कम्पातीरं त्रिलोचनसुन्दरी ॥ २७ ॥

अन्वयः ॥ मीनध्वजस्य अचरममिषुं मुखश्रिया दीनं वितन्वती सरसिजभुवो यानं मञ्जुना गतेन म्लानं वितन्वती, त्रिदशसदसामन्नं गिरा खिन्नं वितन्वती सा त्रिलोचनसुन्दरी कम्पातीरं तिलकयतीत्यन्वयः ॥ २७ ॥

टीका ॥ मुखस्य शोभया मनिध्वजस्य कामस्य अचरममिषुं प्रथमबाणं कमलरूपं दीनं गतच्छविं विशेषेण तन्वती विस्तारयन्ती अर्थात् श्रीमुखशोभया पङ्कजशोभाहारिणी श्रीमती।

मञ्जुना मनोहरेण गतेन गमनेन सरसिजभुवो ब्रह्मणो यानं हंसं म्लानं वितन्वती । त्रिदशसदसां देवसमानामन्नं पीयूषं गिरा वाण्या खिन्नं क्षीणं तुच्छमित्यर्थः । वितन्वती सा त्रिलोचनसुन्दरी शिवरमणी कम्पानदीतीरं तिलकयति शोभितं करोतीत्यर्थः ॥ २७ ॥

जननि भुवने चङ्क्रम्येऽहं कियन्तमनेहसं
कुपुरुषकरभ्रष्टैर्दुष्टैर्धनैरुदरंभरिः ॥
तरुणकरुणे तन्द्राशून्ये तरङ्गय लोचने
नमति मयि ते किंचित्काञ्चीपुरीमणिदीपिके ॥ २८ ॥

अन्वयः ॥ हे जननि ! हे काञ्चीपुरीमणिदीपिके ! हे तरुणकरुणे ! भुवने कियन्तमनेहसं कुपुरुषकरभ्रष्टैर्दुष्टैर्धनैरुदरंभरिरहं चंक्रम्ये । अतो दीने नमति मयि ते तव तन्द्राशून्ये लोचने किंचित्तरङ्गयेत्यन्वयः । त्वमिति शेषः ॥ २८ ॥

टीका ॥ हे जननि हे काञ्चीपुर्या मणिरूपदीपिके ! काञ्चीपुरीद्योतनकारिणि ! तरुणा करुणा यस्याः सा तत्संबुद्धौ हे तथोक्ते ! भुवने कियन्तमनेहसं कालं अतिशयेन पुनः पुनर्वा क्रामामि भ्रमामि इति चंक्रम्ये कुपुरुषाणां करैर्हस्तैर्भ्रष्टैर्विगलितैर्दुष्टैर्दूषितैरन्यायोपार्जितैर्धनैरुदरंभरिरुदरपोषकोऽहं अतो दीने दुःखिते तव श्रीमच्चरणयोर्नमति मयि मद्विषये तन्द्राशून्ये अनालस्ये ते तव लोचने किंचित्तरङ्गय प्रेरय अर्थात् कृपया मां सहर्षं पुनः पुनर्विलोकयेत्यर्थः । त्वमिति शेषः ॥ २८ ॥

मुनिजनमनःपेटीरत्नं स्फुरत्करुणानटी
विहरणकलागेहं काञ्चीपुरीमणिभूषणम् ॥
जगति महतो मोहव्याधेर्नृणां परमौषधं
पुरहरदृशां साफल्यं मे पुरः परिजृम्भताम् ॥ २९ ॥

अन्वयः ॥ मुनिजनमनःपेटीरत्नं स्फुरत्करुणानटी विहरणकलागेहं काञ्चीपुरीमणिभूषणं जगति नृणां महतो मोहव्याधेः परमौषधं पुरहरदृशां साफल्यं मे पुरः परिजृम्भतामित्यन्वयः ॥ २९ ॥

टीका ॥ मुनिजनानां मन एव पेटी मञ्जूषा तस्या रत्नं यत्नेन मुनिमनसि स्थेयम् । मुनिजनमनोमञ्जूषा रत्नरूपा । स्फुरन्ती चेष्टन्ती करुणैव नटी तस्या विहरणस्य क्रीडनस्य कलानां ऐश्वर्याणां सामर्थ्यानां रचनानां वा गेहं गृहं श्रीमतीस्वरूपम् । करुणारूपनटी विहारक्रीडावासा । अत्रस्था करुणा भक्तानां विविधमनोरथदाने विविधरूपवेषं चेष्टां च धारयन्ती-

त्यर्थः । काञ्चीपुर्य्या मणिरूपं भूषणं अतिशोभादायककांचीपुरीशोभारूपेत्यर्थः । जगति संसारे नृणां महतो मोहव्याधेः अज्ञानरूपमहारोगस्य परमौषधं इदमेकमेव श्रेष्ठमौषधं महाज्ञानातंकौषधीरूपा । पुरहरदृशां शिवनेत्राणां असीमसौन्दर्येणात्यन्ताह्लादप्रदत्वात् । फलेन सह वर्तमानं सफलं तस्य भावः साफल्यं शिवनेत्रसफलकारिणी श्रीकामाक्षी मे मम पुरोग्रे परिसमन्ताज्जृम्भतामभितः प्रकाशतामित्यर्थः । कृपयेति शेषः ॥ २९ ॥

मुनिजनमनोधाम्ने धाम्ने वचोमयजाह्नवी–
हिमगिरितटप्राग्भारायाक्षराय परात्मने ॥
विहरणजुषे काञ्चीदेशे महेश्वरलोचन–
त्रितयसरसक्रीडासौधाङ्गणाय नमोनमः ॥ ३० ॥

अन्वयः ॥ मुनिजनमनोधाम्ने धाम्ने वचोमयजाह्नवीहिमगिरितटप्राग्भारायाऽक्षराय परात्मने काञ्चीदेशे विहरणजुषे महेश्वरलोचनत्रितयसरसक्रीडासौधाङ्गणाय नमोनम इत्यन्वयः ॥ ३० ॥

टीका ॥ मुनिजनमन एव धाम यत् । यद्वा मुनिजनानां मनसो धाम गृहं यस्य तस्मै धाम्ने तेजसे परप्रकाशायेत्यर्थः । तेजोरूपेण भगवत्यानिगमागमेषु बहुशो वर्णनात् । वचोमयी चासौ जाह्नवी च तथोक्ता तस्या हिमगिरितट इव प्राग्भारः पूर्वधारणं यस्य तस्मै वैखरीवाणीजन्मभूमये आधाररूपाय च "प्राग्भागाय" इति पाठे हिमगिरितटप्राग्भागरूपाय यथा जाह्नव्याः पूर्वप्रचारो हिमगिरौ तदनु च हिमगिरितो जगत्सु तथा सर्ववाणीनां आधाररूपायाः श्रीमत्याः सकाशादेव प्रथमत उत्पत्तिः पश्चात्सर्वत्र प्रचार इति । न क्षरतीत्यक्षरः परमेश्वरः "अक्षरः परमः स्वराट्" इतिश्रुतेः तस्मै, अत एव परात्मने परः परशिव एवात्मा देहो मनः प्राणो जीवश्च यस्य । यद्वा परस्य परशिवस्यात्मा देहो मनः प्राणो जीवश्च यः स तस्मै । काञ्चीदेशे विहरणं विहारं जुषते सेवत इति तथोक्तस्तस्मै । महांश्चासावीश्वरश्च महेश्वरस्तस्य लोचनानां त्रितयस्य रसेन शृङ्गाररसेन "रसो वै सः" इति श्रुतेः । शिवशक्तिसामरस्यस्वरूपात्मकशृङ्गाररसेन युक्ता या क्रीडा खेला तस्याः सौधाङ्गणाय श्रीमत्परमशिवत्रिनेत्राणां शृङ्गाराद्वैतरसखेलनप्रासादाङ्गणाय नमोनमः अनेकविधाराधनाशक्तस्य मम तस्मै मुहुर्नमोस्तु । इत्यनेनैवाहं कृतार्थः स्यामिति भावः ॥ ३० ॥

मरकतरुचां प्रत्यादेशं महेश्वरचक्षुषा–
मम्तृतलहरीपूरं पारं भवाख्यपयोनिधेः ॥

सुचरितफलं काञ्चीभाजो जनस्य पचेलिमं
हिमशिखरिणो वंशस्यैकं वतंसमुपास्महे ॥ ३१ ॥

अन्वयः ॥ मरकतरुचां प्रत्यादेशंम हेश्वरचक्षुषाममृतलहरीपूरं भवाख्यपयोनिधेः पारं काञ्चीभाजो जनस्य पचेलिमं सुचरितफलं हिमशिखरिणो वंशस्यैकं वतंसमुपास्महे इत्यन्वयः । वयमिति शेषः ॥ ३१ ॥

टीका ॥ श्यामारूपेण मातङ्गीरूपेण वा स्तौति । मरकतरुचां प्रत्यादेशं तिरस्कर्तारं महेश्वरचक्षुषां शिवनेत्रत्रयाणाममृतलहरीणां रं भवनामकस्याब्धेः संसारसमुद्रस्य पारं उत्तरतटं काञ्चीभाजो जनस्य सुचरितस्य सुकृतस्य पचेलिमं परिपक्वं फलं हिमशिखरिणो हिमाचलस्य वंशस्य एकं अद्वयमवतंसं शेखरं उपास्महे तस्य उपासनां कुर्मो वयमिति शेषः ॥ ३१ ॥

प्रणमनदिनारम्भे कम्पानदीसखि तावके
सरसकवितोन्मेषः पूषा सतां समुदञ्चितः ॥
प्रतिभटमहाप्रौढप्रोद्यत्कवित्वकुमुद्वतीं
नयति तरसा निद्रामुद्रां नगेश्वरकन्यके ॥ ३२ ॥

अन्वयः ॥ हे कम्पानदीसखि ! हे नगेश्वरकन्यके ! सतां तावके प्रणमनदिनारम्भे सरसकवितोन्मेषः पूषा समुदञ्चितः प्रतिभटमहाप्रौढप्रोद्यत्कवित्वकुमुद्वतीं तरसा निद्रामुद्रां नयतीत्यन्वयः ॥ ३२ ॥

टीका ॥ कम्पाया नद्याः हे सखि ! । यद्वा कम्पा नदी सखी यस्याः सा हे तादृशि ! नगानामीश्वरः स्वामी राजेत्यर्थः । तस्य हे कन्यके ! सतां सुकृतिनां तावके प्रणमनमेव दिनस्यारम्भस्तस्मिन् जाते सति रसैर्माधुर्यादिरसैः शृङ्गारादिभिश्च सह वर्त्तमानाः सरसाः " रसो वै स " इति श्रुत्युक्त्या रसः शिवशक्तिसामरस्याख्यो वा तत्प्रतिपादनेन सह वर्त्तमाना सरसा सा चासौ कविता च तथोक्ता सिद्धान्तशास्त्ररूपा तस्या उन्मेष उद्गम उदय इति यावत् । पूषति वर्द्धत इति पूषा सूर्यः अज्ञानतिमिरनाशकत्वात् । सम्यगुदञ्चित उदितः सन् प्रतिभटाः वाग्युद्धकुशलाः चार्वाका नास्तिकाः कुतर्कबुद्धयस्तेषां तेषु वा महच्च तत्प्रौढं च महाप्रौढं प्रबलं यत्प्रोद्यतं प्रकाशमानं कवित्वं महाप्रौढप्रोद्यत्कवित्वं तदेव कुमुद्वती रजनीविकाशिकमलिनी तां निद्रामुद्रां तरसा नयति संकुचिताकारां हीनप्रभां जडीभूतां शीघ्रं करोति । तव चरणप्रणामी कविः स्वमतस्थापनरूपजयप्रभावेण स्वकवितासौन्दर्येण च प्रतिवादिगिरः गतशोभाः सन्निरुद्धाश्च करोतीत्यर्थः ॥ ३२ ॥

शमितजडिमारम्भा कम्पातटीनिकटेचरी
निहतदुरितस्तोमा सोमार्द्धमुद्रितकुन्तला ॥

फलितसुमनोवाञ्छा पाञ्चायुधी परदेवता
सफलयतु मे नेत्रे गोत्रेश्वरप्रियनन्दिनी ॥ ३३ ॥

अन्वयः ॥ शमितजाडिमारम्भा कम्पातटीनिकटेचरी निहतदुरितस्तोमा सोमार्द्धमुद्रितकुन्तला फलितसुमनोवाञ्छा पाञ्चायुधी परदेवता गोत्रेश्वरप्रियनन्दिनी मे नेत्रे सफलयतु इत्यन्वयः ॥ ३३

टीका ॥ शमितो नाशितो जडिम्न आरम्भो यया सा तथाविधा कम्पातट्या निकटेचरी समीपचरी भक्तजनानां निहितो दूरीकृतो दुरितानां पापानां दुःखानां च स्तोमः समूहो यया सा सोमस्यार्द्धं तेन मुद्रिता अङ्किताः कुन्तलाः केशाः यस्याः सा फलिता सुमनसां सतां देवानां च वाञ्छा यया सा । यद्वा फलिता चासौ सुमनसां भक्तानां वाञ्छाभिलाषा तथोक्ता निजजनफलितवाञ्छारूपेत्यर्थः । पञ्चायुधस्य कामस्येयं पाञ्चायुधी श्रेष्ठा देवता । यद्वा पाञ्चायुधी कामराजविद्यारूपा परा पराम्बा चासौ देवता च तादृशी शिवशक्त्यैक्यस्वरूपिणी बिंदुयुग्व्योमामृतभुवनपिंडैकाक्षरमंत्ररूपा । यद्वा सर्वेभ्यः षट्त्रिंशत्तत्त्वेभ्यः परा अग्र एव कारुणरूपेण वर्त्तमाना सा चासौ देवता च तथोक्ता द्योतनस्वभावेत्यर्थः । गोत्राः पर्वतास्तेषामीश्वरो हिमाचलस्तस्य प्रिया चासौ नन्दिना पुत्री च तथोक्ता मे मम नेत्रे सफलयतु दर्शनदानरूपफलेन सहैकीकुरुतामित्यर्थः ॥ ३३ ॥

मम तु धिषणा पीड्या जाड्यातिरेक कथं त्वया
कुमुदसुषमामैत्रीपात्रीवतंसितकुन्तलाम् ॥
जगति शमितस्तम्भां कम्पानदीनिलयामसौ
श्रयति हि गलत्चन्द्राचन्द्रावतंससधर्मिणीम् ॥ ३४ ॥

अन्वयः ॥ हे जाड्यातिरेक ! मम धिषणा त्वया कथं पीड्या, असौ गलत्चन्द्रा कुमुदसुषमामैत्रीपात्रीवतंसितकुन्तलां शमितस्तम्भां कम्पानदीनिलयां चन्द्रावतंससधर्मिणीं जगति हि श्रयतीत्यन्वयः ॥ ३४ ॥

टीका ॥ हे जाड्यातिरेक ! हे जाड्याधिक्य ! मम धिषणा बुद्धिस्त्वया केन प्रकारेण पीडयितुं योग्या कथं कुतःपीड्या यतः असौ गलत्चन्द्रा बुद्धिस्तु कुमुदानां याः सुषमास्ताभिर्या मैत्री तस्या यः पात्रीभूतश्चन्द्रः सोवतंसितो मुकुटतया कृतः कुन्तलेषु यया सा तां, शमितः स्तम्भो जाड्यं यया सा तां कम्पानद्याः समीपे तीरे निलयो यस्याः सा तां चन्द्रावतंसस्य श्रीशिवस्य सधर्मिणीं समानधर्मिणीम् "परशिवसमानव्यसनिनीम्" इति श्रीमच्छंकरभगवत्पूज्यपादोक्तेः । जगति हीति निश्चयेन श्रयति आश्रयति । तत्त्वया ज्ञायते न वा ? एतत्पीडादानोद्यमेन त्वमेव नाशं गमिष्यसीति भावः ॥ ३४ ॥

परिमलपरीपाकोद्रेकं पयोमुचि काञ्चने
शिखरिणि पुनर्द्वैधीभावं शशिन्यरुणातपम् ।
अपि च जनयन्कम्बोर्लक्ष्मीमनम्बुनि कोऽप्यसौ
कुसुमधनुषः काञ्चीदेशे चकास्ति पराक्रमः ॥ ३५ ॥

अन्वयः ॥ पयोमुचि परिमलपरीपाकोद्रेकं जनयन् काञ्चने शिखरिणि पुनर्द्वैधीभावं जनयन् शशिन्यरुणातपं जनयन् अपि च अनम्बुनि कम्बोर्लक्ष्मीं जनयन्काञ्चीदेशे कुसुमधनुषः कोष्यसौ पराक्रमश्चकास्ति इत्यन्वयः ॥ ३५ ॥

टीका ॥ श्रीमत्या आश्चर्यरूपेणाङ्गानि वर्णयति । पयांसि मुञ्चतीति पयोमुक् मेघः अतिश्यामस्निग्धत्वात्तत्साधर्म्यावलम्बिनः कुन्तलास्तेषु परिमलानां मृगमदसुरतरुपुष्पादिसुगन्धानां परीपाकः तस्योद्रेकं पूर्णत्वं आधिक्यं वा जनयन् उद्भावयन् इत्यनेनातिश्यामस्निग्धकेशपाश कस्तूरीदेवतरुपुष्पसुगन्ध वर्णनं जातम् । काञ्चने शिखरिणि सुवर्णपर्वते पुनः अद्वैधस्य द्वैधस्य भावः तं द्वैधीभावं जनयन् इत्यनेनातिकठिनमतिपीनमत्युच्चं कुचयोर्युगलमित्युक्तं भवति । सुमेरुपर्वतस्य द्विधात्वं कुचयुगलमित्यर्थः । शशिनि चन्द्रे अरुणातपं अरुणश्चासावातपश्च तथोक्तस्तं जनयन् इत्यनेन शशिरूपे श्रीमुखेऽरुणातपरूपं विम्बोष्ठमित्युक्तं भवति । अपि च न विद्यतेऽम्बु जलं यस्मिन्प्रस्वेदरहितस्थाने कम्बोः शङ्खस्य लक्ष्मीं शोभां जनयन् इत्यनेन स्वेदरहितोतिरम्यः कण्ठो वर्णितो भवति । उपमानग्रहणेनोपमेयग्रहणाद्रूपकातिशयोक्तिः । तल्लक्षणं तु " रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसायतः " इति । कोपि निःसीममहिमशाली अज्ञातानुभावो वा कुसुमधनुषः पुष्पचापस्य कामस्य पराक्रम ऐश्वर्यं बलं साहसं काञ्चीदेशे चकास्ति प्रकाशत इत्यर्थः ॥ ३५ ॥

पुरदमयितुर्वामोत्सङ्गस्थलेन रसज्ञया
सरसकविताभाजां काञ्चीपुरोदरसीमया ।
तटपरिसरैर्नीहाराद्रेर्वचोभिरकृत्रिमैः
किमिव न तुलामस्मच्चेतो महेश्वरि गाहते ॥ ३६ ॥

अन्वयः ॥ हे महेश्वरि ! पुरदमयितुर्वामोत्सङ्गस्थलेन सरसकविताभाजां रसज्ञया काञ्चीपुरोदरसीमया अकृत्रिमैर्वचोभिर्नीहाराद्रेस्तटपरिसरैस्तुलामस्मच्चेतः किमिव न गाहते इत्यन्वयः ॥ ३६ ॥

टीका ॥ हे महेश्वरि ! पुरदमयितुः पुरं त्रिपुरासुरं दाम्यतीति तथोक्तस्तस्य श्रीशिवस्य वामोत्सङ्ग एव स्थलं स्थानं तेन, सरसकविताभाजां रसाः शृङ्गारादयो नव, रसा वा । शिवश-

क्तिसामरस्याख्यो वा । स्वेच्छानुकूलनानापदार्थानुभवानन्दरूपरसो वा । यद्वा अर्थचमत्कृतिपदलालित्यानुप्रासयमकध्वनिव्यङ्ग्यलक्षणाश्लेषालङ्कारनायिकाभेदादिकविताचातुर्योद्भवः रसो वा तेन सह वर्तमाना सरसा सा चासौ कविता च तथोक्ता तां भजन्तीति तथाविधास्तेषां मनीषिणां रसज्ञया जिव्हया काञ्चीपुरोदरसीमया काञ्चीपुरस्य उदरसीमा मध्यभूमिस्तया अकृत्रिमैः वचोभिः स्वभावसिद्धैः वेदवाक्यैः नीहाराद्रेः हिमाचलस्य तटपरिसरैः हिमाचलसमीपदेशैः एतैः पूर्वोक्तैः भगवत्याः वासस्थानभूतैः तुलां तुल्यत्वं अस्मच्चेतः किमिव न गाहते कथं न प्राप्नोति; अपि तु प्राप्नोत्वेवेत्यर्थः । एतेषु पूर्ववर्णितेषु भवती निवसति तथा मे चेतस्यपि त्वं वस, मयि मन्देऽतिकरुणावती त्वं भवेति भावः । यद्वा हे मातरहरहस्त्वां ध्यायतो मे चित्तं तवाधिष्ठानं सत्, शिवाङ्कादयो भवतीपीठरूपाः सन्ति तथा मदीयमनस्यपि भवती तिष्ठत्यतो मदीयं चित्तमपि भवतीपीठरूपमेवेत्यर्थः । मामकमिदं तु कथनमात्रं वस्तुतस्तु तावकनिवासमेव । यद्वा साधनसंपन्नस्यापि मम चेतः चञ्चलत्वात्कर्माधीनत्वाच्च किमिव अन्ययानामनेकार्थत्वात्कथमपि केनापि प्रकारेण पूर्वोक्तैः शिवोत्सङ्गादिभिः समानत्वं न प्राप्नोति, अतः करुणावती त्वमेव मदीयचेतसि वासं कुर्वित्यर्थः । इति प्रार्थनापूर्वकः कवेराशय इत्यलम् ॥ ३६ ॥

नयनयुगलीमास्माकीनां कदा नु फलेग्रहीं
विदधति गतौ व्याकुर्वाणा गजेन्द्रचमत्क्रियाम् ॥
मरकतरुचो देहे माहेश्वराः स्तननम्रिताः
सुकृतविभवाः प्राञ्चः काञ्चीवतंसधुरंधराः ॥ ३७ ॥

अन्वयः ॥ गतौ गजेन्द्रचमत्क्रियां व्याकुर्वाणाः देहे च मरकतरुचो व्याकुर्वाणाः स्तननम्रिताः काञ्चीवतंसधुरंधराः प्राञ्चो माहेश्वराः सुकृतविभवा आस्माकीनां नयनयुगलीं फलेग्रहीं नु कदा विदधतीत्यन्वयः ॥ ३७ ॥

टीका ॥ गतौ गमने गजेन्द्रस्य चमत्कृतिं चमत्कारमद्भुतसौन्दर्यं व्याकुर्वाणाः स्फुटीकुर्वन्तो देहे शरीरे च मरकतमणीनां इन्द्रनीलमणीनां रुचो दीप्तीः प्रकटयन्तः स्तनाभ्यां नम्रिता नताः काञ्च्यां ये वतंसाश्च ते धुरंधराः प्रवीणाश्च ते तथोक्ताः काञ्चीमुकुटाश्चातिचतुराः प्राञ्चः प्राचीना महेश्वरस्य परमशिवस्य इमे माहेश्वराः सुकृतानामनेकविधतपसां योगानां वा विभवाः विशेषेण भवन्तीति तथाविधाः ऐश्वर्यसमाधिफलरूपा इत्यर्थः । आस्माकीनां नयनयोर्युगलीं नेत्रद्वयीं फलेग्रहीं सफलां नु इति प्रश्नेऽनुनये वा कदा कस्मिन्काले विदधति करिष्यन्तीत्यर्थः । श्यामारूपाया मातङ्गीरूपाया अस्मिन् श्लोके वर्णनं भाति तथापि लालित्येन वर्णनान्मातङ्गीरूपाया एव वर्णनं भाति ॥ ३७ ॥

मनसिजयशःपारंपर्यं मरन्दझरीभुवां
कविकुलगिरां कन्दं कम्पानदीतटमण्डनम् ॥
मधुरललितं मत्कं चक्षुर्मनीषिमनोहरं
पुरविजयिनः सर्वस्वं तत्पुरस्कुरुते कदा ॥ ३८ ॥

अन्वयः ॥ मनसिजयशःपारंपर्यं मरन्दझरीभुवां कविकुलगिरां कन्दं कम्पानदीतटमण्डनं मधुरललितं मनीषिमनोहरं पुरविजयिनः सर्वस्वं मत्कं चक्षुः कदा पुरस्कुरुत इत्यन्वयः ॥ ३८ ॥

टीका ॥ कामयशसो या परंपरा तस्या भावः पारंपर्यमविच्छिन्नप्रवाहरूपं मरन्दो मकरन्दः कवितारसः तस्य झरी निर्झरणं तस्या भुवो भूमयः । यद्वा मरन्दझरी भवत्याभ्यस्ता मरन्दझरीभुवस्तासां कविकुलगिरां कविसमूहवाणीनां कन्दं कारणं कम्पाया नद्यास्तटस्य मण्डनमलंकृतिः मधुरं मिष्टं वाञ्छितं तल्ललितं सुन्दरं च मधुरललितं वस्तुतस्तु स्वात्मरूपं, तस्य सर्वेषां स्पृहणीयत्वात् मनीषा मननशीला बुद्धिरेषामस्तीति मनीषिणो मुनयस्तेषां मनोहरं पुरविजयिनः श्रीशिवस्य सर्वस्वं समग्रधनं मत्कं मामकं चक्षुः नेत्रं कदा पुरोग्रे कुरुते कदा मे नयनं श्रीमतीस्वरूपदर्शनं करिष्यतीत्यर्थः । वर्तमानसामीप्ये लट् ॥ ३८ ॥

शिथिलिततमोलीलां नीलारविन्दविलोचनां
दहनविलसत्फालां श्रीकामकोटिमुपास्महे ॥
करधृतलसच्छूलां कामारिचित्तमनोहरां
मनसिजकृपालीलां लोलालकामलिकेक्षणाम् ॥ ३९ ॥

अन्वयः ॥ शिथिलिततमोलीलामित्यादिसर्वपदानि द्वितीयैकवचनान्तानि श्रीकामकोटिमित्यस्य विशेषणानि तद्वाच्यामुपास्मह इत्यन्वयः । वयमिति शेषः ॥ ३९ ॥

टीका ॥ स्वरूपसंपदया शिथिलितास्तमसोऽज्ञानस्यान्धकारस्य च लीला यया सा तां नीलारविन्दे इव विलोचने यस्याः सा तां दहनेनाग्निना विलसत्फालं भालं यस्याः सा तां कामारेः श्रीशिवस्य चिन्त्यते स्मर्यते अनेनेतिचित्तं तच्च संकल्पविकल्पवृत्तिमदन्तःकरणं मनश्च चित्तमनसी ते हरतीति चित्तमनोहरा तां कामारिचित्तमनोहरां कामारेश्चित्तं मनसैव हरत्याकर्षतीति तथोक्ता तां मनसि जायत उद्भवतीति मनसिजः कामस्तस्मिन् या कृपा दया तया युक्ता लीला क्रीडा यस्याः तां लोलाश्चलन्तोऽलका मुखसौन्दर्याय कर्णयोरग्रे धृता वक्रीकृताः केशा यस्याः सा तां, अलिके भाले ईक्षणं नेत्रं यस्याः सा तां श्रीकामकोटिं श्रिया युक्तः कामः कोटौ अग्रे यस्याः । यद्वा कामानां कोटयो लावण्ये यस्याः । यद्वा कामाः कामनाः

कोटौ अग्रे देयत्वेन यस्याः । यद्वा कामस्य कोटिर्यस्याः सकाशात् सा । यद्वा कामस्य कोटिः पक्षरूपा । यद्वा कामः कोटिः पक्षो यस्याः सा तामुपास्महे वयमिति शेष इत्यर्थः ॥ ३९ ॥

कलालीलाशाला कविकुलवचःकैरववनी
शरज्ज्योत्स्नाधारा शशधरशिशुश्लाघ्यमुकुटी ॥
पुनीते नः कम्पापुलिनतटसौहार्दतरला
कदा चक्षुर्मार्गं कनकगिरिधानुष्कमहिषी ॥ ४० ॥

अन्वयः ॥ सर्वे प्रथमैकवचनान्ताः शब्दाः कनकगिरिधानुष्कमहिषीत्यस्य विशेषणभूताः तद्वाच्या सा नश्चक्षुर्मार्गं कदा पुनीते इत्यन्वयः ॥ ४० ॥

टीका ॥ कलाश्चातुर्यादिरूपाः ताभिर्युक्ता लीला तस्याः शालाऽऽधारा । यद्वा कलानां अष्टात्रिंशत्संख्याकानां लीलाशाला क्रीडायतनं अग्निरवीन्दुरूपा तेजस्त्रयीमयीं विद्येत्युक्तत्वा-दग्नेर्दशयमित्यादिवर्णात्मिका धूम्रार्चिराद्या भानोर्द्वादशकं भमित्याद्यक्षरोत्थाः तपिन्याद्याः चन्द्र-स्य षोडशाकारादिषोडशस्वरसंभवा अमृताद्यास्तासामष्टात्रिंशत्संख्याकानां कलानां लीलाशा-लाऽऽधारभूता रमणस्थानं तेजस्त्रयात्मिकेत्यर्थः । यद्वा कामाकर्षिण्याद्याः सर्वाशापरिपूरकषोड-शदलात्मकचक्रस्थाः षोडशसंख्याका द्वितीयावरणदेवता गुप्तयोगिन्यः श्रीमत्या लीलारूपा-स्तासां किरणरूपत्वात् शालाऽऽश्रयणीयस्थानं श्रीमती बिम्बरूपा । यद्वा कलालीलाशाला कलानां जीवरूपाणां लीलया युक्तं स्थानं सर्वेषामात्मरूप आधारस्तेनात्मचिद्रूपा । यद्वा कामस्य षोडशकलास्तासां लीलास्थानम् । यद्वा षोडशी चन्द्रस्य कला नित्याखण्डरूपा सादाख्या तस्याः सकाशात् अमृतामानदाद्याः सर्वाः कलाः संभवन्ति तस्यामेव लीयन्ते तेन च संभवसं हाररूपा लीला तस्याः शालाऽऽश्रयरूपा । यद्वा ब्रह्मपञ्चकस्य विधिहरिहरेश्वरसदाशिवाख्यस्य परदेवतामञ्चचरणचतुष्टयफलकरूपस्य सृष्टिस्थितिसंहारतिरोधानानुग्रहकारकस्य षण्णवत्यः क-लास्ताभिर्या सृष्ट्यादिरूपा लीला तस्याः शाला आश्रयः देवतापञ्चकरूपा तेन पञ्चब्रह्मस्व-रूपिणी "रहस्यनामसाहस्रे पञ्चब्रह्मस्वरूपिणी" इति नामपाठात् । यद्वा कला सामर्थ्य-मैश्वर्यं तेन शक्तयो गृह्यन्ते । "शक्तयोस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः" इति वचनात् । कलाः समस्तविश्वरूपास्तासां लीलाः क्रीडा अनेकविधास्तासां शालाऽधिष्ठानसत्ता । यद्वा कला परमे-श्वरस्य सामर्थ्यं ऐश्वर्यं विभूतिस्तेजो वा ताभिर्युक्ता लीलास्तासामाधाररूपा । यद्वा कलाश्चतुः-षष्टिसंख्याका नृत्यगानादयः श्रीमद्विष्णुभागवतोक्तास्ताभिर्युक्ता लीलास्ता एव वा लीलास्तासां शाला । यद्वा कला चित्कला तस्या लीला क्रीडा जगत्सृष्टिरक्षणलयरूपा तस्याः शाला

आधाररूपपराशिवरूपेत्यर्थः । यद्वा कलानां अवताररूपाणां लीला महिषासुरादिवधेन देवराजराज्यप्रदानधर्मसंस्थापनादिरूपा तस्या आधारभूता या सा तथोक्ता कविकुलवचांस्येव कैरवाणि चन्द्रविकाशिकमलानि तेषां वन्याः समूहस्य विकाशने शरज्ज्योत्स्नाधारा शरदृतुसंभवचन्द्रिकाप्रवाहरूपेत्यर्थः । कविकुलगिरां गद्यपद्यमयीनां धर्मादिदायिनीनां वा उद्भाविनीत्यर्थः । शशधरशिशुर्बालचन्द्रः शुक्लपक्षस्य द्वितीयाया अष्टम्या वा तेन श्लाघ्या शोभना मुकुटी यस्याः सा । यद्वा शशधरशिशुरेव श्लाघ्यो लोकवन्द्योऽङ्गीकरणान्मुकुट्यां यस्याः सा कम्पायाः पुलिनं तीरं तस्य तटं समीपस्थानं तस्मिन्सौहार्दं स्नेहस्तस्मिंस्तरला चपला कनकगिरिरेव धनुस्तद्धारकः कनकगिरिधानुष्कस्तस्य महिषी स एव महिषीरूपो वा । क्रीडार्थमेका परमशिवा एव दंपतिरूपा जाता इत्यर्थः । सा संवित् स्त्रीरूपा नोऽस्माकं चक्षुर्मार्गं कदा पुनीते पवित्रीकरोति । मद्दृष्टिविषया कृपा कदा भविष्यतीत्यर्थः ॥ ४० ॥

नमः स्तान्नम्रेभ्यः स्तनगरिमगर्वेण गुरुणा
दधानेभ्यश्चूडाभरणममृतस्यन्दशिशिरम् ॥
सदा वास्तव्येभ्यः सविधभुवि कम्पाख्यसरितो
यशोव्यापारेभ्यः सुकृतविभवेभ्यः पशुपतेः ॥ ४१ ॥

अन्वयः ॥ गुरुणा स्तनगरिमगर्वेण नम्रेभ्यः अमृतस्यन्दशिशिरं चूडाभरणं दधानेभ्यः कम्पाख्यसरितः सविधभुवि सदा वास्तव्येभ्यः यशोव्यापारेभ्यः पशुपतेः सुकृतविभवेभ्यो नमः स्तात् ॥ ४१ ॥

टीका ॥ स्तनयोर्यो गरिमा गौरवं तस्य यो गर्वस्तेन गुरुणा महता कारणेन भारेण नम्रेभ्यस्तद्युक्तमेव नमनमिति तेभ्योगुरुभक्तेभ्योथवातिभारवाहकेभ्योपि नमनं युक्तमेव अमृतस्यन्देन चन्द्रेण शिशिरं चूडाया आभरणं मुकुटं दधानेभ्यः कम्पाख्यसरितः सविधभुवि निकटदेशे सदा वास्तव्येभ्यो निवासकर्तृभ्यः पशुपतेः यशसां व्यापारेभ्यो भावनाभ्यः क्रियारूपेभ्यः पशुपतेः शिवस्य सुकृतानां योगतपसां विभवेभ्य ऐश्वर्येभ्यो नमः स्तात् नमस्कारो भवत्वित्यर्थः । ममेति शेषः ॥ ४१ ॥

असूयन्ती काचिन्मरकतरुचो नाकिमुकुटी—
कदम्बं चुम्बन्ती चरणनखचन्द्रांशुपटलैः ॥
तमोमुन्द्रां विद्रावयतु मम काञ्चीनिलयना
हरोत्सङ्गश्रीमन्मणिगृहमहादीपकलिका ॥ ४२ ॥

अन्वयः ॥ मरकतरुचोऽसूयन्ती चरणनखचन्द्रांशुपटलैर्नाकिमुकुटीकदम्बं चुम्बन्ती काञ्चीनिलयना हरोत्सङ्गश्रीमन्मणिगृहमहादीपकलिका काचिन्मम तमोमुद्रां विद्रावयतु ॥४२॥

टीका ॥ मरकताः श्याममणय इन्द्रनीलाख्यास्तेषां या रुचो दीप्तयस्ता असूयन्ती निन्दन्ती स्वदेहकान्तिसौन्दर्याधिक्येन ताः धिक्कुर्वन्तीत्यर्थः । चरणयोर्ये नखास्त एव चन्द्रास्तेषां येंशवः किरणास्तेषां पटलैः समूहैर्मण्डलैस्तेजोभिर्वा नाकिनां स्वर्गवासिनां देवानां मुकुट्यो मुकुटास्तासां कदम्बं समूहं चुम्बन्ती स्पृशन्ती काञ्च्यां निलयनं यस्याः सा काचित् असीमगुणगणग्रामा हरस्य य उत्सङ्गः स एव श्रीरस्यास्तीति श्रीमत् तच्च तन्माणिगृहं च प्रकाशशालित्वात्तस्मिन् तस्य वा महती चासौ दीपरूपा कलिका च तथोक्ता महाप्रकाशरूपा हराङ्करूपश्रीमन्मणिगृहं प्रकाशयन्ती भगवती ममापि तमोमुद्रामज्ञानान्धकाराकृतिं विशेषेण द्रावयतु अपसारयतु नाशयत्वित्यर्थः ॥ ४२ ॥

अनाद्यन्ता काचित्स्वजननयनानन्दजननी
निरुन्धाना कान्ति निजरुचिविलासैर्जलमुचाम् ॥
स्मरारेस्तारल्यं मनसि जनयन्ती स्वयमहो
गलत्कम्पाशम्पा परिसरति कम्पापरिसरे ॥ ४३ ॥

अन्वयः ॥ स्वयं अनाद्यन्ता स्वजननयनानन्दजननी निजरुचिविलासैर्जलमुचां कान्ति निरुन्धाना स्मरारेर्मनसि तारल्यं जनयन्ती गलत्कम्पा काचिच्छम्पा कम्पापरिसरे परिसरति ॥ ४३ ॥

टीका ॥ न विद्यते आद्यन्तौ जन्मलयौ यस्याः सा अनादिनिधनेत्यर्थः । साधारण विद्युत्तु साद्यन्ता नयनपीडाप्रदा च, इयं त्वहो स्वस्य आत्मनः जनाः स्वजनाः स्वभक्तास्तेषां यानि नयनानि तेषामानन्दजननी आनन्दोद्भाविनी निजस्वरूपस्य रुचीनां ये विलासा विलसनानि तैरहो आश्चर्यं जलं मुञ्चन्ति ते जलमुचो मेघास्तेषां कान्तिं निरुन्धाना स्तम्भयन्ती लौकिक विद्युन्मेघे लीना भवति । इयं तु तेषां कान्तिमाच्छादयति स्मरारेः कामशत्रोरपि श्रीशिवस्यमनस्यहो आश्चर्यं तारल्यं रतिचापल्यं जनयन्ती गलन्ती द्रवन्ती कम्पा कृपा यस्याः सा तथोक्ता काचिदसंख्याताद्भुतचरित्रतया वाङ्मनसोरतिवर्तिनी शम्पाऽऽनन्दविद्युत् कम्पानद्याः परिसरे निकटे अहो परिसरति परिचलति अन्या चपलाऽऽकाशे मेघोदरे सरति प्रकाशते च इयं भुवि नदीसमीपे अनावरणाऽनैमित्तिकी विचरति सदा प्रकाशते च परिलसतीति पाठे अभितः शोभत इत्यर्थः ॥ ४३ ॥

सुधाडिण्डीरश्रीः स्मितरुचिषु तुण्डीरविषयं
परिष्कुर्वाणासौ परिहसितनीलोत्पलरुचिः ॥

स्तनाभ्यामानम्रा स्तबकयतु मे काङ्क्षिततरुं
दृशामैशानीनां सुकृतफलपांण्डित्यगरिमा ॥ ४४ ॥

अन्वयः ॥ स्मितरुचिपु सुधाडिण्डीरश्रीः तुण्डीरविषयं परिष्कुर्वाणा परिहसितनीलोत्पलरुचिः स्तनाभ्यामानम्रा असौ ऐशानीनां दृशां सुकृतफलपाण्डित्यगरिमा मे कांक्षिततरुं स्तवकयतु ॥ ४४ ॥

टीका ॥ स्मितरुचिपु मन्दहासदीप्तिपु सुधाडिण्डीरश्चन्द्रस्तस्य श्रीरिव श्रीर्यस्याः सा तथोक्ता तुण्डीरनामा विपयो देशस्तं परिष्कुर्वाणा अलंकुर्वाणा परितोऽभितः हसिता नीलोत्पलरुचिर्यया सा स्तनाभ्यामानम्रा आनमिता असौ ईशानस्येमा ऐशान्यस्तासां दृशां दृष्टीनां यानि सुकृतानि तेषां फलं तस्य यत्पाण्डित्यं चातुर्यं तस्य गरिमा महत्तारूपा मे मम काङ्क्षितं मनोरथः तदेव तरुर्वृक्षस्तं स्तवकयतु प्रफुल्लयत्वित्यर्थः ॥ ४४ ॥

कृपाधाराद्रोणी कृपणधिषणानां प्रणमतां
निहन्त्री संतापं निगमसुकुटोत्तंसकलिका ॥
परा काञ्चीलीलापरिचयवती पर्वतसुता
गिरां नीवी देवी गिरिशपरतन्त्रा विजयते ॥ ४५ ॥

अन्वयः ॥ प्रणमतां कृपणधिषणानां कृपाधाराद्रोणी संतापं निहन्त्री निगममुकुटोत्तंसकलिका परा काञ्चीलीलापरिचयवती पर्वतसुता गिरां नीवी देवी गिरिशपरतन्त्रा विजयत इत्यन्वयः ॥ ४५ ॥

टीका ॥ कृपणा धिषणा येषां ते तेषां प्रणमतां सम्यक् त्रिविधं तापं निहन्त्री कृपाया धाराः परंपरास्तासां द्रोणी गुहा निगमानां यानि मुकुटानि तेषां उत्तंसकलिका मुकुटरूपा । यद्वा निगमानां मुकुटस्थानापन्ना उपनिपदस्तासामपि मुकुटरूपा कलिका; ताभिः शिरोवधार्यपादारविन्देत्यर्थः उक्तं च श्रीमद्भगवत्पूज्यपादैः । सौन्दर्यलहर्याम् "श्रुतीनां मूर्द्धानो दधति तव यौ शेखरतया ममाप्येतौ मातः सिरसि दयया धेहि चरणौ । ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः" इति । परा पराम्बा कारणरूपा वा । ब्रह्मादिभ्यः परा वा । शिवशक्तिसामरस्यरूपा शिवशक्तिदण्डिबिन्दुयुक्तो मन्त्रस्तद्रूपा वा शक्तिः । शिवानन्तबिन्दुपिण्डैकाक्षरमन्त्ररूपा पराप्रसादप्रासादपरा मन्त्रदेवतारूपा पराम्बा । अस्या महिमा तन्त्रेषु बहुशः प्रतिपादितः । अत्र वर्णनानुपयोगान्न प्रपञ्च्यते प्रकृतमनुसरामः । काञ्च्यां वा लीला तस्या यः परिचयः संबन्धः संयोगः सोऽस्त्यस्याः सा तादृशी पर्वतसुता पार्वती गिरां वाणीनां नीवी मूलधनं वासवरूपा वा । सर्वा गिर एतस्या एव संभवन्तीत्यर्थः ।

गिरिशः परतन्त्रो वशीकृतो यया गिरिशस्य परतन्त्रा वा सा देवी द्योतनशीला महाप्रकाशरूपिणी विजयते ॥ ४५ ॥

कवित्वश्रीकन्दा सुकृतपरिपाटी हिमगिरे–
र्विधात्री विश्वेषां विषमशरवीरध्वजपटी ॥
सखी कम्पानद्याः पदहसितपाथोजयुगली
पुराणी पायान्नः पुरमथनसाम्राज्यपदवी ॥ ४६ ॥

अन्वयः ॥ कवित्वश्रीकन्दा हिमगिरेः सुकृतपरिपाटी विश्वेषां विधात्री विषमशरवीरध्वजपटी कम्पानद्याः सखी पदहसितपाथोजयुगली पुराणी पुरमथनसाम्राज्यपदवी नोऽस्मान् पायात् ॥ ४६ ॥

टीका ॥ कवेर्भावो कवित्वं तस्य श्रीः शोभा तस्याः कन्दरूपा कविताशोभामूलरूपिणीत्यर्थः । कवेः कृत्यं कवित्वं तच्च श्रीलक्ष्मीश्च कवित्वश्रियौ तयोः कन्दा मूलभूता एतद्द्वयोत्पादिनी श्रीकामाक्षीत्यर्थो वा । सुकविता धनं च यया प्रसन्नया हेतुभूतयोत्पद्यते इति भावः । हिमगिरेः सुकृतानां योगादीनां परिपाटी आनुपूर्वी विश्वेषां सर्वेषां कार्यकारणानां विधात्री कर्त्री उत्पादिकेत्यर्थः विषमशरस्य कामस्य वीरध्वजपटी विजयपताकेत्यर्थः । कम्पानद्याः सखी हितकारिणी तस्यास्तीरे जले च विहरणेन तस्या भूमेस्तज्जलस्य च तीर्थत्वकारिणीत्यर्थः । पद्भ्यां हसिता हास्यास्पदीकृता पाथोजयुगली कमलद्वयी यया सा । पुराणी सनातनी अनवधिककालावलम्बिनी पुरमथनस्य श्रीशिवस्य साम्राज्यपदवी नोऽस्मान् पायात् रक्षत्वित्यर्थः ॥ ४६ ॥

दरिद्राणा मध्ये दरदलिततापिच्छसुषमाः
स्तनाभोगाक्रान्तास्तरुणहरिणाङ्काङ्कितकचाः ॥
हराधीना नानाविबुधमुकुटीचुम्बितपदाः
कदा कम्पातीरे कथय विहरामो गिरिसुते ॥ ४७ ॥

अन्वयः ॥ सर्वाणि पदानि प्रथमाबहुवचनान्तानि स्त्रीलिङ्गानि वयमित्यध्याहृतपदस्य विशेषणानि । हे गिरिसुते ! कम्पातीरे कदा विहराम इत्यन्वयः ॥ ४६ ॥

टीका ॥ हे गिरिसुते ! मध्ये मध्यदेशे दरिद्राणाः क्षीणाः दरदलिता ईषद्विकसिताः तापिच्छास्तमाला मयूरपुच्छानि वा तेषां सुषमा शोभा इव शोभा श्यामकान्तिः नानावर्णकान्तिर्वा यासां ताः नानावर्णरत्नाभरणवसनकज्जलकस्तूरिकासिन्दूरजङ्गालकुङ्कुमकर्पूरादीनां धारणोत्थाभिर्भाभिर्मयूरपिच्छसादृश्यमिति अवगम्यते । स्तनानां आभोगः परिपूर्णत्वं तेनाक्रान्ता आक्रेशिताः, तरुणहरिणाङ्कैर्बालचन्द्रैरङ्किताः केशा यासां तास्तरुणहरिणाङ्काङ्कितकचाः अर्द्धचन्द्रा-

ङ्कितकेशमूला नाना अनेकविधजातिदेवा द्वादशादित्याः१२, एकादशरुद्राः, अष्टौ वसवः८, एकोनपञ्चाशन्मरुद्गणादयो वा तेषां अथवा अनेका विबुधा विशेषेण बुधाः पण्डिताः ज्ञानिनः तेषां या मुकुट्यः मुकुटाः ताभिश्चुम्बितानि पदानि यासां तास्तथाविधाः हर आधीनो यासां तास्तथाभूता ईदृशास्त्वत्किरणरूपास्त्वदाकाराः . वयमपि महाप्रभावशालिन्या तव कृपया त्वत्सारूप्यं प्राप्ताः सन्तः कम्पातीरे कदा विहरामः विहारं कुर्म्मः त्वत्सारूप्य कदा प्राप्स्यामो वयमित्यभिलाषानिवेदनं भक्तस्य कवेः ॥ ४७ ॥

वरीवर्त्तु स्थेमा त्वयि मम गिरां देवि मनसो
नरीनर्त्तु प्रौढा वदनकमले वाक्यलहरी ॥
चरीचर्त्तु प्रज्ञा जननि जडिमा नः परजने
सरीसर्त्तु स्वैरं जननि मयि कामाक्षि करुणा ॥ ४८ ॥

अन्वयः ॥ हे जननि ! हे प्रज्ञाजननि ! हे देवि ! कामाक्षि ! मम गिरां मनसः स्थेमा त्वयि वरीवर्त्तु वदनकमले प्रौढा वाक्यलहरी नरीनर्त्तु नः परजने जडिमा चरीचर्तु । मयि करुणा स्वैरं सरीसर्तु ॥ ४८ ॥

टीका ॥ हे जननि ! हे प्रज्ञाजननि ! हे बुद्ध्युद्भाविनि ! हे देवि प्रकाशकारिणि ! हे कामाक्षि ! कामेश्वरस्य कामस्याऽक्ष्णोर्लोचनयोः स्वसौन्दर्याधिक्येन स्वोपासककामभक्त्या च सदैव भाति या सा तथोक्ता तत्संबुद्धौ हे कामाक्षि ! त्वयि त्वद्विषये मम गिरां मनसश्च स्थेमा स्थैर्यं वरीवर्त्तु अतिशयेन पुनःपुनर्वा वर्त्तताम् । मम वदनकमले प्रौढा तरुणा वाक्यानां लहरी नरीनर्त्तु अतिशयेन पुनःपुनर्वा नृत्यतु । नोऽस्माकं परजने शत्रुजने जडिमा जाड्यं चरीचर्तु अतिशयेन पुनःपुनर्वा चरतु । मयि मूके दीने स्वैरं स्वेच्छं यथा भवति तथा करुणा सरीसर्त्तु अतिशयेन विचरतु इत्यर्थः । तवेति शेषः ॥ ४८ ॥

क्षणं ते कामाक्षि भ्रमरसुषमाशिक्षणगुरुः
कटाक्षव्याक्षेपो मम भवतु मोक्षाय विपदाम् ॥
नरीनर्त्तु स्वैरं वचनलहरी निर्जरपुरी
सरिद्वीचीनीचीकरणपटुरास्ये मम सदा ॥ ४९ ॥

अन्वयः ॥ हे कामाक्षि ! भ्रमरसुषमाशिक्षणगुरुः ते कटाक्षव्याक्षेपः क्षणं मम विपदां मोक्षाय भवतु निर्जरपुरीसरिद्वीचीनीचीकरणपटुर्वचनलहरी स्वैरं सदा ममास्ये नरीनर्तु ॥४९॥

टीका ॥ हे कामाक्षि ! कामाः कामनाः धर्म्मार्थकाममोक्षरूपा देयत्वेनाक्षिषु कामदेवो वाऽक्ष्णोर्यस्यास्तत्संबुद्धौ हे तादृशे ! भ्रमराणां या सुषमाः छव्यस्तासां शिक्षणे गुरुः शिक्षा-

कारकस्ते कटाक्षस्य व्याक्षेप आक्षेपः मम विपदामापदां मोक्षाय दूरीकरणाय क्षणं भवतु । निर्गता जरावस्था येषां ते निर्जरा देवास्तेषां पुरी अमरावती तस्याः सरिन्नदी गङ्गा तस्या वीच्यो लहर्य्यस्तासां नीचीकरणेऽधःकरणे पटुश्चतुरा वचनलहरी वाक्यपरंपरा सदा सर्वस्मिन् काले ममास्ये नरीनर्तु अतिशयेन पुनःपुनर्वा नृत्यतु इत्यर्थः ॥ ४९ ॥

पुरस्तान्मे भूयः प्रशमनपरः स्तान्मम रुजा
प्रचारस्ते कम्पातटविहृतिसंपादिनि दृशोः ॥
इमां याच्ञामूरीकुरु सपदि दूरीकुरु तमः—
परीपाकं मत्कं सपदि बुधलोकं च नय माम् ॥ ५० ॥

अन्वयः ॥ हे कम्पातटविहृतिसंपादिनि ! ते दृशोः प्रचारः मम रुजां प्रशमनपरः स्तात् भूयो मे पुरस्तात् स्तात् इमां याच्ञामूरीकुरु मत्कं तमःपरीपाकं दूरीकुरु सपदि मां बुधलोकं च नय ॥ ५० ॥

टीका ॥ कम्पातटे विहृतिर्विहारस्तस्याः संपादनमस्या अस्तीति सा तत्संबोधनं हे तादृशे ! ते दृशोः प्रचारो नेत्रयोर्विहारः कृपाकटाक्ष इत्यर्थः । मम रुजां प्रशमनपरः स्तात् रोगाणां नाशनपरायणो भवतु । भूयः पुनर्मे मम पुरस्तादग्रे भूयात् सपदि त्वरितं इमां याच्ञां प्रार्थनां ऊरीकुरु अङ्गीकुरु । मत्कं मामकं तमसां अज्ञानानां परीपाकं फलं नरकपातरूपं यद्वाऽनेकविधदुःखरूपं च दूरीकुरु । बुधानां ज्ञानिनां लोकं लोक्यतेऽनेनेति लोको ज्ञानं ते साक्षात्काररूपम् । यद्वा बुधानां लोकः कैवल्यमोक्षः सायुज्यादिमुक्तिचतुष्टयरूपो वा तं मां नय प्रापय । यद्वा बुधश्चासौ लोकः पण्डितजनस्त्वद्भक्तजनः जात्यैकवचनम् । तं मां नय गमय यद्वा बुधैः ज्ञानिभिर्भक्तैर्लोक्यते समाधौ ध्याने वा यः स बुधलोकस्त्वत्पादरूपस्तं मां प्रापयेत्यर्थः ॥ ५० ॥

उदञ्चन्ती काञ्चीनगरनिलये त्वत्करुणया
समृद्धा वाग्धाटी परिहसितमाध्वी कवयताम् ॥
उपादत्ते मारप्रतिभटजटाजूटमुकुटी—
कुटीरोल्लासिन्याः शतमखतटिन्या जयपदम् ॥ ५१ ॥

अन्वयः ॥ हे काञ्चीनगरनिलये ! त्वत्करुणया कवयतां उदञ्चन्ती परिहसितमाध्वी समृद्धा वाग्धाटी मारप्रतिभटजटाजूटमुकुटीकुटीरोल्लासिन्याः शतमखतटिन्या जयपदमुपादत्ते । इत्यन्वयः ॥ ५१ ॥

टीका ॥ काञ्चीनगरे निलयो यस्याः सा तत्संबुद्धौ हे तादृशि ! तव करुणया कवयतां

कवितां कुर्वतां उदञ्चन्ती सर्वपूज्या सर्वश्लाघ्या परिहसिता माध्वी सुधा यया सा समृद्धा संवृद्धा वाचां धाटी रीतिः परिपाटीति यावत्। मारस्य कामस्य कालस्य वा प्रतिभटः शत्रुः शिवस्तस्य जटाजूटेन युक्ता मुकुटी सैव कुटीरः अल्पा कुटी तस्मिन् उल्लासो विलसनमस्या अस्तीति तथा तस्याः शतमखस्येन्द्रस्य नद्या गङ्गाया जयपदं विजयस्थानं उप समीपे आदत्ते उपागृह्णातीत्यर्थः। त्वत्करुणया कवीनां वाणी सुधातः स्वादिष्ठा गङ्गाप्रवाहविजयशालिनी गङ्गात उज्ज्वला दोषरहिता च भवतीत्यर्थः ॥ ५१ ॥

श्रियं विद्यां दद्याज्जननि नमतां कीर्त्तिममितां
सुपुत्रं प्रादत्ते तव जननि कामाक्षि करुणा ॥
त्रिलोक्यामाधिक्यं त्रिपुरपरिपन्थिप्रणयिनि
प्रणामस्त्वत्पादे शमितदुरिते किं न कुरुते ॥ ५२ ॥

अन्वयः॥ हे कामाक्षि ! हे जननि ! हे त्रिपुरपरिपन्थिप्रणयिनि तव करुणा शमितदुरिते त्वत्पादे प्रणामश्च नमतां श्रियं विद्यां च दद्यात् अमितां कीर्तिं सुपुत्रं प्रादत्ते। त्रिलोक्यामाधिक्यं च दद्यात् तव पादे प्रणामः कृपा च किं न कुरुते। शमितदुरिते इति संबोधनं वा ॥ ५२ ॥

टीका ॥ हे कामाक्षि ! हे जननि ! त्रिपुरस्य परिपन्थी शत्रुः शिवस्तस्मिन् प्रणयः स्नेहोऽस्या अस्तीति सा तथा। यद्वा त्रिपुरपरिपन्थिनः स्नेहोऽस्यामस्तीति सा तथा तत्संबुद्धौ हे तादृशे ! शमितं दुरितं दुःखं पापं बन्धनं वा येन स तथोक्तस्तस्मिन्। त्वत्पादे प्रणामः शमितदुरिते इति संबोधनपदं वा। तव करुणा च नमतां प्रणामं कुर्वतां जनानां श्रियं सर्वसंपदं विद्यां ब्रह्मज्ञानरसायनादिचतुर्दशसंख्याकाम्। यद्वा " षडङ्गवेदाश्चत्वारो मीमांसा न्यायमिश्रिता। धर्म्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥ १ ॥ " इति श्लोकोक्तामेवोपवेदसंयुतामष्टादशसंख्याकां वा। जात्यैकवचनम्। यद्वा श्रियं विद्यां श्रीविद्यां अमितां अप्रमितां निःसीमामिति यावत्। कीर्तिं यशः सुपुत्रं प्रादत्ते त्रिलोक्यां स्वर्गमर्त्यपाताले देवमनुष्यनागासुरादिषु सर्वप्रकारेणाधिक्यं च दद्यात् तव चरणप्रणामः करुणचरणयोः प्रणमतां जनानां किं न कुरुते, अपि तु सर्वं भोगं मोक्षं च कुरुत इत्यर्थः ॥ ९२ ॥

मनःस्तम्भं स्तम्भं गमयदुपकम्पं प्रणमतां
सदा लोलं नीलं चिकुरजितलोलम्बनिकरम् ॥
गिरां दूरं स्मेरं धृतशशिकिशोरं पशुपतेः
दृशां योग्यं भोग्यं तुहिनगिरिभाग्यं विजयते ॥ ५३ ॥

अन्वयः ॥ प्रणमतां सदा मनःस्तम्भं स्तम्भं गमयदुपकम्पं लोलं नीलं चिकुरजितलोलम्बनिकरं गिरां दूरं स्मेरं धृतशशिकिशोरं पशुपतेः दृशां योग्यं भोग्यं तुहिनगिरिभाग्यं विजयते ॥ ५३ ॥

टीका ॥ कम्पायाः समीपे इत्युपकम्पं लोलं कम्पानदीतटे चपलं गानक्रीडापरायणमित्यर्थः । प्रणमतां सदा मनसः स्तम्भं जाड्यं स्तम्भं गमयत्प्रापयत् मनोजडीभावं रुन्धदित्यर्थः । नीलं श्यामवर्णं चिकुरैर्मूर्द्धजैर्जितो लोलम्बानां भ्रमराणां निकरः समूहो येन तत् गिरां वाचां दूरमविषयं तत्र तासामप्रचार इत्यर्थः । स्मेरं मन्दहासयुक्तं धृतः शशिकिशोरः बालचन्द्रः शुक्लद्वितीयाया अष्टम्या वा येन तत् पशुपतेः श्रीशिवस्य दृशां दृष्टीनां योग्यं योक्तुमर्हं इति योग्यं भोग्यं भोगार्हम् । अत्र दृशामिति बहुवचनेन श्रीशिवस्य श्रीमत्यामतिस्नेहवशाच्छ्रीमत्या महिम्ना च अग्निनेत्रस्याऽपि क्रौर्यहीनत्वं द्योत्यते । दृशामिति बहुवचनेन यत्र तत्र कथनात् यथा श्रीशिवस्य श्रीमतीरूपेण मोहनं तथा क्रोधजयोपि संभवत्येवेति । अत एव जगत्सर्जने पालने वाऽतिकृपावती श्रीमती अत एतस्या एवाधिक्यम् । "मारणात्तारणमेव वरम्" इति लोके प्रसिद्धम् । अत एव "हैयङ्गवीनहृदया" इति ब्रह्माण्डपुराणे त्रिशत्यां नाम प्रतिपादितम्। श्रीमदाचार्यपूज्यपादा अपि सौन्दर्यलहर्यां षट्चक्रध्यानप्रकरणे स्वाधिष्ठानस्य ध्याने चोक्तवन्तः । "तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं तमीडे संवर्तं जननि महतीं तां च समयाम् । यदालोके लोकान्दहति महति क्रोधकलिले दयार्द्रा दृष्टिस्ते शिशिरमुपचारं रचयति ॥ १ ॥" इत्यलम् । शिवनेत्रात्रयाणां योग्यं भोग्यं इति कथनेन श्रीमत्याः स्वरूपसौन्दर्यदर्शनयोग्याः श्रीशिवस्या दृष्टयस्तासां योग्यं श्रीमतीस्वरूपसौन्दर्यमिति परस्परयोग्यत्वमनयोरेवेति गम्यते । तुहिनगिरेरचलराजेश्वरस्य श्रीहिमगिरेर्भाग्यं धर्मस्य योगस्य च फलं विशेषेण जयति सर्वोत्कृष्टतया वर्त्तत इत्यर्थः ॥ ५३ ॥

घनश्यामान्कामान्तकमहिषि कामाक्षि मधुरान्—
दृशां पातानेतानमृतजलशीताननुपमान् ॥
भवोत्पाते भीते मयि वितर नाथे दृढभवन्—
मनःशोके मूके हिमगिरिपताके करुणया ॥ ५४ ॥

अन्वयः ॥ हे कामान्तकमहिषि ! हे कामाक्षि ! हे नाथे ! हे हिमगिरिपताके ! भवोत्पाते भीते दृढभवन्मनःशोके मयि मूके घनश्यामान् मधुरान् अमृतजलशीतान् अनुपमानेतान्दृशां पातान् करुणया वितर ॥ ५४ ॥

टीका ॥ कामस्यान्तकः श्रीशिवस्तस्य हे महिषि हे शिवपट्टराज्ञि ! हे कामाक्षि ! हे नाथे ! हे ईश्वरि ! हे हिमगिरिविख्यातिकारिणि ! हिमगिरिवंशावतंसे वा घनवच्छ्यामान् मधुरान् मिष्टान्मनोहरानित्यर्थः। अमृतमेव जलं तद्वच्छीतान् अमृतमपि तुच्छं मनसि निधायोक्तम्।

अनुपमान् तत्सदृशस्याप्यस्याभावादुपमाशून्यानेतान् दृशां दृष्टीनां पातान् कटाक्षान् भव-स्योत्पातो यस्य स तस्मिन् । अथवा भवरूपो य उत्पातस्तस्मिन् जाते सति अत एव भीते अत एव दृढो भवन् सन् मनसि शोको यस्य तस्मिन्मयि मूके वाग्विहीने करुणया वितर विस्तारयेत्यर्थः ॥ ५४ ॥

नतानां मन्दानां भवनिगडबन्धाकुलधियां
सदान्ध्यं रुन्धानामभिलषितसंतानलतिकाम् ॥
चरन्तीं कम्पायास्तटभुवि सवित्रीं त्रिजगतां
स्मरामस्तां नित्यं स्मरमथनजीवातुकलिकाम् ॥ ५५ ॥

अन्वयः ॥ मन्दानां भवनिगडबन्धाकुलधियां नतानां सदान्ध्यं रुन्धानामभिलषितसंतानलतिकां कम्पायास्तटभुवि चरन्तीं त्रिजगतां सवित्रीं स्मरमथनजीवातुकलिकां तां नित्यं स्मरामः । वयमिति शेषः ॥ ५५ ॥

टीका ॥ मन्दानां मूर्खाणामत एव भवनिगडबन्धाकुलधियां भवरूपो यो निगडः शृङ्खला तद्रूपो यो बन्धः तेन आकुला व्याकुला क्लेशितेति यावत् । धीर्बुद्धिर्येषां ते तथाभूतास्तेषां नतानां प्रणतानां सदान्ध्यं ज्ञानरूपचक्षुषो नष्टत्वं रुन्धानां स्तभयन्तीम् । ज्ञानचक्षुःप्रदायिनीमित्यर्थः । सद्भक्तानां तु अभिलषितानि वाञ्छितानि कार्याणि तेषां संतानमभितो वर्द्धनं तत्संबन्धिनीं तत्संपादिनीमिति यावत् । लतिकां वल्लीम् । यद्वाऽभिलषितप्रपूरणे संतानलतिकां भक्तवाञ्छितदायिनीं कल्पवल्लीमित्यर्थः । कम्पाया नद्यास्तटस्य तटरूपायां भुवि वा विचरन्तीं विहरन्तीं त्रिजगतां सवित्रीं चतुर्दशभुवनजननीं स्मरस्य मथनं विलोडनं मारणं येन स तस्य श्रीशिवस्य संजीविनी औषधिस्तद्रूपा कलिका ताम् । तया विना शिवस्य प्राणधारणं न संभवतीत्यर्थः । अत्रापि श्रीमदाचार्यपादोक्तिः प्रमाणम् "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि । अतस्त्वामाराध्यां हरिहरविरञ्च्यादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति" इत्यस्य व्याख्यानं तु सौभाग्यवर्द्धिनीलक्ष्मीधर्यादिटीकाभिर्भाष्येण चावगन्तव्यम् ॥ ५५ ॥

परा विद्या हृद्याश्रितमदनविद्या मरकत–
प्रभानीला लीलापरवशितशूलायुधमनाः ।
तमःपूरं दूरं चरणनतपौरंदरपुरी–
मृगाक्षी कामाक्षी कमलतरलाक्षी नयतु मे ॥ ५६ ॥

अन्वयः ॥ पराविद्येत्यादिसर्वपदानि प्रथमैकवचनान्तानि तद्वाच्या देवता मे मम तमःपूरं दूरं नयतु इत्यन्वयः ॥ ५६ ॥

टीका ॥ परा श्रेष्ठा सर्वेभ्योधिका सर्वशब्दसृष्टिभ्यः परा नादान्तरूपा अर्थसृष्टिभ्योऽपि परा उपरि वर्त्तमाना सर्वकारणरूपा शिवशक्तिसामरस्यरूपा पराम्बा व्योमामृतभुवनस्वरनादबिन्दुभूषिता सर्वमन्त्रेश्वरी सर्वतन्त्रेश्वरी सर्ववागीश्वरी सर्वचक्रेश्वरी सर्वसिद्धीश्वरी प्रराप्रासादमन्त्ररूपिणी। यद्वा प्रासादपरा मन्त्ररूपिणी। अमृताभ्रोदूर्ध्वद्विजपङ्क्तिनादविन्दुयुक्ता एकाक्षरी सैव युग्माक्षररूपिणी विद्या सर्वविद्यारूपा ज्ञानरूपा वा श्रीविद्या षोडशाक्षरीरूपा वा। यद्वा परा विद्या परा श्रीषोडशाक्षरीरूपा हृद्या मनोहरा। यद्वा हृदि याति प्राप्नोति ईश्वररूपेण या सा। "ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति" इति भगवद्गीतोक्तेः। श्रीमत्या ईश्वरत्वे प्रमाणं ऋग्वेदः "ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्" इति। यद्वा हृद्या हृल्लेखाक्षररूपिणी भुवनेश्वरी मन्त्ररूपा देवी प्रणवरूपिणी आश्रितमदनविद्या आश्रिता मदनविद्या कादिविद्या कामराजोपासिता यस्याम्। षोडशीमध्ये त्रिकूटत्वेन धृतत्वात्। यद्वा आश्रिता मदनविद्या यस्याः। यद्वा आश्रितो मदनो यस्याः सा चासौ विद्या च तथोक्ता आश्रितश्चासौ मदनश्च तथाविधस्तस्य विद्या स्त्रीदैवत्या विद्या। वाच्यवाचकयोरभेदान्महात्रिपुरसुन्दरी। यद्वा श्रिता मदनविद्यायां ककारादिद्वाविंशाक्षर्यां या सा तत्र स्थिता। वाच्यवाचकयोरभेदादित्यर्थः। तथाविधा अत एव मरकतप्रभानीला मरकतस्य प्रभेव नीला श्यामा। कुत्रचिन्नीलवर्णत्वेन, क्वचिद्रक्तवर्णत्वेन वर्णनाच्छ्यामाश्रीविद्ययोरैक्यमेवावभासते। लीलया परवशितं शूलायुधस्य श्रीशिवस्य मनो यया सा। चरणनतपौरंदरपुरीमृगाक्षी चरणयोर्नताः पौरंदरपुरीमृगाक्ष्यः स्त्रियो यस्याः सा। कमलतरलाक्षी जले वायुना तरलीकृतकमलमिव तरले चपलेऽक्षिणी यस्याः सा तथोक्ता एतादृशी कामाक्षी मे मम तमसां पूरं तमःपूरं अज्ञानभरं दूरं नयतु अपगमयत्वित्यर्थः ॥ ९६ ॥

अहंताख्या मत्कं कवलयति हा हन्तहरिणी
हठात्संविद्रूपं हरमहिषि सस्याङ्कुरमसौ ॥
कटाक्षव्याक्षेपप्रकटहरिपाषाणपटलै–
रिमामुच्चैरुच्चाटय झटिति कामाक्षि कृपया ॥ ५७ ॥

अन्वयः ॥ हे कामाक्षि ! हे हरमहिषि ! असौ अहंताख्या हरिणी मत्कं संविद्रूपं सस्याङ्कुरं हा हन्त हठात्कवलयति अतः कटाक्षव्याक्षेपप्रकटहरिपाषाणपटलैरुच्चैरिमां कृपया झटित्युच्चाटयेत्यन्वयः ॥ ५७ ॥

टीका ॥ हे कामाक्षि ! हे हरमहिषि ! असौ अहंताख्या हरिणी मत्कं संविद्रूपं ज्ञान-

रूपं सस्याङ्कुरं धान्याङ्कुरं हा इति खेदे हन्त इति कष्टे हठात्कवलयति अतः कटाक्षस्य व्याक्षेपा आक्षेपणानि त एव प्रकटहरिपाषाणा इन्द्रनीलमणिशिलास्तेषां पटलैः समूहैरिमामहंताख्यां हरिणीं ममापराधकारिणीं झटिति त्वरितमेवोच्चैरुच्चाटय ताडय । केन हेतुना ताडयामि त्वं तु नात्यन्तिको भक्त इति अपेक्षायामाह कृपयेति ॥ ९७ ॥

बुधे वा मूके वा तव पतति यस्मिन्क्षणमसौ
कटाक्षः कामाक्षि प्रकटजडिमक्षोदपटिमा ।
कथंकारं नास्मै करमुकुलचूडालमुकुटा
नमोवाकं ब्रूयुर्नमुचिपरिपन्थिप्रभृतयः ॥ ५८ ॥

अन्वयः ॥ हे कामाक्षि ! प्रकटजडिमक्षोदपटिमा तवासौ कटाक्षो यस्मिन्मूके वा बुधे वा क्षणं पतति अस्मै पुरुषाय करमुकुलचूडालमुकुटा नमुचिपरिपन्थिप्रभृतयो देवाः कथंकारं नमोवाकं न ब्रूयुरपि तु ब्रूयुरित्यन्वयः ॥ ५८ ॥

टीका ॥ हे कामाक्षि ! प्रकटश्चासौ जडिमा च प्रकटजडिमा तस्य क्षोदे नाशे पटोर्भावः पटिमा प्रावीण्यं यस्य स तथाविधस्तवासौ कटाक्षः कृपया निरीक्षणं यस्मिन् पतति क्षणं भवति बुधे शास्त्रजन्यज्ञानिनि मूके मादृशे वाग्विरहिते वा अस्मै भक्ताय करमुकुलचूडालमुकुटा बद्धाञ्जलिशिखरितकिरीटा नमुचिर्नामदैत्यस्तस्य परिपन्थी शत्रुरिन्द्रस्तत्प्रभृतयो देवाः कथंकारं केन प्रकारेण नमोवाकं नमस्कारवाक्यं न ब्रूयुरपि तु ब्रूयुरित्यर्थः ॥ ९८ ॥

प्रतीचीं पश्यामः प्रकटरुचिनीवारकणिश—
प्रभासध्रीचीनां प्रदलितषडाधारकमलाम् ॥
चरन्तीं सौषुम्णे पथि परपदेन्दुप्रविगल—
त्सुधार्द्रां कामाक्षीं परिणतपरज्योतिरुदयाम् ॥ ५९ ॥

अन्वयः ॥ प्रतीचीं प्रकटरुचिनीवारकणिशप्रभासध्रीचीनां प्रदलितषडाधारकमलां सौषुम्णे पथि चरन्तीं परपदेन्दुप्रविगलत्सुधार्द्रां परिणतपरज्योतिरुदयां कामाक्षीं पश्यामः ॥ ५९ ॥

टीका ॥ प्रतीचीं पूजार्हाम् । वा ब्रह्मरन्ध्रस्थसहस्रदलकमलकर्णिकान्तर्गतं शिवं प्रति अञ्चति गच्छतीति प्रतीची तां प्रतीचीम् । प्रकटा रुचिर्येषां ते प्रकटरुचयः प्रकटरुचयश्च ते नीवाराश्च तथोक्तास्तेषां नीवाराणां धान्यविशेषाणां कणिशा मञ्जर्य्यस्तेषां प्रभा च तथोक्ता तस्याः सध्रीचीना तुल्या तामरुणप्रभामित्यर्थः । सुषुम्णाया अयं सौषुम्णस्तस्मिन् पथि मार्गे विचरन्तीं प्रकर्षेण दलितानि प्रफुल्लितानि भिन्नानि षडाधारादिकमलानि यया सा तां परिणतं प्रसृतं व्याप्तं वा परं च तज्ज्योतिस्तेजश्च परज्योतिः ब्रह्म तस्योदयः प्राकट्यं यया

तां परं च तत्पदं च परपदं ब्रह्मरूपस्थानं तदेवेन्दुः शीतलामृतमयं शुद्धप्रकाशकारकं चिच्चन्द्रमण्डलरूपशिवं योगशास्त्रमन्त्रशास्त्रप्रसिद्धं ब्रह्मरन्ध्रगतसहस्रदलकमलकर्णिकान्तर्गतं तस्मात्प्रकर्षेण विशेषतया गलन्ती क्षरन्ती या सुधाऽमृतं तयार्द्राऽभिषिक्ता ताम् । " चरणं पवित्रं विततं पुराणममृतस्य धारा बहुधा दोहमानम् " इति श्रुत्युक्तं शिवशक्तिसामरस्याख्यममृतं तेनाप्लावितामित्यर्थः । ईदृशीं कुलकुण्डलिनीरूपां श्रीकामाक्षीं पश्यामः तस्या दर्शनं कुर्मः श्रीगुरुकृपयेत्यर्थः । "प्रकाशमाना प्रथमे प्रयाणे प्रतिप्रयाणे त्वमृतायमानाम् । अन्तः पदव्यामनुसंचरन्तीमानन्दमुद्रामवलोकयामः " इति तन्त्रान्तर वचनात् । अतः परं मन्दाक्रान्तावृत्तम् ॥ ५९ ॥

जम्भारातिप्रभृतिमुकुटीं पादयोः पीठयन्ती
गुम्फान्वाचां कविजनकृतान्स्वैरमारामयन्ती ॥
शम्पालक्ष्मीं मणिगणरुचां पाटलैः प्रापयन्ती
कम्पातीरे कविपरिषदां जृम्भते भाग्यसीमा ॥ ६० ॥

अन्वयः ॥ कविजनकृतान् वाचां गुम्पान् स्वैरमारामयन्ती जम्भारातिप्रभृतिकुमुटीं पादयोः पीठयन्ती मणिगणरुचां पाटलैः शम्पालक्ष्मीं प्रापयन्ती कविपरिषदां भाग्यसीमा कम्पातीरे जृम्भत इत्यन्वयः ॥ ६० ॥

टीका ॥ जृम्भस्यारातिः शत्रुरिन्द्रस्तत्प्रभृतयो ये देवास्तेषां मुकुटीं मुकुटमण्डलीं पादयोः स्वचरणारविन्दयोः पीटमिवाचरतीति तथा कविजनैः कृतान् वाचां वाणीनां गुम्फान् ग्रन्थान् कविरचितवाक्यसमूहान् स्वैरं यथा स्यात्तथा आराममुपवनमिवाचरन्तीति । यथा प्रफुल्लित आरामश्चित्तानन्दजनको भवति तथा श्रीमतीकृपापात्राणां सर्वकवितारसाभिज्ञमनोरञ्जनी श्रीमत्यस्तीति भावः । मणीनां ये गणाः समूहास्तेषां या रुचयो दीप्तयस्तासां पाटलैः श्वेतरक्तवर्णैः तेजोभिः समूहैर्वा । शम्पानां विद्युतां लक्ष्मीं शोभां प्रापयन्ती ईदृशी कविपरिषदां कविसमानां भाग्यसीमा भागधेयाऽवधिः कम्पायास्तीरे जृम्भते प्रकाशत इत्यर्थः ॥६०॥

चन्द्रापीडां चतुरवदनां चञ्चलापाङ्गलीलां
कुन्दस्मेरां कुचभरनतां कुन्तलोद्धूतभृङ्गाम् ॥
माराराতेर्मदनशिखिनं मांसलं दीपयन्तीं
कामाक्षीं तां कविकुलगिरां कल्पवल्लीमुपासे ॥ ६१ ॥

अन्वयः ॥ माराराতेर्मदनशिखिनं मांसलं दीपयन्तीं कविकुलगिरां कल्पवल्लीमित्यादिसर्वपदानि कामाक्षीमित्यस्य विशेषणानि । तां उपास इत्यन्वयः ॥ ६१ ॥

टीका ॥ चन्द्र आपीडे मुकुटे यस्याः सा तां चतुरं श्रेष्ठं रमणीयं वदनं मुखं यस्याः सा तां चञ्चलानामपाङ्गानां कटाक्षाणां कटाक्षैर्वा लीला विलासो यस्याः सा तां कुन्दवत्स्मेरां उज्ज्वलमन्दहासमुखीं कुचयोर्मेरो भारस्तेन नतां नम्रां कुन्तलैरुद्धूता दूरीकृताः कम्पिता भृङ्गा यया सा तां माराराते: कामशत्रोः श्रीशिवस्य मदनश्चासौ शिख्यग्निश्च मदनशिखी तं मांसलं बहुलं दीपयन्तीं प्रज्वलयन्तीं कवीनां कुलानां समूहानां या गिरस्तासां कल्पवल्लीं मनोऽभिलषितशब्दार्थचमत्कारसिद्धिविधायिनीं कामाक्षीं भगवतीं उपासे सेव इत्यर्थः । अहमिति शेषः ॥६१॥

कालाम्भोदप्रकरसुषमां कान्तिभिस्तर्जयन्ती
कल्याणानामुदयसरणिः कल्पवल्ली कवीनाम् ॥
कन्दर्पारेः प्रियसहचरी कल्मषाणां निहन्त्री
काञ्चीदेशं तिलकयति सा कापि कारुण्यसीमा ॥ ६२ ॥

अन्वयः ॥ कालाम्भोदप्रकरसुषमां कान्तिभिस्तर्जयन्ती कल्याणानामुदयसरणिः कवीनां कल्पवल्ली कन्दर्पारेः प्रियसहचरी कल्मषाणां निहन्त्री कापि कारुण्यसीमा काञ्चीदेशं तिकलयतीत्यन्वयः ॥ ६२ ॥

टीका ॥ कालाम्भोदस्य प्रकरः समूह ऐश्वर्यमिति यावत् । तस्य सरणिः मार्गः कवीनां कल्पवल्ली कल्पलता वाञ्छितदायिनीत्यर्थः । कन्दर्पारेः श्रीशिवस्य प्रिया पत्नी चासौ सहचरी तथोक्ता । सूर्यस्यातप इव चन्द्रस्य चन्द्रिकेव सदैव संगता सामरस्यरूपिणीत्यर्थः । "शिवस्याभ्यन्तरा शक्तिः शक्तेरभ्यन्तरः शिवः । अन्तरं नैव जानीयाच्चन्द्रचन्द्रिकयोरिव ॥ १ ॥" इति श्रीमद्गोरक्षनाथकृतसिद्धसिद्धान्तपद्धत्युक्तेः । "न शिवेन विना देवी न देव्या च विना शिवः । नानयोरन्तरं किंचिच्चन्द्रचन्द्रिकयोरिव ॥१॥" इत्यागमोक्तेश्च । कल्मषाणां पापानां निहन्त्री कापि वचनाऽतिगा कारुण्यस्य सीमा परावधिः काञ्च्येव देशस्तं तिलकयति भूषयतीत्यर्थः ॥ ६२ ॥

ऊरीकुर्वन्नुरसिजतटे चातुरीं भूधराणां
पाथोजानां नयनयुगले पारिपन्थ्यं वितन्वन् ॥
कम्पातीरे विहरति रुचा मोघयन्मेघशैलीं
कोकद्वेषं शिरसि कलयन्कोऽपि विद्याविशेषः ॥ ६३ ॥

अन्वयः ॥ उरसिजतटे भूधराणां चातुरीं ऊरीकुर्वन् नयनयुगले पाथोजानां पारिपन्थ्यं वितन्वन् रुचा मेघशैलीं मोघयन् शिरसि कोकद्वेषं कलयन् सन् कम्पातीरे कोऽपि विद्याविशेषो विहरति ॥ ६३ ॥

टीका ॥ उरसिजयोः स्तनयोस्तटे भूधराणां पर्वतानां चातुरीं प्रावीण्यं ऊरीकुर्वन् अङ्गी-

कुर्वन् नयनयुगले पाथोजानां कमलानां पारिपन्थ्यं शत्रुतां विशेषेण तन्वन् विस्तारयन् रुचा कान्त्या मेघानां शैलीं मर्यादां प्रणालिकां मोघयन् निष्फलीकुर्वन् शिरसि मस्तके कोकेषु द्वेषो यस्य तं कोकद्वेषं कोकवैरिणं चन्द्रमित्यर्थः । कलयन् रचयन् धारयन्नित्यर्थः । कोऽपि वचनातिगो विद्याविशेषः कादिहादिविद्याख्यः कादिद्वात्रिंशाक्षरीविद्याख्यो वा । संविद्रूपः साक्षाच्छ्रीविद्याधिष्ठात्री देवता महाश्रीचक्रनगरसाम्राज्ञी कामाक्षी श्यामास्वरूपान्तरेण श्रीमातङ्गीरूपान्तरेण वा कम्पानद्यास्तीरे तटे विहारं करोतीत्यर्थः ॥ ६३ ॥

काञ्चीलीलापरिचयवती काऽपि तापिच्छलक्ष्मी
जाड्यारण्ये हुतवहशिखा जन्मभूमिः कृपायाः ॥
माकन्दश्रीर्मधुरकविताचातुरीकोकिलानां
मार्गे भूयान्मम नयनयोर्मान्मथी काऽपि विद्या ॥ ६४ ॥

अन्वयः ॥ काञ्चीलीलापरिचयवती तापिच्छलक्ष्मीर्जाड्यारण्ये हुतवहशिखा कृपाया जन्मभूमिः मधुरकविताचातुरीकोकिलानां माकन्दश्रीः मान्मथी कापि विद्या मम नयनयोर्मार्गे भूयात् ॥ ६४ ॥

टीका ॥ काञ्च्यां या लीला तस्याः परिचयोऽस्या अस्तीति तथा तापिच्छानां तमालानां मयूरपिच्छानां वा लक्ष्मीरिव लक्ष्मीः शोभा यस्याः सा जाड्यारण्ये मूर्खतावने हुतवहशिखा अग्निशिखा जाड्यारण्यदाहकर्त्रीत्यर्थः । "अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी जडानां चैतन्यस्तवकमकरन्दश्रुतिशिरादरिद्राणां चिंतामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति" इति श्रीमद्भगवत्पूज्यपादोक्तेः । कृपायाः जन्मभूमिः मधुरा चासौ कविता च तयोक्ता तस्या या चातुरी चातुर्यं एव कोकिलास्तेषां माकन्दश्रीराम्रलक्ष्मीः कविगिरां माधुर्यसंपादने कारणभूतेत्यर्थः । ईदृशी काऽपि असीमगुणमहिमशालिनी मन्मथस्येयं मान्मथी कामसंबन्धिनी विद्या ज्ञानरूपा कामराजविद्या वा ककारादिपञ्चदशाक्षरीरूपा वा वाच्यवाचकयोरभेदात्तद्देवता महात्रिपुरसुन्दर्यपरनामधेया श्रीकामाक्षी मम नयनयोर्मार्गे भूयात् दृष्टिगोचरा भवत्वित्यर्थः ॥ ६४ ॥

सेतुर्मातर्मरकतमयो भक्तिभाजां भवाब्धौ
लीलालोला कुवलयमयी मान्मथी वैजयन्ती ॥
काञ्चीभूषा पशुपतिदृशां काऽपि कालाञ्जनाली
मत्कं दुःखं शिथिलयतु ते मञ्जुलापाङ्गमाला ॥ ६५ ॥

अन्वयः ॥ हे मातः भक्तिभाजां भवाब्धौ मरकतमयः सेतुः पशुपतिदृशां कालाञ्जनाली लीलालोला कुवलयमयी मान्मथी वैजयन्ती काञ्चीभूषा काऽपि ते मञ्जुलापाङ्गमाला मत्कं दुःखं शिथिलयतु ॥ ६५ ॥

टीका ॥ हे मातः ! भक्तिभाजां भवाब्धौ मरकतमयो मरकतमणिस्तन्मयः सेतुः पशुपतिदृशां शिवनेत्राणां कालाञ्जनस्यालीं पङ्क्तिः । शिवनेत्रोपकारिणी । लीलया लीलायां वा लोला चपला कुवलयमयी रात्रिविकाशिकमलमयी मान्मथी कामदेवसंबन्धिनी वैजयन्ती मदनदिग्विजयपताका काञ्च्याः पुर्या भूषा भूषणरूपा सौभाग्यदायिनीत्यर्थः । ते तव काऽपि लोकोत्तरा अनन्तगुणशालिनी वाङ्मनोऽतिवर्त्तिनी मञ्जुला मनोहरा अपाङ्गानां कटाक्षाणां माला पङ्क्तिः मत्कं मामकं दुःखं शिथिलयतु जर्जरीकरोतु नाशयत्वित्यर्थः ॥ ६५ ॥

व्यावृण्वानाः कुवलयदलप्रक्रियावैरमुद्रां
व्याकुर्वाणा मनसिजमहाराजसाम्राज्यलक्ष्मीम् ॥
काञ्चीलीलाविहृतिरसिके काङ्क्षितं नः क्रियासु–
र्बन्धच्छेदे तव नियमिनां बद्धदीक्षाः कटाक्षाः ॥ ६६ ॥

अन्वयः ॥ हे काञ्चीलीलाविहृतिरसिके ! कुवलयदलप्रक्रियावैरमुद्रां व्यावृण्वानाः मनसिजमहाराजसाम्राज्यलक्ष्मीं व्याकुर्वाणाः नियमिनां बन्धच्छेदे बद्धदीक्षाः तव कटाक्षाः नः काङ्क्षितं क्रियासुः ॥ ६६ ॥

टीका ॥ काञ्च्यां या लीला तया युक्ता या विहृतिर्विहारस्तस्यास्तस्यां वा रसिका तत्संबुद्धौ हे तादृशे ! कुवलयानां यानि दलानि तेषां या प्रक्रिया परिपाटी तस्यां यद्वैरं तस्य मुद्रामाकृतिं व्यावृण्वाना विस्तारं कुर्वाणाः मनसिजमहाराजस्य कामचक्रवर्त्तिनः लक्ष्मीं शोभां व्याकुर्वाणाः विस्तारयन्तः नियमिनां नियमवतां बन्धस्य च्छेदे सामयिकानां मोक्षे बद्धदीक्षाः बद्धा दीक्षा "दीयते परमं ज्ञानं क्षीयते कर्मवासना" इत्युक्तलक्षणा यैस्ते तथोक्तास्तव कटाक्षाः नोऽस्माकं कल्याणं शिवं क्रियासुः कुर्वन्त्वित्यर्थः ॥ ६६ ॥

कालाम्भोदे शशिरुचि दलं कैतकं दर्शयन्ती
मध्येसौदामनि मधुलिहां मालिकां राजयन्ती ॥
हंसारावं विकचकमले मञ्जुमुल्लासयन्ती
कम्पातीरे विलसति नवा कापि कारुण्यलक्ष्मीः ॥ ६७ ॥

अन्वयः ॥ कालाम्भोदे शशिरुचि कैतकं दलं दर्शयन्ती मध्येसौदामनि मधुलिहां मालिकां राजयन्ती विकचकमले मञ्जुं हंसारावं उल्लासयन्ती सती कम्पातीरे काऽपि नवा कारुण्यलक्ष्मीर्विलसति ॥ ६७ ॥

टीका ॥ कालः कृष्णश्चासावम्भोदो जलदश्च कालाम्भोदस्तस्मिन् शशिन इव रुचिर्यस्य तत् केतकस्येदं कैतकं दलं पत्रं दर्शयन्ती सती । मेघे कैतकदलदर्शनोक्त्याऽद्भुतत्वख्यात्या केतकपत्रग्रथितकेशपाशवर्णनमुक्तं भवति । सौदामनीनां विद्युतां मध्ये इति मध्येसौदामनि मधु मकरन्दं लिहन्त्यास्वदन्ते ये ते मधुलिहो भ्रमरास्तेषां मालिका श्रेणिस्तां राजयन्ती शोभयन्ती अनेन सौदामनीमध्ये भ्रमरालिशोभादर्शनवर्णनेन सिन्दूरपूरितसीमन्तो वर्णितः । यद्वा श्रीमत्याः मुखस्य प्रकाशवत्त्वेन तस्य तेजोमण्डलरूपसौदामनीमध्येऽलकालिरूपभ्रमरालीवर्णनमुक्तं भवति । विकचकमले प्रफुल्लितकमले मञ्जुं मनोहरं हंसारावं हंसानां आरावं अभितः शब्दं उल्लासयन्ती शोभयन्ती । अनेन मन्दहासवन्मुखे मधुरवचनवर्णनमुक्तं भवति । कम्पातीरे काऽपि वेदैरुपनिषद्भिरप्यवाच्यमहिमवती नवा नवीना कारुण्यस्य लक्ष्मीः शोभा संपद्वा विलसति शोभत इत्यर्थः ॥ ६७ ॥

चित्रं चित्रं निजमृदुतया भर्त्सयन्पल्लवालीं
पुंसां कामान्भुवि च नियतं पूरयन्पुण्यभाजाम् ॥
जातः शैलान्न तु जलनिधेः स्वैरसंचारशीली
काञ्चीभूषा कलयतु शिवं कोऽपि चिन्तामणिर्मे ॥

अन्वयः ॥ चित्रं चित्रं निजमृदुतया पल्लवालीं भर्त्सयन् भुवि पुण्यभाजां पुंसां च नियतं कामान् पूरयन् शैलाज्जातो न तु जलनिधेर्जातः स्वैरसंचारशीली काञ्चीभूषा कोऽपि चिन्तामणिः मे शिवं कलयतु ॥ ६८ ॥

टीका ॥ अत्याश्चर्ये हर्षे चित्रं चित्रं इति वीप्सा । निजमृदुतया स्वकोमलतया पल्लवालीं नूत्नपत्रालीं भर्त्सयन् धिक्कुर्वन् भुवि भूमौ च पुनः पुण्यं भजन्ति सेवंते ये ते पुण्यभाजः स्वधर्मसेविनः उपासनातपोयोगयागादिपरायणास्तेषां पुंसां जनानां कामांस्तत्तन्मनोगतान् पूरयन् परिपूरयन् सन्, रत्नं गिरावुत्पद्यते समुद्रे च, अत उक्तं शैलाज्जातं श्रीगिरिराजेश्वराद्धिमाचलादुत्पन्नं अर्थात् श्रीपार्वतीस्वरूपं जलनिधेः समुद्रान्न पुनर्जातं नहि लक्ष्मीरूपं इत्यर्थः । स्वैरं यथेष्टं यः संचारस्तस्य शीलमस्यास्तीति स्वैरसंचारशीली मणेः स्वैरसंचारो न संभवति अयं तु स्वैरसंचारवान् पल्लवादपि कोमलाकृतिः ईदृशः कोप्यद्भुतचमत्कृतिकार्यनिर्वचनीयश्चिन्तामणिः मम वाञ्छितार्थदायी शिवं कल्याणं कलयतु रचयतु इत्यर्थः ॥ ६९ ॥

ताम्राम्भोजं जलदनिकटे तत्र बन्धूकपुष्पं
तस्मिन्मल्लीकुसुमसुषमा तत्र वीणानिनादम् ॥

व्यावृण्वाना सुकृतलहरी कापि काञ्चीनगर्या
मैशानी सा कलयतितरामैन्द्रजालं विलासम् ॥ ६९ ॥

अन्वयः ॥ जलदनिकटे ताम्राम्भोजं तत्र वन्धूकपुष्पं तस्मिन्मल्लीकुसुमसुषमा तत्र वीणानिनादं व्यावृण्वाना कापि ऐशानी सुकृतलहरी सा काञ्चीनगर्यां ऐन्द्रजालं विलासं कलयतितराम् ॥ ६९ ॥

टीका ॥ जलदनिकटे श्याममेघसमीपे ताम्राम्भोजं रक्तवर्णकमलं व्यावृण्वाना विस्तारयन्ती प्रदर्शयन्तीत्यर्थः । अनेन श्रीमुखोपरि सुष्ठुकृतकेशपाशनिकटे श्रीमतीमुखकमलस्य वर्णनमुक्तम् । तत्र ताम्राम्भोजे श्रीमुखे बन्धूककुसुमं मध्यान्हविकाशिरक्तपुष्पमित्यर्थः । एतेनौष्ठपुटवर्णनं जातम् । तस्मिन् तत्र तच्छब्दस्य पूर्वार्थाऽऽकृष्टिशक्तिमत्त्वेन बन्धूककुसुमे ओष्ठपुटमध्ये मल्लीकुसुमसुषमा मल्ल्याः कुसुमानां पुष्पाणां सुषुमा शोभेत्यनेन मन्दहासस्य दन्तपङ्क्तेश्च वर्णनं जातम् । मन्दहासस्य दंतपंक्तेश्च श्वेतवर्णवत्त्वात् तत्र तन्मध्ये मन्दहाससुषमायां वीणाया निनादं शब्दम् । अनेन मन्दहासपूर्वकवचनविलासस्य वर्णनं जातम । व्यावृण्वानेति कर्तृविशेषणक्रियापदम् । ताम्राम्भोजे बन्धूकपुष्पमित्यादिपदेषु सर्वत्र योज्यम् । एवं निःसीमगुणनिधेर्वर्णनात्कापि मनोवचनदृष्टचगोचरा ईशानस्य श्रीपरमशिवस्य परमेश्वरस्य इयमैशानी सुकृतानां पुण्यानां लहरी तरङ्गः इन्द्रजालस्येदमैन्द्रजालं चित्रदर्शनं अघटनघटनारूपं पूर्ववर्णितं विलासं सा प्रसिद्धा कामाक्षी काञ्चीनगर्यां कलयतितरामतिशयेन रचयतीत्यर्थः ॥ ६९ ॥

आहारांशं त्रिदशसदसामाश्रये चातकाना-
माकाशोपर्यपि च कलयन्नालयं तुङ्गमेषाम् ॥
कम्पातीरे विहरतितरां कामधेनुः कवीनां
मन्दस्मेरो मदननिगमप्रक्रियासंप्रदायः ॥ ७० ॥

अन्वयः ॥ चातकानामाश्रये त्रिदशसदसामाहारांशं कलयन्सन् आकाशोपर्यपि चैषां तुङ्गमालयं कलयन् सन् कवीनां कामधेनुर्मन्दस्मेरो मदननिगमप्रक्रियासंप्रदायः कम्पातीरे विहरतितरामित्यन्वयः ॥ ७० ॥

टीका ॥ चातकानामाश्रये प्राणाधारभूते घने अर्थात्केशपाशे त्रिदशसदसां सुरसभानाममराहांशं चन्द्रकलाम् । तस्याः शास्त्रे सुराणां भोग्यत्वेन प्रतिपादनात् तेषामाहाररूपः पीयूषमयत्वेन चन्द्रस्तस्यांशं भागं कलारूपं कलयन् दर्शयन् । अत्र समीपार्थे सप्तमी "वटे गावः सुशेरते" इतिवत् । केशपाशसमीपे केशाधः चन्द्रकलां रचयन्नित्यर्थः । आकाशोपरि इत्यनेन आकाशस्य अतिसूक्ष्मत्वात्तद्धर्मावलम्बी मध्यदेशः तदुपर्यपि च तदूर्द्धमपि पुनः एषां त्रिदशानां तुङ्गमु-

च्छतरमालयं सुमेरुं तद्वदेवत्कुचयुगं कलयन् रचयन्नित्यर्थः । कवीनां कामधेनुः सर्वकामप्रपूरकः मन्दस्मेरोऽतिमन्दहासवान् मदनस्य कामस्य यो निगमः शास्त्रं मन्त्रो वा तस्या या प्रक्रिया कर्मवितानं साधनक्रिया वा तस्याः संप्रदायः तत्प्रवर्त्तनरूपः श्रीगुरुपरंपराप्राप्ताचारः । वस्तुतस्तु मदननिगमप्रक्रियासंप्रदाय इति पदस्यार्थो रहस्यभूतो गुरुगम्यः कम्पातीरे अतिशयेन विहरतीति विहरतितराम् अतिशयेन क्रीडां करोतीत्यर्थः ॥ ७० ॥

आर्द्रीभूतैरविरलकृपैरात्तलीलाविलासै–
रास्थापूर्णैरधिकचपलैरञ्चिताम्भोजशिल्पैः ॥
कान्तैर्लक्ष्मीललितभवनैः कान्तिकैवल्यसारैः
काश्मल्यं नः कवलयतु सा कामकोटी कटाक्षैः ॥ ७१ ॥

अन्वयः ॥ आर्द्रीभूतैरित्यादिविशेषणविशेषितैः कटाक्षैः साधनभूतैः सा कामकोटी नोऽस्माकं काश्मल्यं कवलयत्वित्यन्वयः ॥ ७१ ॥

टीका ॥ आर्द्रीभूतैः कारुण्यरसाप्लावितैरविरला निरन्तरा कृपा येषां येषु वा तैः आत्तो गृहीता लीलया विलासो यैस्तैरास्थापूर्णैः श्रीमद्भगवती स्वपादयोर्दृढाऽहैतुकभक्तिप्रदानतया स्वपददर्शनं संपादयिष्यत्येवेत्युत्तमभक्तानामास्था । सकामानामपि राज्यधनस्त्रीपुत्रादिसंपदं संपादयिष्यत्येवामुकं वा कार्यं विधास्यत्येवेत्येवंरूपा याऽस्था श्रद्धा तां पूरयन्त इति । यद्वाऽऽस्था पूर्णा दर्शनादेव भक्तानां यैस्ते तथोक्तास्तैः अधिकाश्च ते चपलाश्चाधिकचपलास्तैः अञ्चितानि यान्यम्भोजानि तेषां शिल्पं चातुर्यं येषां येषु वा तैः अञ्चितं व्याप्तमम्भोजानां शिल्पं येषु ते तथोक्तास्तैवा कान्तै रमणीयैर्लक्ष्म्याः शोभायाः संपदो वा ललितानि च यानि भवनानि च तैः कान्तीनां केवलस्य भावः कैवल्यं तस्य साराणि तैर्धनैस्ताहशैः कटाक्षैः सा प्रसिद्धा कामकोटी नोऽस्माकं कश्मलस्य भावः काश्मल्यं मनःक्षोभं पापमज्ञानमिति यावत् । कवलयतु ग्रसतामित्यर्थः ॥ ७१ ॥

आधुन्वत्यै तरलनयनैराङ्गजीं वैजयन्ती–
मानन्दिन्यै निजपदजुषामात्तकाञ्चीपुरायै ॥
आस्माकीनं हृदयमखिलैरागमानां प्रपञ्चै–
राराध्यायै स्पृहयतितरामादिमायै जनन्यै ॥ ७२ ॥

अन्वयः ॥ तरलनयनैराङ्गजीं वैजयन्तीमाधुन्वत्यै निजपदजुषां आनन्दिन्यै आत्तकाञ्चीपुरायै आगमानां प्रपञ्चैराराध्यायै आदिमायै जनन्यै आस्माकीनं हृदयं स्पृहयतितरामित्यन्वयः ॥ ७२ ॥

टीका ॥ तरलानि च तानि नयनानि च तरलनयनानि तैरङ्गजस्य कामस्येयमाङ्गजी तां वैजयन्तीं मीनाङ्कितपताकां आसमन्ताद्धुन्वत्यै धूयमानां कुर्वत्यै निजपदं जुषन्ते सेवन्त इति तथोक्तास्तान् आनन्दयतीत्येवं शीलेति सा तस्यै आत्तं गृहीतं काञ्चीपुरं यया सा तस्यै आगमानां तन्त्राणां शास्त्राणां वा प्रपञ्चैः तदुक्तक्रियाकलापैः "प्रातःकृत्यं शौचविधिः स्नानं तर्पणं तत्तत्कालोचितपारायणसहिता चतुःकालसंध्या श्रीचक्रपूजाङ्गभूतसूर्यार्घ्यदानं श्रीपरदेवतापूजाधिकारार्थपार्थिवपूजा भूतोत्सादनं द्वारार्चा मण्डपप्रोक्षणं वास्तुपूजा दीपनाथपूजनं श्रीभैरवानुज्ञाग्रहणं भूशोधनं आसनग्रहणविधिः श्रीगुरुगणेशभैरवस्मरणं प्राणायामाः श्रीयन्त्रप्रक्षालनं तदनु समस्तयोगिनीविद्यान्ते मूलविद्या विलोमकूटत्रयान्ते पुष्पादिप्रक्षेपः कुण्डलिन्युत्थापनं स्वस्थाने स्थापनं भूतशुद्धिः धातुप्रतिष्ठा प्राणस्थापनं मूलऋष्यादिकरषडङ्गन्यासः कतिविधमातृकान्यासो मूलन्यासः केशवादिश्रीकण्ठादिन्यासस्तत्त्वन्यासः पीठन्यासो लघुषोढामहाषोढान्यासः महाशक्तिन्यासः ऊर्ध्वाम्नायन्यासजालं जपविधिना जपः जपसमर्पणं योनिमुद्रया प्रणमनं पात्रस्थापनं पीठपूजा लघुपूजा नवाऽऽवरणपूजा पञ्चपञ्चिकाम्नायरश्म्यूर्द्ध्वाम्नायपूजा उत्तरविस्तरपूजा छागादिबलिपञ्चबलिदानमारात्तिककरणं पुष्पांजलिः राजोपचाराः सुवासिनीकुमारीशक्तिवटुकगणेशगुरुपूजा श्रीगुरुपुष्पाञ्जलिः सामयिकैः सह तरुणप्रौढोल्लासपर्यन्तान्तर्यागः कर्मसमर्पणं देवतोद्वासनं श्रीमातङ्गीबलिः बलिविसर्जनं शान्तिस्तवराजं पठन् प्रोक्षणकरणं पात्राणां प्रतिपत्तिः सूर्यार्घ्यदानं नामोच्चारणेन छिद्रावरणं निर्माल्यपुष्पस्य विधिना मस्तके धारणं कामकलारूपं स्वात्मानं भावयन् विहरणं षट्त्रिंशत्पारायणानां यथाशास्त्रं प्रत्यहं करणं देवीपर्वसु च दमनोत्सवपवित्रारोपणपर्वणोश्च श्रीगुरुमण्डलसहिता प्रतिमासं नैमित्तिकपूजा सदाचारवदवस्थितिः कवचमालामन्त्रहृदयसहस्रनामत्रिशतनाम्नां जपः हृदयपञ्चम्यादिस्तोत्रपठनं क्षमापनस्तोत्रेण क्षमापनं पूर्णातिथौ श्रीस्वाराध्यजन्मतिथौ नाथव्याप्तिवासरे स्वजन्मदिने विद्याप्राप्तिदिने अक्षरत्रयसंपातदिने एतेषु सदर्शसप्तपर्वसु। यद्वा श्रीकरीमोहिनीत्यादिषु। यद्वा कालराज्यादिषु। यद्वा रविभृगुवारयोः। यद्वाष्टम्यादिषु। यद्वा स्वजन्मनक्षत्रदीक्षानक्षत्रादिषु। यद्वा द्वादशमासेषु प्रतिपदादिपूर्णिमान्तासु पञ्चदशतिथिषु। यद्वा इषमाघचैत्राषाढेष्ववश्यमभ्युदयदिनेषु च नैमित्तिकपूजनं एषु नाथमण्डलपूजनं च सर्वदा सर्वप्रकारपूजनम् "सर्वदा पूजयेद्देवीम्" इत्यादिप्रामाण्यात्। यद्वा भावनोपनिषद्भाष्योक्तभावनाप्रकारम्। यद्वा योगिनीहृदयोक्तभावना श्रीगुरुमन्त्रयन्त्रदेवताशिवस्वात्मनामैक्यभावनं पुरश्चरणविधानं च" इत्याद्यागमविस्तारैः स्वाराध्यपाददत्ताधिकारैराराध्यायै आराधितुं योग्यायै सर्वेषां आदिमायै सर्वाद्यायै सर्वकारणायै हरिविरञ्चिरुद्रेश्वरसदाशिवानामपि जनन्यै शिवशक्तिसामरस्यरूपपरब्रह्मात्मकपराम्बायै इत्यर्थः। अस्माकमिदमास्माकीनं हृदयं मनः स्पृहयतितराम् तां अतिशयेनास्माकं मनो वाञ्छतीत्यर्थः ॥ ७२ ॥

दूरं वाचां त्रिदशसदसां दुःखसिन्धोस्तरित्रं
मोहक्ष्वेडक्षितिरुहवने तीक्ष्णधारं कुठारम् ॥
कम्पातीरे प्रणयिकविभिर्वर्णितोद्यच्चरित्रं
शान्त्यै सेवे सकलविपदां शांकरं तत्कलत्रम् ॥ ७३ ॥

अन्वयः ॥ त्रिदशसदसां वाचां दूरं दुःखसिन्धोस्तरित्रं मोहक्ष्वेडक्षितिरुहवने तीक्ष्णधारं कुठारं कम्पातीरे प्रणयिकविभिर्वर्णितोद्यच्चरित्रं तत् शांकरं कलत्रं सकलविपदां शान्त्यै सेवे इत्यन्वयः । अहमिति शेषः ॥ ७३ ॥

टीका ॥ मनुष्यगिरामगोचरसत्त्वे का वार्त्ता ? त्रिदशसदसां सुरसभानां वाचामपि दूरं गुणानामनन्तत्वात् । निर्गुणस्वरूपपक्षेपि " यतो वाचो निवर्तन्ते अप्राप्य मनसा सह " इति श्रुतेः अकथनीयमित्यर्थः । दुःखसमुद्रस्य तरित्रं तरणोपायं नावमित्यर्थः । मोहोऽज्ञानमहंताममतात्मकं द्वैतरूपं स एव क्ष्वेडो विषः तस्य क्षितिरुहा वृक्षास्तेषां वने समूहे संसारात्मके तीक्ष्णाधारा यस्य तादृशं कुठारं अज्ञानविषवृक्षच्छेदनोपायभूतमित्यर्थः । प्रणयः स्नेह एषामस्तीति प्रणयिनस्ते च ते कवयश्च प्रणयिकवयस्तैः वर्णितमुद्यच्चरित्रं प्रवृत्तचरित्रं भण्डासुरमहिषासुराद्यनेकासुरवधेन जगद्रक्षणाद्यनेकविधं यस्य तत् शं करोतीति शंकरस्तस्येदं शांकरं तत्पूर्वोक्तं प्रसिद्धं वा कलत्रं स्त्रियं शिवस्य पट्टराज्ञीमित्यर्थः । तत्कलत्रं तच्छब्दस्य ब्रह्मवाच्यत्वात् ब्रह्मस्त्रीभावापन्नम् । " पतिश्च पत्नी च भवेताम् " इति श्रुतेः प्रामाण्यात् । एकं वस्तु एव स्वेच्छया क्रीडार्थं शिवरूपं शक्तिरूपं चाभूत् " नित्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्मचैतन्यमेकं धर्मो धर्मीतिरूपद्वयमयतिपृथग्भूयमायावशेन " इत्यादिरत्नत्रयपरीक्षायामेकस्यैव वस्तुनो धर्मो धर्मीत्यादिना वर्णितत्वात् " ब्रह्मैव पुरूपं प्राप्तं शिवो जातः । स्त्रीरूपं प्राप्तं उमा जाता " इत्युक्तम् । " पश्चादतिक्रीडेच्छया तदेव नारायणविरञ्च्यादेस्तत्तन्नाम्ना ख्यातम् । तदेव लक्ष्मीवाण्यादिरूपेण जातं तत्तन्नाम्ना ख्यातम् " इति तस्यां स्फुटमुक्तम् । एषैव श्रीमती परब्रह्मपट्टराज्ञी शिवेन सार्द्धं सदाऽवियोगा परब्रह्मेत्युक्तं भवतीत्यलमतिवितानितेन । प्रकृतमनुसरणमेवेह वरम् । तां सकलविपदां शान्त्यै नाशाय कम्पातीरे सेवे भज इत्यर्थः ॥ ७३ ॥

खण्डीकृत्य प्रकृतिकुटिलं कल्मषं प्रातिभश्री—
शुण्डीरत्वं निजपदजुषां शून्यतन्द्रं दिशन्ती ॥
तुण्डीराख्ये महति विषये स्वर्णवृष्टिप्रदात्री
चण्डी देवी कलयति रतिं चन्द्रचूडालचूली ॥ ७४ ॥

अन्वयः ॥ निजपदजुषां प्रकृतिकुटिलं कल्मषं खण्डीकृत्य शून्यतन्द्रं प्रातिभश्रीशुण्डीरत्वं तुण्डीराख्ये महति विषये दिशन्ती स्वर्णवृष्टिप्रदात्री देवी चण्डी चन्द्रचूडालचूली रतिं कलयतीत्यन्वयः ॥ ७४ ॥

टीका ॥ निजपदसेविनां स्वभावेन कुटिलं वक्रं कल्मषं पापं खण्डीकृत्य आच्छिद्य शून्या तन्द्राऽऽलस्यं यस्य तत् शून्यतन्द्रं अर्थात् धाराप्रवाहं प्रातिभश्रीशुण्डीरत्वं प्रतिभाया भावः प्रातिभं तस्य या श्रीस्तस्याः शुण्डीरत्वं चातुर्यं प्रागल्भ्यमिति यावत् । दिशन्ती बुद्धि-शोभाधिक्यं कुर्वती तुण्डीराख्ये तुण्डीरनाम्नि महति विषये देशे स्वर्णवृष्टिप्रदात्री सुष्टु अर्णा वर्णा अक्षराणि कनकं च तेषां तस्य च वृष्टिप्रदात्री अष्टादशविद्याचतुर्विधपाण्डित्याति-द्रविणदायिनी श्रीमती देवी द्योतनशीला तेजोरूपेति यावत् । चण्डी "चण्डस्त्वत्यन्तकोपनः" सर्वसंहारकारको ज्ञानस्वरूपो रुद्रः "नमोऽस्तु रुद्रमन्यवे घोरघोरतरेभ्यः" इत्यादिश्रुतिप्रामा-ण्यात्, ब्रह्मणो रुद्ररूपेण वर्णनात् चण्डो ब्रह्म तस्य स्त्री चण्डी परब्रह्ममहिषीत्यर्थः "त्वमसि च परब्रह्ममहिषी" इति श्रीशंकराचार्यचरणाः । चन्द्रचूडालचूली चन्द्रेण युक्तः चूडालः मस्तक-स्तथोक्तस्तस्मिन् चूला जुटिका यस्याः साचन्द्रचूडालचूली रतिं प्रीतिं कलयति तदा तस्मिन्नेव काले पूर्ववर्णितं सर्वं साधकानां भक्तानां भवतीत्यर्थः ॥ ७४ ॥

येन ख्यातो भवति स गृही पूरुषो मेरुधन्वा
यद्दृक्कोणे मदननिगमप्राभवं बोभवीति ॥
यत्प्रीत्यैव त्रिजगदधिपो जृम्भते किंपचानः ।
कम्पातीरे स जयति महान्कश्चिदोजोविशेषः ॥ ७५ ॥

अन्वयः ॥ येन स महापूरुषो गृही भवति मेरुधन्वा ख्यातो भवति यद्दृक्कोणे मदननिगम-प्राभवं बोभवीति यत्प्रीत्यैव किंपचानः त्रिजगदधिपः सन् जृम्भते स कश्चिन्महानोजोविशेषः कम्पातीरे जयतीत्यन्वयः ॥ ७५ ॥

टीका ॥ येन स उपनिषत्प्रसिद्धमहापूरुषो: "पूरणात्पुरुषतामुपेयुषीइत्यभियुक्तोक्तेःमहापूरणः मेरुर्धनुरस्यास्तीति मेरुधन्वा त्रिपुरासुरवधे श्रीशिवस्य सुमेरोर्धनुस्त्वेनाचरणात् । विख्यातः सन् गृही गृहस्थो भवति । "शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते" इति तन्त्रवचनात् । यद्दृक्कोणे यस्य नेत्रकोणे मदनस्य निगमो निगमनं प्राकट्यं दर्शनं सत्त्वं वा तस्य प्राभवमैश्वर्यं वा अतिशयेन पुनः पुनर्वा भवति यत्प्रीत्यैव यस्य प्रसादेनैव किंपचानोऽतिदरिद्री त्रिजगदधिपः साक्षादीश्वरः सन् जृम्भते प्रकाशते स कश्चित् श्रेष्ठः अनौपम्यगुणरूपशीलत्वाद्वागविषयः महान् ओजसस्तेजसो विशेषो जगद्भासको ज्ञानान्धकारहारकः श्रीमतीरूपः कम्पातीरे जयति सर्वोत्कृष्टतया वर्त्तत इत्यर्थः ॥ ७५ ॥

धन्या धन्या गतिरिह गिरां देवि कामाक्षि कामं
निन्द्यां भिन्द्यात्सपदि जडतां कल्मषादुन्मिषन्तीम् ॥
साध्वी माध्वीरसमधुरताभञ्जनी मञ्जुरीति—
र्वाणीवेणी झटिति वृणुतात्स्वर्धुनीस्पर्धिनी माम् ॥ ७६ ॥

अन्वयः ॥ हे देवि ! कामाक्षि ! कामं इह गिरां गतिर्धन्या धन्या कल्मषादुन्मिषन्ती निन्द्यां जडतां सपदि भिन्द्यात् साध्वी माध्वीरसमधुरताभञ्जनी मञ्जुरीतिर्वाणीवेणी स्वर्धुनीस्पर्धिनी मां झटिति वृणुतादित्यन्वयः ॥ ७६ ॥

टीका ॥ हे देवि ! कामाक्षि ! कामं यथेष्टमिह त्वयि विषये गिरां गतिर्धन्या धन्येति वीप्सातिहर्षे आदरे वा शैघ्र्येवा कल्मषात्पापादुन्मिषन्तीमुत्पद्यमानां निन्द्यां निन्दनीयां जडतां जाड्यं सपदि शीघ्रं भिन्द्यात् विदारयेत् साध्वी दोषरहिता प्रसादादिगुणयुक्ता माध्व्याः सुधाया यो रसस्तस्य या मधुरता तस्या भञ्जनी नाशिनी अर्थात्सुधारसमिष्टकरा ततोत्यधिकमधुरेत्यर्थः । मञ्जवो मनोहरा रीतयो वैदर्भीगौडीत्यादयः पदसंघट्टनाविशेषाः यस्याः सा ईदृशी वाणीवेणी वाग्गुम्फः स्वर्धुनी स्वर्गनदी गङ्गा तस्याः स्पर्द्धिनी ईर्षालुर्मां झटिति शीघ्रं वृणुतात् स्वीकरोत्वित्यर्थः ॥ ७६ ॥

यस्या वाटीहृदयकमलं कौसुमी योगभाजां
यस्याः पीठी सततशिशिरा शीकरैर्माकरन्दैः ॥
यस्याः पेटी श्रुतिपरिचलन्मौलिरत्नस्य काञ्ची
सा मे सोमाभरणमहिषी साधयेत्काङ्क्षितानि ॥ ७७ ॥

अन्वयः ॥ यस्याः कौसुमी वाटी योगभाजां हृदयकमलम् । यस्याः पीठी माकरन्दैः शीकरैः सततशिशिरा, यस्याः श्रुतिपरिचलन्मौलिरत्नस्य काञ्ची पेटी सा सोमाभरणमहिषी मे काङ्क्षितानि साधयेत् ॥ ७७ ॥

टीका ॥ यस्याः कौसुमी वाटी पुष्पारामः योगभाजां हृदयकमलम् । तत्र तस्या निरन्तरमारमणात् यस्याः पीठी मकरन्दानामिमे माकरन्दास्तैः सीकरैः कणैः सततं नित्यं शिशिरा शीतला यस्याः श्रीकामाक्ष्या भगवत्याः श्रुतीनां वेदानां परितोभित उपरि वा चलन्तो विहरन्तः उपरि वर्तन्त इति यावत् । मौलयो मस्तकानि मुकुटानि वा तद्रूपा उपनिषद इत्यर्थः । तेषां तेषु वा यद्रत्नं श्रीमत्याः प्रकाशविमर्शसामरस्यनिर्वाणाख्यं चरणचतुष्टयम् । यद्वा श्रुतिभिः परिचलत् अभितो विहरत् अर्थाद्वेदोक्तधर्मपथा विहरत् मौले रत्नं तन्मौलेरुपनिषदोपि रत्नं, यद्वा

उपनिषद्रूपरत्नं, यद्वा चलंतो नमंतो विलसंतो वा मौलयो यस्मिन् तच्चलन्मौलि चलन्मौलि तदेव रत्नं तथोक्तं श्रुतीनां चलन्मौलि रत्नं तथोक्तं श्रीमतीचरणरूपं, तत्स्वरूपं तु तदीयग्रन्थेषु द्रष्टव्यमधिकारिभिः सद्भी रहस्यत्वान्नेह प्रकाश्यते स्वाराध्यमुख पङ्कजादेवावगन्तव्यं तेनैव फलसिद्धेरन्यथाऽनिष्टापत्तेश्च । नामपाठवन्नात्राधिकारः सर्वेषामिति । तस्य रत्नरूपचरणस्य काञ्चीपुरी पेटी । तत्र श्रीमत्या अवस्थानात् साप्रसिद्धा एतैर्विशेषणैर्विशिष्टा, सोम आभरणो यस्य तस्य महिषी मे मम काङ्क्षितानि वाञ्छितानि साधयेत्संपादयेदित्यर्थः ॥ ७७ ॥

एका माता सकलजगतामीयुषी ध्यानमुद्रा
मेकाम्राधीश्वरचरणयोरेकताना समिन्धे ॥
ताटङ्कोद्यन्मणिगणरुचा ताम्रकर्णप्रदेशा
तारुण्यश्रीस्तबकितरुचा तापसी कापि बाला ॥ ७८ ॥

अन्वयः ॥ सकलजगतामेका माता ध्यानमुद्रामीयुषी एकाम्राधीश्वरचरणयोरेकताना ताटङ्कोद्यन्मणिगणरुचा ताम्रकर्णप्रदेशा तारुण्यश्रीस्तबकितरुचा तापसी कापि बाला समिन्धे इत्यन्वयः ॥ ७८ ॥

टीकाः ॥ सकलजगतामेका माता एकैवासहाया सती समस्तजगदुत्पादिनी एकैव सर्वकारणरूपा "एकैवाहं जगत्यत्र द्वितीया काममापरा" इति सप्तशत्यां स्वयमुक्तम् "त्वयैकया पूरितमम्बयैतत्" "त्वयैतत्सृज्यते जगत्" इत्यादिमार्कण्डेयात् । ध्यानमुद्रामीयुषी प्राप्तवती एकश्चासावाम्राधीश्वरश्च एकाम्राधीश्वरः । यद्वा एकाम्रस्याधीश्वर एकाम्रनाथः कटाक्षशतकोक्तलक्षणः काञ्च्यां प्रसिद्धः श्रीपरशिवस्तस्य चरणयोरेकताना एकत्वमापन्ना स्वात्मैक्यं गता न त्वन्यस्य ध्याने निरता । "शिवस्याभ्यन्तरा शक्तिः शक्तेरभ्यन्तरः शिवः" इति शास्त्रवचनप्रामाण्यात् । "य एव शिवः सैव शक्तिः यैव शक्तिः स एव शिवः" इति श्रीमद्भगवच्छंकराचार्यमतप्रामाण्याच्च, शिवशक्त्योरैक्यात् स्वात्मन एव ध्याने स्थितेति वास्तवोर्थः । शिवस्याप्युपासकत्वं श्रीतन्त्रेषु पुराणेषु च श्रीमत्या बहुशः प्रतिपादितम् "विष्णुः शिवः सुरज्येष्ठः" इति मानसोल्लासे मुख्योपासकपरिगणनायां गणितत्वात् । घटतन्त्रेऽपि श्यामां शिवोऽस्तौत् लक्ष्मीं विष्णुर्वाणीं ब्रह्मा च । तथा च ब्रह्माण्डपुराणे श्रीविद्योपासकानां च "यथा देवः परः शिवः" इति शिवशक्त्योः परस्परं ध्यातृध्येयता समानैवेति चिन्त्यम् । "परस्परतपःसिद्धिफलायितपरस्परा" इत्याप्तवाक्याच्च श्रीमतीस्वरूपान्तरयोः प्रकृतिपुरुषयोर्भेदेपि "समसत्त्वौ समौजौ" इत्युक्तत्वात् तयोरैक्याच्च परस्परध्यानकरणं युक्तमेवेति न काऽपि

क्षातिः । प्रकृतेपि एकवस्तुनः स्त्रीलिङ्गेन पुल्लिङ्गेन च निर्देशेन च वर्णनं कृतमस्ति । अस्मिन्वान्यस्मिन्नपि यदा स्त्रीरूपेण वर्णनं तदा स्त्रीणां पतिरेवेश्वरत्वेन सामान्यतया विहित इति शास्त्रे प्रतिपादनात्, परस्परैकमूर्त्तेरपि श्रीकामाक्ष्याः श्रीशिवस्य पट्टराज्ञीत्वेन वर्णनात् धर्मतो लोकसंग्रहार्थं वा स्वप्रेम्णापिवा सर्वप्रकारेण स्वपत्युः श्रीएकाम्रनाथस्य चरणयोरेकतानेति कथनं कवेः समीचीनमेवेति बोध्यमित्यलं पल्लवितेन । ताटङ्कयोरुद्यन्तः प्रकाशन्तो ये मणीनां गणास्तेषां रुचा दीप्त्या ताम्रो रक्तवर्णधातुरिव कर्णप्रदेशो यस्याः सा ताटङ्करत्नकान्त्या रक्तवर्णकर्णप्रदेशेत्यर्थः । तारुण्यस्य यौवनस्य या श्रीस्तया स्तबकिताः प्रफुल्लिताः पुलकिता रुचो दीप्तयो यस्याः सा तथाविधा तापस्या अपि ध्यानानन्देन पुलकिताङ्गं भवत्यवेति काप्यनिर्देश्यमहिमशीला तापसी तपस्विनी बाला किशोरावस्थापन्ना स्त्रीस्वरूपधारिणी कामाक्षी समिन्धे प्रकाशते देदीप्यत इत्यर्थः ॥ ७८ ॥

दन्तादन्तिप्रकटनकरी दन्तिभिर्मन्दयानै-
र्मन्दाराणां मदपरिणतिं मथ्नती मन्दहासैः ।
अङ्कूराभ्यां मनसिजतरोरङ्कितोराः कुचाभ्या-
मन्तःकाञ्चि स्फुरति जगतामादिमा कापि माता ॥ ७९ ॥

अन्वयः ॥ मन्दयानैर्दन्तिभिर्दन्तादन्तिप्रकटनकरी मन्दहासैर्मन्दाराणां मदपरिणतिं मथ्नती मनसिजतरोरङ्कूराभ्यां कुचाभ्यामङ्कितोराः जगतामादिमा कापि माता अन्तःकाञ्चि स्फुरति इत्यन्वयः ॥ ७९ ॥

टीका ॥ मन्दयानैर्मन्दगमनैः साधनैर्दन्तिभिः हस्तिभिर्दन्तादन्ति दन्तैश्च दन्तैश्च प्रहृत्येदं युद्धं प्रवृत्तं दन्तादन्ति तस्य प्रकटनकरी अर्थात्करिभ्योपि धीरमनोहरगमनवतीत्यर्थः । मन्दहासैर्मन्दाराणां कल्पवृक्षजातिविशेषवृक्षाणां शुक्लपुष्पस्तबकानां मदस्य उज्ज्वलत्वसुरभिमत्वसौन्दर्यार्थिप्रार्थनानुरूपफलदातृत्वोद्भूतगर्वस्य परिणतिं परीपाकं मथ्नतीं विलोडयन्ती । कल्पतरुकुसुमगुच्छमदमोचनमन्दहासेत्यर्थः । मनसिज एव तरुर्मनसिजतरुस्तस्याङ्कूराभ्यामभिनवोद्गताभ्यां कुचाभ्यामङ्कितं चिह्नितमुरो वक्षःस्थलं यस्याः सा तथोक्ता । कामतरुनवोद्गमसुन्दरवक्षोजाङ्कितवक्षःस्थलेत्यर्थः । जगतामादिमा आद्या सर्वादिकारणभूतेत्यर्थः । "हेतुः समस्तजगताम्" इतिमार्कण्डेयात् । याकाप्यनिर्वचनीया सगुणा निःसीमैश्वर्यगुणसौन्दर्या निर्गुणस्वरूपा च मनोवागतिगा माता जन्मदायिनी सा । काञ्च्या अन्तरित्यन्तःकाञ्चि स्फुरति क्रीडतीत्यर्थः ॥ ७९ ॥ पृथ्वीवृत्तम् । तल्लक्षणं च पिङ्गलसूत्रे "पृथ्वी ज्सौ ज्सौ य्लौ ग्वसुनवकौ" इति ॥

त्रियम्बककुटुम्बिनीं त्रिपुरसुन्दरी मिन्दिरां
पुलिन्दपतिसुन्दरीं त्रिपुरभैरवीं भारतीम् ॥
मतङ्गकुलनायिकां महिषमर्दिनीं मातृकां ।
भणन्ति विबुधोत्तमा विहृतिमेव कामाक्षि ते ॥ ८० ॥

अन्वयः ॥ त्रियम्बककुटुम्बिनीमित्यादिपदानि त्रिपुरसुन्दरीमित्यस्य विशेषणानि द्वितीयैकवचनान्तानि । हे कामाक्षि ते तवैव विहृतिं विबुधोत्तमा भणन्तीत्यन्वयः ॥ ८० ॥

टीका ॥ त्रियम्बकस्य त्रिनेत्रस्य श्रीशिवस्य कुटुम्बिनीं पट्टराज्ञीं त्रिपुराधामत्रयलिङ्गत्रयपीठत्रयदेवत्रयदेवीत्रयाग्नित्रयलोकत्रयस्वरत्रयपदत्रयादिपदार्थमात्रत्रयेभ्यः पुराग्रे प्राक्तन काले वर्त्तमाना त्रिपुरा सा चासौ सुन्दरी च तथोक्ता स्वस्वात्मतया सर्वेषां स्पृहणीयत्वात्परप्रेमास्पदा सगुणस्वरूपेणापि सुन्दरी त्रिपुरसुन्दरी तां इन्दिरां विष्णोर्वक्षःस्थलाश्रयां सर्वशोभारूपिणीं सर्वसंपद्रूपिणीं राज्ञां राज्यलक्ष्मीं देवानां देवलक्ष्मीं ऋषीणां ब्रह्मश्रीरूपिणीं ज्ञानिनां ज्ञानश्रियं युद्धे रणश्रियं सिद्धानां सिद्धलक्ष्मीं पुष्पाणां पुष्पलक्ष्मीं विजये जयश्रियमित्यादिसर्वपदार्थानां शोभैश्वर्यरूपिणीमित्यर्थः । पुलिन्दा भिल्लास्तेषां पतिर्भिल्लपतिः कार्यवशात्क्रीडार्थं वा भिल्लरूपधरः श्रीशिवस्तस्य सुन्दरीं भिल्लीरूपिणीमित्यर्थः त्रिपुरा पूर्वोक्तलक्षणा सा चासौ भरणात्, भयकारकत्वाद्भयहारकत्वाद्भैरवः परशिवस्तस्य क्रीडया स्त्री तथोक्ता तां भारतीं सरस्वतीं भाषामात्राधिष्ठात्रीं मतङ्गनामक ऋषिस्तस्य कुलस्य नायिकां मुख्यां पालयित्रीं वा स्वामिनीं वा महिषमर्दिनीं महिषासुरनाशिनीं महालक्ष्मीमष्टादशभुजां सर्वदेवतेजोरूपां सर्वदेवमयीम् । यद्वा एतस्या भिन्नैव महिषमर्दिनी स्वस्वरूपेणैतन्नाम्नैवख्याता मन्त्रध्यानादिकमपि पृथगस्याः तां मातृकां ब्राह्म्याद्यष्टमातृकारूपिणीं गौर्यादिषोडशमातृकारूपिणीं वा पञ्चाशद्वर्णरूपां वा, यया विनान्धमूकबधिरजडवज्जगद्भवतिह्यच तां समस्तजगद्व्यवहारसिद्धिसंपादिनीं समस्तवेदादिविद्यामयीं सर्वजगन्मयीं ज्ञानमयीं परब्रह्मरूपिणीमित्यर्थः । हे कामाक्षि ! ते तवैव विहृतिं विहारं क्रीडामित्यर्थः विशेषेण बुधाः पण्डिता विवेकिनो भणन्ति कथयन्तीत्यर्थः ॥ ८० ॥

महामुनिमनोनटी महितरम्यकम्पातटी
कुटीरकविहारिणी कुटिलबोधसंहारिणी ॥
सदा भवतु कामिनी सकलदेहिनां स्वामिनी
कृपातिशयकिंकरी मम विभूतये शांकरी ॥ ८१ ॥

अन्वयः ॥ अत्र सर्वपदानि प्रथमैकवचनान्तानि तत्पदवाच्या देवता महामुनिमनोनटीत्यादिविशेषणविशेषिता शांकरी मम विभूतये सदा भवतु इत्यन्वयः ॥ ८१ ॥

टीका ॥ महान्तश्च ते मुनयश्च महामुनयस्तेषां यन्मनस्तस्मिन् नटति खेलतीति नटी महिता पूज्या चासौ रम्या च महितरम्या सा चासौ कम्पातटी तस्यां यः कुटीरकः अल्पकुटी तस्मिन् विहारोऽस्या अस्तीति सा तथाविधा कुटिलश्चासौ बोधश्च कुटिलबोध ईश्वरभिन्नजगज्ज्ञानं नास्तिकसिद्धान्तो वा तं संहर्तुं शीलमस्या अस्तीति सा तथाविधा कामोस्या अस्तीति कामिनी परशिवैक्यकामनावती क्रीडया स्त्रीरूपधारिणीत्वात् । सकलदेहिनां समस्तजीवानां स्वामिनी ईश्वरी प्रेरयित्रीति यावत् । पालिनी वा कृपाया अतिशयेन किं करोमि वः कार्यमिति शब्दवादिनी भक्तान् । शंकरस्येयं शांकरी श्रीमती सदा मम विभूतय ऐश्वर्याय भवत्वित्यर्थः ॥ ८१ ॥

जडाः प्रकृतिनिर्धना जनविलोचनारुन्तुदा
नरा जननि वीक्षणं क्षणमवाप्य कामाक्षि ते ॥
वचःसु मधुमाधुरीं प्रकटयन्ति पौरंदरीं
विभूतिषु विडम्बनां वपुषि मान्मथीं प्रक्रियाम् ॥ ८२ ॥

अन्वयः ॥ हे कामाक्षि ! हे जननि ! जडाः प्रकृतिनिर्धनाः जनविलोचनारुन्तुदा नराः क्षणं ते तव वीक्षणमवाप्य वचःसु मधुमाधुरीं विभूतिषु पौरंदरीं विडम्बनां वपुषि मान्मथीं प्रक्रियां प्रकटयन्तीत्यन्वयः ॥ ८२ ॥

टीका ॥ हे कामाक्षि ! हे जननि ! जडाः प्रकृत्या बुद्ध्या शरीरचेष्टया कार्यकरणेऽक्षमाः प्रकृत्या सहजेन निर्गतं धनं येषां येभ्यो वा ते जन्मतो दरिद्रिण इत्यर्थः । जनानां विलोचनानि तेषामरुन्तुदाः पीडाप्रदा अतिकुरूपा इत्यर्थः । ईदृशा नराः क्षणं क्षणमात्रं ते तव वीक्षणं कृपाकटाक्षमवाप्य वचःसु वचनेषु मधुनो माधुरीं मिष्टतां अमृततुल्यमुज्ज्वलं शीतलं मिष्टं हितकारि च वचनसमूहं प्रकटयन्ति विभूतिषु संपत्सु ऐश्वर्येष्विति यावत् । पुरंदरस्येयं पौरंदरी तां विडम्बनामनुकरणं इन्द्रतुल्यैश्वर्यं प्रकटयन्ति । वपुषि शरीरे मन्मथस्य कामस्येयं मान्मथी तां प्रकर्षेण क्रियां आनुपूर्वीं अर्थात् कामतुल्यसौन्दर्यं बलं चातुर्यं गुणं च प्रकटयन्ति स्फुटीकुर्वन्तीत्यर्थः ॥ ८२ ॥

घनस्तनतटस्फुटस्फुरितकञ्चुली चञ्चली
कृतत्रिपुरशासना सुजनशीलितोपासना ॥
दृशोः सरणिमश्नुते मम कदा नु काञ्चीपुरे
परा परमयोगिनां मनसि चित्कला पुष्कला ॥ ८३ ॥

अन्वयः ॥ घनस्तनतटस्फुटस्फुरितकञ्चुलीत्यादिप्रथमैकवचनान्तपदानि चित्कलेत्यस्य विशेषणानि तैर्विशेषिता काञ्चीपुरे मम दृशोः सरणिं नु इति वितर्के कदाश्नुत इत्यन्वयः ॥८३॥

टीका ॥ घनौ निबिडौ यौ स्तनौ तयोर्यत्तटं उच्छ्रायस्तत् स्फुटं प्रकटं स्फुरितं प्रकाशितं कञ्चुल्यां कञ्चुक्यां यस्याः सा । अत्युच्चपीनकठोरत्वात् चञ्चली चपला शिवैकत्वसंपादने भक्तोद्धारे च त्वरावतीत्यर्थः । कृतं साधितं त्रिपुरं त्रिलोकी शासनं यया, अथवा कृतं त्रिपुरे त्रिलोक्यां शासन आज्ञा यया सा सुष्टुजनैः । सद्भिः शीलिता पुनःपुनराचरितोपासना यस्याः सा परा गुणतो रूपत ऐश्वर्याच्च सर्वेभ्यः सर्वप्रकारैः श्रेष्ठा दूरे वा उपरिचरी वा कारणरूपा वा परमयोगिनां मनसि चित्कला चितो ब्रह्मणः कलैश्वर्यं सामर्थ्यं वा चितमेव कलयति जगद्रूपेण रचयति परिणमयति या सा वा । चिद्रूपा कला चित्कला वा सैव पुष्कला परिणता सती जगद्रूपेण बहुविस्तृता । वस्तुतस्तु ब्रह्माकारतया सर्वमावृत्य स्थितेत्यर्थः । सा काञ्चीपुरे मम दृशोर्नेत्रयोः सरणिं मार्गं नु इति वितर्के कदाश्नुते प्राप्स्यतीत्यर्थः ॥ ८३ ॥

कवीन्द्रहृदयेचरी परिगृहीतकाञ्चीपुरी
निरूढकरुणाझरी निखिललोकरक्षाकरी ॥
मनःपथदवीयसी मदनशासनप्रेयसी
महागुणगरीयसी मम दृशोऽस्तु नेदीयसी ॥ ८४ ॥

अन्वयः ॥ कवीन्द्रहृदयेचरीत्यादीनि मदनशासनप्रेयस्यन्तानि पदानि महागुणगरीयसीत्यस्य विशेषणानि । सा मम दृशोर्नेदीयस्यस्त्वित्यन्वयः ॥ ८४ ॥

टीका ॥ कवीनामिन्द्राः कवीन्द्राः ज्ञानिवरास्तेषां हृदये चरन्ती विहरन्तीति तादृशी । परिगृहीता काञ्चीपुरी यया सा निरूढा चासौ करुणाझरी च तथोक्ता निरूढा करुणाया झरी धारा परंपरा यस्यां सा निरूढाऽऽरूढा करुणाझर्यां या सा वा । निखिलानां सर्वेषां लोकानां रक्षाकरी, मनसो यः पन्था मार्गस्तस्माद्दवीयसी अतिशयेन दूरे वर्तमानेत्यर्थः । मदनशासनं कामशास्त्रं मदनस्य शासनमाज्ञा वा । यद्वा मदनः कामेश्वरस्तस्य शासना आज्ञा अतिशयेन प्रिया यस्याः सा । यद्वा कामेश्वरशासनरूपं शास्त्रं अतिशयेन प्रियं यस्याः सा । यद्वा मदनं शास्तीति सः श्रीशिवस्तस्यातिशयेन प्रेयसीत्यतिवल्लभा प्राणतोधिकप्रियेत्यर्थः । महान्तो निःसीमानो गुणा महागुणाः । यद्वा महान्तः श्रेष्ठाः श्रीमद्विष्णुभागवतोक्ता । ऊनपञ्चाशत्पारमेश्वरा गुणाः । यद्वा चतुःषष्टिकलारूपा ऐश्वर्यादयो गुणा । भक्तवात्सल्यादयो गुणा वा । नानाप्रकाराः सद्गुणा वा तैर्गरीयसी अतिशयेन गुर्वी महतीत्यर्थः । मम दृशोर्नेदीयसी अतिशयेन नेत्रनिकटेचरी अस्तु भवत्वित्यर्थः ॥ ८४ ॥

धनेन न रमामहे खलजनान्न सेवामहे
न चापलमयामहे भवभयान्न दूयामहे ॥

स्थिरां तनुमहेतरां मनसि किं च काञ्चीरत—
स्मरान्तककुटुम्बिनीचरणपल्लवोपासनाम् ॥ ८५ ॥

अन्वयः ॥ धनेन न रमामहे खलजनान्न सेवामहे न चापलमयामहे भवभयान्न दूयामहे; किं च काञ्चीरतस्मरान्तककुटुम्बिनीचरणपल्लवोपासनां मनसि स्थिरां तनुमहेतराम् इत्यन्वयः ॥८५॥

टीका ॥ धनेन संपदा न रमामहे नो क्रीडामहे खलजनान् दुष्टलोकान् न सेवामहे नो भजामहे चापलं चपलतां नायामहे नाप्नुमः भवभयात्संसारभयात् न दूयामहे नो व्यथामहे च पुनः काञ्च्यां रता काञ्चीरता सा चासौ स्मरान्तकस्य श्रीशिवस्य कुटुम्बिनी। यद्वा काञ्च्यां रत एकाम्रनाथः श्रीशिवस्तस्य कुटुम्बिनी तस्या यौ चरणौ तावेव पल्लवौ अतिमृदुत्वादारक्तकान्तिमत्वाच्च तयोरुपासनां सेवां श्रीगुरुशास्त्रप्रतिपादितां मनसि तत्कृपया वयं स्थिरां दृढां तनुमहेतरां अतिशयेन कुर्म इत्यर्थः ॥ ८६ ॥

सुराः परिजना वपुर्मनसिजाय वैरायते
त्रिविष्टपनितम्बिनीकुचतटी च केलीगिरिः ॥
गिरः सुरभयो वयस्तरुणिमा दरिद्रस्य वा
कटाक्षसरणौ क्षणं निपतितस्य कामाक्षि ते ॥ ८६ ॥

अन्वयः ॥ हे कामाक्षि ! तव कटाक्षसरणौ क्षणं निपतितस्य दरिद्रस्य वा सुराः परिजना भवन्ति वपुर्मनसिजाय वैरायते त्रिविष्टपनितम्बिनीकुचतटी केलीगिरिर्भवति सुरभयो गिरो भवन्ति वयस्तरुणिमा च भवतीति शेषः ॥ ८६ ॥

टीका ॥ हे कामाक्षि ! ते तव कटाक्षसरणौ दृगन्तमार्गे क्षणं निपतितस्य दरिद्रस्य पुरुषस्य वा इति पदेन विकल्पात् धनिनोपि गृह्यन्ते। तव कटाक्षसरणौ पतिता दरिद्रा धनिनो वा तेषां सुराः देवाः परिजना भृत्या भवन्ति वपुः शरीरं मनसिजाय कामाय वैरायते वैरं करोतीत्यर्थः। त्रिविष्टपस्य स्वर्गस्य या नितम्बिन्यः स्त्रियस्तासां कुचतटी च पुनः केलीगिरिः क्रीडापर्वतो भवति सुरभयः श्लाघ्या गिरो वाण्यो भवन्ति वयोऽवस्था तस्य तरुणिमा तारुण्यं च भवतीति शेषः ॥ ८६ ॥

पवित्रयजगत्रयीविबुधबोधजीवातुभिः
पुरत्रयविमर्दिनः पुलककञ्चुलीदायिभिः ॥
भवक्षयविचक्षणैर्व्यसनमोक्षणैर्वीक्षणै—
र्निरक्षरशिरोमणिं करुणयैव कामाक्षि माम् ॥ ८७ ॥

अन्वयः ॥ हे कामाक्षि ! जगत्त्रयीविबुधबोधजीवातुभिः पुरत्रयविमर्दिनः पुलककञ्चुलीदायिभिर्भवक्षयविचक्षणैर्व्यसनमोक्षणैर्वीक्षणैर्निरक्षरशिरोमणिं मां करुणयैव पवित्रयेत्यन्वयः ८७

टीका ॥ हे कामाक्षि ! जगतां त्रयी जगत्त्रयी तस्यां ये विबुधाः पण्डितास्तेषां यो बोधस्ते ब्रह्मस्वरूपाया ज्ञानम् । यद्वा शिवेन सहैक्यरूपं तव ज्ञानम् । यद्वा " सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् " इति श्रीमद्भगवतीश्रीमुखोक्तम् । यद्वा " ब्रह्माहमस्मीति " महावाक्योक्तं तस्य जीवातुभिः संजीवनौषधिभिः ज्ञानोत्पादकैरित्यर्थः । पुरत्रयस्य त्रिपुरासुरस्य विमर्दिनः शत्रोः श्रीशिवस्य पुलका एव कञ्चुली अङ्गशोभावस्त्रं तद्ददति ये तैः भवस्याज्ञानरूपस्य द्वैतज्ञानस्य यः क्षयस्तस्मिन् विचक्षणैर्निपुणैः व्यसनं दुःखं रोगो वा तस्य मोक्षणं यैस्तैस्तव वीक्षणैः कटाक्षैः निरक्षरा मूर्खा मूकाश्च तेषां शिरोमणिं मस्तकभूषणं अत्यन्तमूर्खमित्यर्थः । करुणयैव न तु मत्कृत्यैव मूकं मां पवित्रय तव प्रकाशविमर्शसामरस्यनिर्वाणाख्यचरणचतुष्टयस्य साक्षात्करणेन तद्रूपं मे संपादय । तद्रूपं मां वा कुर्वित्यर्थः ॥ ८७ ॥

कदा कलितखेलनाः करुणयैव काञ्चीपुरे
कलापमुकुलत्विषः शुभकदम्बपूर्णाङ्कुराः ॥
पयोधरभरालसाः कविजनेषु ते बन्धुराः
पचेलिमकृपारसाः परिपतन्ति मार्गे दृशोः ॥ ८८ ॥

अन्वयः ॥ करुणयैव काञ्चीपुरे कलितखेलनाः कलापमुकुलत्विषः शुभकदम्बपूर्णाङ्कुराः पयोधरभरालसाः कविजनेषु बन्धुराः ते पचेलिमकृपारसाः दृशोर्मार्गे कदा परिपतन्ति ममेति शेषः ॥ ८८ ॥

टीका ॥ हे कामाक्षि ! इत्यनुवर्त्तनीयम् । करुणयैव काञ्चीपुरे कलितानि रचितानि खेलनानि यैस्ते तादृशाः कलापा बर्हिपिच्छास्तेषां मुकुलानि बालचन्द्रकाणि तेषामिव त्विषो दीप्तयो येषां ते तथोक्ताः शुभानां सुकृतानां कदम्बः समूहः शुभरूपकदम्बवृक्षो वा तस्य पूर्णाङ्कुराः पूर्णाः संपूर्णाः समीचीना इति यावत् । ते च तेङ्कुराश्च तादृशाः " पूर्वाङ्कुराः " इति पाठे प्रथमाभिनवोद्गमाः सर्वकल्याणरूपानां प्रथमकल्याणरूपा इत्यर्थः । पयोधरयोः स्तनयोर्यो भरो भारः तेनालसा आलस्ययुक्तास्तारुण्यविलसिता इत्यर्थः । कविजनेषु ज्ञानिलोकेषु भक्तेषु बन्धुराः श्रेष्ठाः ते प्रसिद्धाः पचेलिमकृपारसाः पचेलिमा परिपक्वा चासौ कृपा च तथाभूता तस्या रसा रसरूपा पचेलिमकृपाया रसो येषु वा ते तादृशाः दृशोर्नेत्रयोर्मार्गे कदा परिसमन्तात्पतन्ति दृष्टिमार्गे कदा यास्यन्तीत्यर्थः । ममेति शेषः ॥ ८८ ॥

अशोध्यमचलोद्भवं हृदयनन्दनं देहिना—
मनर्घ्यमधिकाञ्चि तत्किमपि रत्नमुद्योतते ॥

अनेन समलंकृता जयति शंकराङ्कस्थली
कदाऽस्य मम मानसं व्रजति पेटिकाविभ्रमम् ॥ ८९ ॥

अन्वयः ॥ अशोध्यमचलोद्भवं देहिनां हृदयनन्दनं अनर्घ्यं अधिकाञ्चि तत् किमपि रत्नमुद्योतते अनेन समलंकृता शंकराङ्कस्थली जयति अस्य रत्नस्य पेटिकाविभ्रमं मम मानसं कदा व्रजतीत्यन्वयः ॥ ८९ ॥

टीका ॥ न शोधयितुं योग्यमशोध्यं स्वतो निर्दोषत्वात् प्रकाशवत्त्वाच्च शुद्धमेवेत्यर्थः। अचलात्पर्वताद्भुद्भवतीत्यचलोद्भवं गिरिराजाधिराजहिमाचलाज्जातं श्रीपार्वत्यवताररूपमित्यर्थः। देहिनां हृदयनन्दनं जीवानां कृपया शरणप्रदत्वेन सुखप्रदत्वात् ज्ञानप्रदत्वाच्च परमानन्दप्रदम्। अनर्घ्यममूल्यं तुल्यान्यवस्तुनोऽभावात् "न तत्समश्चाप्यधिकश्च दृश्यते" इति श्रुतेः। काञ्चीमधिकृत्य वर्तते इत्यधिकाञ्चि अधिकशोभि वा तत् किमपि उपमाशून्यं अलौकिकप्रकाशकारकं "अचिन्त्या मणिमन्त्रौषधिप्रभावाः" इति योगसूत्रात्। अचिन्त्यवैभवं ऐश्वर्यसंपद्दायकं चिन्तितार्थप्रदं स्वशोभाकारकं सर्वावभासकमजरामरकारकं रत्नं उद्योतते भासते अनेन रत्नेन समलंकृता सम्यगवस्थानेन शोभिता शं करोतीति शंकरस्तस्याङ्क उत्सङ्ग एव स्थली स्थानं जयति सर्वोत्कृष्टतया वर्तते अस्य रत्नस्य पेटिकाविभ्रमं पेटिकाया मञ्जूषाया विशेषेण भ्रमं तदनुकारित्वं पेटिकाया हर्षं शोभां वा मम मनः कदा व्रजति इति वर्तमानं भविष्यत्सामीप्यात् यास्यतीत्यर्थः ॥ ८९ ॥

परामृतझराप्लुता जगति नित्यमन्तश्चरी
नृणामपि बहिश्चरी परमसंविदेकात्मिका ॥
महद्भिरपरोक्षिता सततमेव काञ्चीपुरे
ममान्वहमहंमतिर्मनसि भातु माहेश्वरी ॥ ९० ॥

अन्वयः ॥ परामृतझराप्लुता जगति नित्यं नृणामन्तश्चरी तेषां बहिश्चर्यपि परमसंविदेकात्मिका काञ्चीपुरे सततं एव महद्भिरपरोक्षिता माहेश्वरी अहंमतिः अन्वहं मम मनसि भात्वित्यन्वयः ॥ ९० ॥

टीका ॥ परामृतझराप्लुता परं च तदमृतं च तथोक्तं शिरसि कुण्डलिनीयोजनेन सहस्रदलकमलकर्णिकान्तर्गतचिच्चन्द्रमण्डलरूपशिवे शिवशक्तिसामरस्यरूपं कुण्डलिनीसंयोगजं तस्य यो झरस्तेनासमन्तात् प्लुता स्नाता कुण्डलिनीरूपा परमानन्दनिमग्ना वा जगति नृणां नित्यमन्तश्चरी कुण्डलिनीरूपान्तर्यामिणीरूपा वा सत्यपि बहिश्चरी सर्वजगद्व्यापिनी चतुर्भुजा द्वादशभुजादिरूपा वा परमा चासौ संवित् च परमसंवित् "संवित्कामेश्वरः स्मृतः" तस्य एकात्मिका एकत्वमापन्ना परमसंविच्चासौ एकात्मिकाऽद्वयरूपा तथोक्ता वा काञ्चीपुरे सततं निरन्तरमेव महद्भिर्गुरुभिः सद्भिरपरोक्षिता प्रत्यक्षीकृता श्रीगुरूक्तयुक्त्या कृताभ्यासैः पूर्व-

वर्णितैव कामाक्षी साक्षात्कारकृतेत्यर्थः । महेश्वरस्येयं माहेश्वरी अहंमतिः अहंबुद्धिः पूर्णाहंतेत्यर्थः । मम मनसि अन्वहं प्रतिदिनं भातु प्रकाशतामित्यर्थः ॥ ९० ॥

त्वमेव सति चण्डिका त्वमिह देवि चामुण्डिका
त्वमेव परमातृका त्वमपि योगिनीरूपिणी ॥
त्वमेव किल शांभवी त्वमपि कामकोटी जया
त्वमेव विजया त्वयि त्रिजगदम्ब किं ब्रूमहे ॥ ९१ ॥

अन्वयः ॥ हे अम्ब ! हे सति हे देवि इह त्वमेव चण्डिका चामुण्डा त्वमेव परमातृका योगिनीरूपिण्यपि त्वमेव शांभवी किल कामकोट्यपि त्वं जया विजया त्वमेव त्वयि त्रिजगत् अस्ति किं ब्रूमहे इत्यन्वयः । वयमिति शेषः ॥ ९१ ॥

टीका ॥ हे सति ! हे दाक्षायणि वस्तुतस्तु हे सद्रूपे ! इत्यर्थः । अतस्त्वमेवेहास्मिन् जगति चण्डिका दुर्गास्वरूपान्तरा हे देवि ! द्योतनशीले स्वप्रकाशरूपे त्वमेवाष्टमातृमध्यगता चामुण्डा हे अम्ब ! परा पराप्रासादमन्त्रदेवतारूपा । यद्वा परा वाणीरूपा चासौ मातृका च परमातृका त्वमपि त्वमेवेत्यर्थः। अपि शब्दोत्रावधारणेर्थे। योगिनीरूपिणी योगः परशिवसंबन्धः सोस्या अस्तीति तथोक्ता। यद्वा योगिनीनामावरणशक्तीनां रूपिणी । यद्वा याकिन्यादिसप्तधातुदेवतारूपयोगिनीनां रूपिणी। यद्वा दिव्ययोग्यादीनां चतुःषष्टियोगिनीनां रूपिणी । यद्वा "ऊर्द्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निःस्थले वा पाताले वाऽनले वा पवनसलिलयोर्यत्र कुत्र स्थिता वा । क्षेत्रोपक्षेत्रपीठेष्वपि च कृतपदे" इति शान्तिस्तवराजोक्तयोगिनीरूपिणी । यद्वा "या काचिद्योगिनी रौद्रा सौम्या घोरतरा परा । खेचरी भूचरी व्योमचरी प्रीतास्तु मे सदा" इति तन्त्रवचनोक्तरूपा योगिनीरूपिणी । यद्वा समस्तजगदात्मिकाः पराशिवसंबन्धिन्यो योगिन्यस्तद्रूपिणी । यद्वा सार्द्धत्रिकोटियोगाः शिवैकसंवेद्याः तेऽस्यां सन्तीति सा योगिनी तद्रूपिणी । यद्वा सार्द्धत्रिकोटियोगास्ते आसु सन्तीति योगिन्यस्तासां रूपाणि अस्यां सन्तीति सा तथा किलेति सत्ये त्वमेव शांभवी शंभोरियं शांभवी शक्तिः। शांभवी मुद्रारूपा वा। कामकोटी पूर्वोक्तलक्षणा त्वमपि, एवार्थेपि शब्दः। यद्वा पुनरर्थे। जया विजया च शक्तिद्वयम्। श्रीपार्वतीसख्यौ वा। ते अपि कारणरूपया त्वया अभिन्ने अतः ते अपि त्वमेव। त्वय्येव त्रिजगत् "आधारभूता जगतस्त्वमेका" इतिमार्कण्डेयात्। अतो हे अम्ब ! किं ब्रूमहे । स्तोतारः स्तुत्यं स्तुतिः सर्वमपि यत्किंचिद्वस्तुमात्रं त्वमेवेति भावः। अतः किं वर्णयामो वयमिति शेषः। "किं वर्णयाम तव रूपमचिन्त्यम्" इति मार्कण्डेयपुराणवचनात् । अनेन श्रीमतीश्रीमुखोक्तम् "सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम्" इति श्रीमद्भगवतीभागवतोक्तवचनमुपनिपत्सारभूतं तस्यायमर्थो दर्शित इति बोध्यम् ॥ ९१ ॥

परे जननि पार्वति प्रणतपालिनि प्रातिभ–
प्रदात्रि परमेश्वरि त्रिजगदाश्रिते शाश्वति ॥
त्रियम्बककुटुम्बिनि त्रिपदसङ्गिनि त्रीक्षणे
त्रिशक्तिमयि वीक्षणं मयि निधेहि कामाक्षि ते ॥ ९२ ॥

अन्वयः ॥ हे कामाक्षि ! इत्यस्य परे इत्यादिसर्वपदानि विशेषणानि एकवचनान्तसंबोधनानि। ते तव वीक्षणं मयि निधेहीत्यन्वयः ॥ ९२ ॥

टीका ॥ हे परे सर्वेभ्यः श्रेष्ठे उपरि वर्तिनि आदिकारणे " न तस्य कार्यं करणं न विद्यते न तत्समश्चाप्यधिकश्चदृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " इति वेदप्रतिपादितपरब्रह्मसहजशक्ते त्वं एकानाना सत्यपि नामगुणरूपचरित्रे ! हे जननि ! हे मातः! पर्वतस्यापत्यं स्त्री पार्वती तत्संबोधनं हे तथोक्ते ! हे प्रणतानां पालिनि ! प्रतिभाया भावः प्रातिभं हे तत्प्रदात्रि ! परमा चासावीश्वरी च परमेश्वरी संबुद्धौ हे तथोक्ते ! त्रिजगदाश्रितं यस्याः सा तादृशी हे तथोक्ते ! अधिष्ठानरूपे इत्यर्थः । हे शाश्वति हे ध्रुवरूपे ! हे त्रियम्बककुटुम्बिनि ! हे त्रिनेत्रकलत्ररूपे त्रिपदानां त्रिस्थानानां भूर्भुवःस्वर्गाणां सङ्गः संयोगोऽस्या अस्यां वास्तीति सा हे तादृशे ! यद्वा मूलाधारहृदयाज्ञास्वग्निसूर्यचन्द्ररूपाणि पादनि तेषां संयोगश्चिन्द्रमण्डलगमनवेलायां यस्याः सा त्रिपदानां वाग्भवकामराजशक्त्याख्यानां सङ्गः संयोगोऽस्यां वा साक्षाच्छ्रीषोडशाक्षरीरूपेत्यर्थः । यद्वा त्रिपदानां वाच्यवाचकवक्तॄणां सङ्गः संयोगः। यद्वा गायत्र्यास्त्रिपदानां संयोगोऽस्यां प्रणवरूपिण्याम्। यद्वा गायत्र्यास्त्रिपदानां सङ्गः संयोगोस्यास्तुर्यपदरूपायाः सा। यद्वा गायत्र्यास्त्रिपदानां सङ्गः संयोगोऽस्याः शताक्षरगायत्रीरूपाया अस्तीति सा हे तथोक्ते ! त्रीक्षणे त्रीण्यक्षीणि सोमसूर्याग्निरूपाणि यस्याः सा संबुद्धौ हे तादृशे ! त्रिशक्तिमयि तिस्रश्च ताः महाकालीमहालक्ष्मीमहासरस्वत्यः शक्तयः । यद्वा सृष्टिस्थित्यन्तकारिका वामाज्येष्ठारौद्र्यश्च महापदपूर्विकाश्च कामेश्वरीवनेश्वरीभगमालिन्यश्च ब्राह्मीवैष्णवीमाहेश्वर्यश्च इच्छाज्ञानक्रियारूपाः त्रिशक्तयस्तन्मयी हे तथोक्ते ! हे कामाक्षि मयि ते वीक्षणं निधेहि स्थापयेत्यर्थः ॥ ९२ ॥

मनोमधुकरोत्सवं विदधती मनीषाजुषां
स्वयंप्रभववैखरीविपिनवेदिकालम्बिनी ॥
अहो शिशिरताकृपामधुरसेन कम्पातटे
चराचरविधायिनी चरति कापि चिन्मञ्जरी ॥ ९३ ॥

अन्वयः ॥ मनीषाजुषां मनोमधुकरोत्सवं विदधती सती स्वयंप्रभववैखरीविपिनवेदिकालम्बिनी चराचरविधायिनी कापि चिन्मञ्जरी अहो शिशिरताकृपामधुरसेन कम्पातटे चरतीत्यन्वयः ॥ ९३ ॥

टीका ॥ मनीषां बुद्धिं जुषन्ते सेवन्ते इति तादृशास्तेषां मन एव मधुकरो भ्रमरस्तस्योत्सवं हर्षं विदधती स्वरूपसंपदया तेषां मनसि दर्शनोत्सवविधानं कुर्वती सती स्वयं प्रकर्षेण भवतीति स्वयंप्रभवा सा चासौ वैखरी वेदलक्षणा वाणी च तादृशी सैव विपिनं तत्संबंधिनी वेदिकेव वेदिका स्थितिकरणस्थानं उपनिषत्तदालम्बिनी उपनिषन्निलया स्वयंप्रभववैखरीवाण्यात्मकं वनमक्षराणां बाहुल्यात् "सिद्धो वर्ण" इति कलापव्याकरणसूत्रप्रामाण्यात् तत्संबन्धिनी वेद एव वेदिका तदालम्बिनी तत्र वाच्यार्थरूपेण लक्ष्यार्थरूपेण च स्थायिनी । यद्वा स्वयंप्रभववैखरीविपिनवेदिकाया आलम्बनमस्यां वा सा तदाधारा नादविन्दुरूपेत्यर्थः । चरं चाचरं च चराचरं जङ्गमस्थावरं द्विविधं जगत् तत् विधीयते यया सा तथोक्ता कापि अद्भुतपूर्वोक्तवर्णितगुणगणाऽघटनघटनापटीयसीत्वाद्यनन्तगुणा वा चिदेव मञ्जरी चितो वा मञ्जरी सत्तास्फुरणारूपा परब्रह्माभिन्ना ईदृशी अहो इत्याश्चर्ये शिशिरताकृपामधुरसेन शिशिरस्य शीतलस्य भावः शिशिरता तया युक्तः कृपाया मधुरसस्तेन मिष्टरसेनामृतरूपरसेन कम्पानद्यास्तटे चरति विहरतीत्यर्थः । मञ्जर्या वने संभवात्, स्थावरत्वात् चिद्रूपत्वेन तस्या नदीतटे विहरणमित्याश्चर्यम् । पुनः मञ्जर्या ब्रह्मणा विधेयं रूपं सा चराचरविधायिनीत्याश्चर्यं च । ईदृशी समस्तजगदीश्वरी सती नन्दनवनं मुक्त्वा श्रीब्रह्माण्डपुराणान्तर्गतललितोपाख्यानवर्णितसुधासिन्धोर्मणिद्वीपस्य चिन्तामणिगृहस्य कल्पहरिचन्दनसंतानपारिजातचम्पकादिवनवाटिकायाश्च क्रीडाविहारं त्यक्त्वा कम्पानदीतटे काञ्चीपुरे विहरत्यतोऽहो शिशिरताकृपामधुरसमाहात्म्यमित्यलं विस्तरेण ॥ ९३ ॥

कलावति कलाभृतो मुकुटसीम्नि लीलावति
स्पृहावति महेश्वरे भुवनमोहने भास्वति ॥
प्रभावति रमे सदा महितरूपशोभावति
त्वरावति परे सतां गुरुकृपाम्बुधारावति ॥ ९४ ॥

त्वयैव जगदम्बया भुवनमण्डली सूयते
त्वयैव करुणार्द्रया तदपि रक्षणं नीयते ।
त्वयैव खरकोपया नयनपावके हूयते
त्वयैव किल नित्यया जगति संततं स्थीयते ॥ ९५ ॥

अन्वयः ॥ हे मुकुटसीम्नि कलाभृतः कलावति हे लीलावति महेश्वरे हे स्पृहावति हे भुवनमोहने भास्वति हे प्रभावति हे रमे हे सदा महितरूपशोभावति हे त्वरावति हे परे,

परे त्वरावति वा। हे सतां गुरुकृपाम्बुधारावति त्वयैव जगदम्बया भुवनमण्डली संततं सूयते त्वयैव करुणार्द्रया तद्रक्षणमपि नीयते त्वयैव खरकोपया नयनपावके हूयते त्वयैव नित्यया जगति संततं किल स्थीयते इत्यन्वयः॥ ९४॥ ९५॥

टीका॥ मुकुटस्य सीम्नि कलाभृतश्चन्द्रस्य कलाऽस्या अस्यां वा अस्तीति सा तत्संबुद्धौ हे तादृशे! लीलास्यामस्तीति सा तत्संबुद्धौ तथोक्ते! महेश्वरे श्रीशिवे सदा स्पृहा वाञ्छा अस्या अस्तीति हे तादृशे! भुवनानां मोहनं यस्याः भुवनेषु मोहना या सा हे तादृशे! भाः दीप्तिरस्या अस्यां वा अस्तीति हे तथोक्ते! प्रभा शोभा अस्या अस्तीति हे तथोक्ते! रमते सर्वत्रेति रमा हे रमे! सदा सर्वस्मिन् काले महितस्य पूज्यस्य रूपस्य शोभा अस्यामस्तीति तथोक्ता। यद्वा महितं पूजितं श्लाघितमिति यावत्। तत् रूपं सौन्दर्यं च शोभा छविश्च महितरूपशोभे ते अस्याः स्त इति सा महिता रूपस्य शोभा अस्यामस्तीति सा वा तत्संबुद्धौ हे तादृशे! भक्तोद्धारे त्वरा शैघ्र्यमस्याः सा तादृशे! हे परे हे सर्वतोधिके! हे सर्वोपरि वर्तिनीति यावत्। यद्वा परे परशिवे हे त्वरावति! इति योज्यम्। यद्वा परे शत्रौ मारणार्थं हे त्वरावति! वा सतां सत्पुरुषाणां अत्र चतुर्थ्यर्थे षष्ठी। गुर्वी चासौ कृपा च गुरुकृपा सैवाम्बु जलं तस्य धारा परंपरा अस्या अस्तीति सा सतामर्थे गुरुकृपाधारिणीत्यर्थः। इत्येवं रटतो मे त्वत्कृपया दिनान्यायान्तु यान्तु च। यद्वा मां कृपया विलोकय। यद्वा मां शरणागतं कुर्विति। यद्वा अहं त्वां नमस्करोमि। यद्वा ते भक्तिं मह्यं प्रदेहीत्यादि शेषः। यथायोग्यानि पदानि संभवितार्थानि महेश्वरे इति सप्तम्येकवचनान्तपदस्य विशेषणानि कार्याणि। तैर्हे त्वरावति! हे स्पृहावति! हे लीलावतीति श्रीकामाक्ष्याः संबोधनान्तपदानि योज्यानीति चातुर्यम्। वस्तुतस्तु प्रकृतः श्रीकामाक्ष्याः स्तस्तवोस्त्यतो महेश्वरे परे च वा इति पदं हित्वाऽन्यानि सर्वाणि स्त्रीलिङ्गान्येव संबोधनपदानीत्यलम्। त्वयैव कामाक्ष्यैव जगतां मात्रा वामारूपया भुवनमण्डलीसमूहो विरच्यते। त्वयैव कामाक्ष्यैव करुणार्द्रया ज्येष्ठारूपया भुवनमण्डलीरक्षणमपि नीयते पोषणं प्रति स्थाप्यते। त्वयैव कामाक्ष्यैव खरकोपया प्रचण्डकोपया रौद्रीरूपया प्रलयकालस्वतन्त्रक्रीडायां नयनपावके स्वकीयललाटनेत्राग्नौ चतुर्दशभुवनात्मकं समस्तं जगत् हूयते भस्मसात्क्रियते। जगति संसारे त्वयैव कामाक्ष्यैव नित्ययैव तुरीयातीतरूपयैव सर्वाधिष्ठानपरब्रह्माखण्डसद्रूपयैव संततं नित्यं स्थीयते किल॥ ९४॥ ९५॥

चराचरजगन्मयीं सकलहृन्मयीं चिन्मयीं
गुणत्रयमयीं जगत्रयमयीं त्रिधामामयीम्।
परापरमयीं सदा दशदिशानिशाहर्मयीं
परां सततसन्मयीं परमचिन्मयीं शीलये॥ ९६॥

अन्वयः ॥ सर्वपदानि द्वितीयैकवचनान्तानि परमचिन्मयीमित्यस्य विशेषणानि । तत्पद-वाच्यां परदेवतां शीलये अहमिति शेषः ॥ ९६ ॥

टीका ॥ त्रिधामा त्रिलोकी । धामन्शब्दाट्टाप् । तन्मयीम् । अन्यपदार्थः स्पष्ट एवेत्यलं व्याख्यानेनेति ॥ ९६ ॥

जय जगदम्बिके हरकुटुम्बिनि नेत्ररुचा
जितशरदम्बुजे घनविडम्बिनि केशरुचा ॥
परमवलम्बनं कुरु सदा पररूपधरे
मम गतसंविदो जडिमडम्बरताण्डविनः ॥ ९७ ॥

अन्वयः ॥ हे जगदम्बिके ! हे हरकुटुम्बिनी ! हे नेत्ररुचा जितशरदम्बुजे ! हे केशरुचा घनविडम्बिनि ! हे पररूपधरे ! त्वं जय । गतसंविदो जडिमडम्बरताण्डविनो मम परमवलम्बनं कुर्वित्यन्वयः ॥ ९७ ॥

टीका ॥ जगतामम्बिका माता तत्संबुद्धौ तथोक्ते ! हे हरस्य कुटुम्बिनि ! स्वेच्छयैव क्रीडार्थं तत्पत्नि ! नेत्राणां रुचा कान्त्या जितानि शरदृतूनामम्बुजानि प्रफुल्लितानि कमलानि यया हे तथोक्ते ! केशानां रुचा घनानां यो विडम्बोऽनुकरणं छटा सोऽस्या अस्तीति सा हे तादृशे ! हे परस्य ब्रह्मणो रूपधरे ! सदा ब्रह्मरूपे इत्यर्थः । यद्वा परं श्रेष्ठं रूपं तस्य धरे त्वं जय सर्वोत्कर्षेण वर्तस्वेत्यर्थः । गता संवित् यस्मात् यस्य वा स गतसंवित् तस्य गतसंविदो जडस्य भावो जडिमा तस्य यो डम्बर आडम्बर ऐश्वर्यमिति यावत् तेन युक्तस्ताण्डवः पुरुषकृतो नृत्यविशेषः सोऽस्यास्तीति तादृशस्तस्य विगतज्ञानस्य अत्यन्तजडबुद्धेरीदृशस्य मम परं श्रेष्ठं अवलम्बनमाश्रयं कुरु त्वच्चरणमिति शेषः ॥ नरकुटकं वृत्तमिदम् ॥ ९७ ॥

भुवनजननि भूषाभूतचन्द्रे नमस्ते
कलुषशमनि कम्पातीरगेहे नमस्ते ॥
निखिलनिगमवेद्ये नित्यरूपे नमस्ते
परशिवमयि पाशच्छेदहस्ते नमस्ते ॥ ९८ ॥

अन्वयः ॥ सर्वस्त्रीलिङ्गपदानि एकवचनान्तसंबोधनानि । हे तत्पदवाच्यदेवते ! ते तुभ्यं नमोस्त्विति शेष इत्यन्वयः ॥ ९८ ॥

टीका ॥ पाशः पशुपाशः घृणिशङ्केत्याद्यष्टकरूपस्तस्य च्छेदो हस्ते वशे यस्याः । यद्वा पाशोऽज्ञानं इदंतास्पदं द्वैतरूपं जगद्भयप्रदम् । "द्वितीयाद्वै भयं भवति" इति श्रुतेः । तद्दूरीकरणार्थमभयमुद्रा हस्ते यस्याः सा । यद्वा भक्तानां पाशच्छेदरूपं यदीप्सितं तद्दानसामर्थ्य-

ख्यापनाय वरमुद्रा भक्तमोक्षप्रदायिनी भक्तिप्रदायिनी वा तस्याश्च पाशच्छेदस्यावश्यभावनायाः पाशच्छेदो वरदानमुद्रा । यद्वा पाशो यमस्य पाशः । यद्वा पाशो बन्धरूपो यस्य कस्यापि कार्यस्यावरोधरूपस्तस्य नाशो हस्ते यस्याः सा तत्संबुद्धौ हे पाशच्छेदहस्ते ! ते तुभ्यं नमोस्तु अन्यत् सुगमम् । मालिनीवृत्तम् । तल्लक्षणं मालिनी नौ म्यौ य् चेति ॥ ९८ ॥

मनोविपिनधाविनं सततमेव काञ्चीपुरे
विहाररसिका परा परमसंविदुर्वीरुहे ॥
कटाक्षनिगडैर्दृढं हृदयदुष्टदन्तावलं
चिरं नयतु मामकं त्रिपुरवैरिसीमान्तिनी ॥ ९९ ॥

अन्वयः ॥ सततमेव काञ्चीपुरे विहाररसिका परा त्रिपुरवैरिसीमन्तिनी मनोविपिनधाविनं हृदयदुष्टदन्तावलं कटाक्षनिगडैर्दृढं परमसंविदुर्वीरुहे मामकं चिरं नयतु इत्यन्वयः ॥ ९९ ॥

टीका ॥ सततमेव काञ्चीपुरे विहारस्य रसिका परा सर्वेभ्यः श्रेष्ठा सर्वानतीत्य वर्तते सा परा वा । त्रिपुरस्य वैरी श्रीशिवस्तस्य सीमन्तिनी स्वकीयपुंरूपस्य शिवस्य क्रीडया स्त्रीरूपा वा । मन एव विपिनं वनं तस्मिन्धाविनं ममायं मामकस्तं हृदयं स्वान्तमेव दुष्टदन्तावलं हृदयदुष्टदन्तावलो मनोदुष्टहस्ती तं कृपाकटाक्षा एव निगडाः शृङ्खलाः बन्धनानि तैर्दृढं यथा स्यात्तथा परमा चासौ संविच्च परमसंवित् ब्रह्मज्ञानं सैव उर्वीरुहो वृक्षस्तस्मिन् चिरं सदा नयतु प्रापयतु इत्यर्थः । पृथ्वीवृत्तम् ॥ ९९ ॥

क्वणत्काञ्ची काञ्चीपुरमणिविपञ्चीलयझरी
शिरःकम्पा कम्पावसतिरनुकम्पाजलनिधिः ॥
घनश्यामा श्यामा कठिनकुचसीमा मनसि मे
मृगाक्षी कामाक्षी हरनटनसाक्षी विहरताम् ॥ १०० ॥

अन्वयः ॥ क्वणत्काञ्ची काञ्चीपुरमणिविपञ्चीलयझरीशिरःकम्पा कम्पावसतिः अनुकम्पाजलनिधिः घनश्यामा कठिनकुचसीमा मृगाक्षी हरनटनसाक्षी श्यामा कामाक्षी मे मम मनसि विहरतामित्यन्वयः ॥ १०० ॥

टीका ॥ क्वणन्ती काञ्ची कटिमेखला यस्याः सा काञ्चीपुरे मणिना खचिता या विपञ्ची वीणा तस्यां लयस्य या झरी तया हेतुभूतया शिरःकम्पो यस्याः सा अनुकम्पायाः कृपायाः जलनिधिः कृपासागरेत्यर्थः । घन इव श्यामो वर्णो यस्याः सा सजलजलदाभेत्यर्थः । कठिना कठोरा कुचयोः सीमा यस्याः सा मृगस्य अक्षिणीवाक्षिणी यस्याः सा हरस्य प्रलये यन्नटनं नृत्यं तस्य साक्षिणी " कल्पोपसंहृतिषु कल्पिततांडवस्य देवस्य खण्डपरशोः परभैरवस्य । पाशाङ्कुशैक्षवशरासनपुष्पबाणा सा साक्षिणी विजयते तवमूर्तिरेका ॥ १ ॥ " इति

कल्याणवृष्टिस्तोत्रोक्तवचनप्रामाण्यात् शिवताण्डवसाक्षिणी ईदृशी श्यामा श्रीकामाक्षी मे मम मनसि विहरतां विहारं कुरुतां सदेति शेषः ॥ १०० ॥

इमं परवरप्रदं प्रकृतिपेशलं पावनं
परावरचिदाकृतिप्रकटनप्रदीपायितम् ।
स्तवं पठति नित्यदा मनसि भावयन्नम्बिका
जपैरलमलं मखैरधिकदेहसंशोषणैः ॥ १०१ ॥

अन्वयः ॥ इमं परवरप्रदं प्रकृतिपेशलं पावनं परावरचिदाकृतिप्रकटनप्रदीपायितं स्तवं मनसि अम्बिकां भावयन् सन्यो नरः सदा पठति तस्य अधिकदेहसंशोषणैर्जपैर्मखैश्चाल-मलमित्यन्वयः ॥ १०१ ॥

टीका ॥ परस्मात् परदेवतापादारविन्दात् वरप्रदम् । यद्वा परेभ्यः श्रेष्ठेभ्यः श्रीमत्या नानाविभूतिस्वरूपेभ्यो वरप्रदं परेषु श्रेष्ठेषु वरः श्रेष्ठः पदार्थः परदेवतापदं तस्य प्रदं वा। यद्वा अज्ञानावृतसकामानां परः श्रेष्ठो यो वरो यद्यदीप्सितं तस्य प्रदम् । प्रकृत्या स्वभावेन पेशलं मनोहरं पावनं पवित्रं परेण जगतः कारणेन प्रकृत्या सहापरं कार्यं नामरूपक्रियात्मकं जगत् तयोर्द्वयोर्या चिदाकृतिः चैतन्याकारस्तस्याः प्रकटने परदेवताकाराभासने प्रकर्षेण दीप इवाच-रितं प्रदीपायितं नानाकारद्वैतध्वान्तनाशकं साक्षात्कारावभासकं परदेवतास्वरूपप्रकाशकं इमं स्तवं, नित्यदा अम्बिकां जगन्मातरं श्रीकामाक्षीं ध्यायन् सन् यो नरः पठति तस्य अधिकानि बहुलानि देहसंशोषणानि येषु तैर्यमनियमादिसंयुक्तैरन्यदेवतानां मन्त्रादिजपैर्यज्ञैः अलम् । अलं परिपूर्णे वर्जनार्थे तृप्तौ निरर्थकत्वे च । तेनान्यैः साधनैर्न किमपि प्रयोजनम् । क्लेशबाहुल्याद्य-ज्ञादीनामाराधनमन्यदेवतानां च मा कुरु ॥ अनेन स्तवेनैव सर्वकामाप्तेः, धर्मार्थकाममोक्षरूप-चतुर्विधपुरुषार्थसिद्धेरिति भावः । पृथ्वीवृत्तम् ॥ १०१ ॥

रसवेदाङ्कभूसंख्यशरद्यूर्जरमोत्सवे । कौमुद्याख्येर्पिता स्वर्णमालाम्बाङ्घ्रिसरोजयोः ॥ १ ॥
इति श्रीमूककविसार्वभौमकृतस्य स्तुतिशतकस्य स्वर्णमालाख्या टीका समाप्तिमगमत् ॥
मूकोक्त्यम्बुध्यर्थप्रवरमणिग्रथितकाञ्चनी माला । गुणलालित्यनिबद्धा योग्यानामस्तु विनो-दाय ॥ १ ॥ मूकस्योक्तिरूपाम्बुधिः तस्य तस्मिन्वार्थरूपाः प्रवराः श्रेष्ठा मणयस्ताभिर्ग्रथि-ता काञ्चनी सौवर्णी पर्यायतः सुवर्ण नामकेन कविना कृता च माला कण्ठावलम्बिन्या-भरणरूपा; सुष्ठु वर्णानामियं माला । सौवर्णी काञ्चनी माला कीदृशी पुनः; ललिताया इमे लालित्याः ललिता एव लालित्या वा ते च ते गुणाः सौन्दर्यादयोऽनेकविधा गुणाः सूत्राणि च तादृशटीकारूपमालाया अर्थचमत्कृत्यादयो गुणास्तैर्निबद्धा विरचिता ईदृशी योग्यानां श्रीमतीपादारविन्दमलिन्दकवितारसाभिज्ञानां विनोदायाल्हादायास्तु भवतु ॥ १ ॥

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | ८ | तस्यां | तस्या |
| ३ | २२ | आनदं | आनन्दः |
| ४ | ५ | यन्मृदुस्मितंतेन | मृदुचस्मितंयस्यतेन |
| | १४ | चातिशोभयन्ति | चयथाक्रममतिशोभयन्ती |
| | १४ | रक्षयन्ती | रक्षन्ती |
| | १६ | रणभरणोस्वा | रणोत्सवाच्च |
| | १७ | आधिरथस्या | अधिरथस्या |
| ५ | २–३ | व्यापयन्नित्यर्थः | ० |
| | ११ | करुणायाभावः महामात्र | करुणैव राधोरण |
| | २१ | मनोहरा | श्रीरिव |
| ६ | १५ | संश्रयणात् | संश्रयणहेतुकात् |
| | १८ | वाक्षण | वीक्षण |
| ७ | २० | चरणाराधनरूपतः | चरणाराधनादात्मन्याहितेनगुणविशेषेण |
| ८ | १५ | जनस्य | तद्विकारस्य |
| | १७ | दृढयन् | द्रढयन् |
| | २३ | दृढयन् दृढीकुर्वन् | द्रढयन् द्रढीकुर्वन् |
| | २४ | नृत्यतामित्यर्थः | प्रसरत्वित्यर्थः |
| १० | २ | वैभवो | वैभवं |
| | ४ | चञ्चुः | चुञ्चुः |
| | ६ | वित्तंक्रीड़ाचञ्चुः | वित्तःक्रीडाचुञ्चुः |
| ११ | २१ | नीलवितानस्यजालसमू | नीलवितानस्यजालविता |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | ह्रोयस्मिन् तस्मिन् | नसमूहो यस्मिन् तस्मिन् |
| १२ | ४ | अक्षिप्ररोहं | अक्षि |
| | ४ | क्षणार्धं | क्षणार्द्धमपि |
| | ४ | मयि | मयिप्ररोहं |
| | ८ | प्ररोहंअक्षिणीप्रकर्षेण रोहतेआरुढो भवति यस्तं कटाक्षं | नेत्रमिदंकर्तृ पदम् |
| | ६ | मयि | मयिप्रकर्षेणारोहणंममावलोकनमिति यावत् |
| १३ | १२ | कटाक्षेणायुक्ताक्षुपाभवति | अवलोकनेन पारतन्त्रीपराधीनतायेषामवलोकनासक्तस्तव |
| १३ | २० | दासको | दाशको |
| | २१ | दासको | दाशको |
| | २३ | दासको | दाशको |
| १४ | १६ | कारयत्वित्यर्थः | करोत्वित्यर्थः |
| १५ | ६ | धेत्त | धत्ते |
| १६ | ६ | तद्रूपोयः फेनस्तस्य राशिः | तद्रूपःफेन राशिः |
| | १० | सन्मुख | सन् मुख |
| | १० | श्रमितः | श्रान्तः |
| | १७ | स्निग्धी | स्निग्धा |
| | १७ | उद्गमिता | उद्गता |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | १८ | श्यामाकृ-ष्णाऽपि | श्यामाकृष्णा पिरात्रिश्च |
| | २० | मीर्षाम् | मीर्ष्याम् |
| | २४ | म्नन्यत्रि | मन्यत्रि |
| १७ | १७ | संएव | सएव |
| १८ | १० | जलम्वर्षणे | जलवर्षणे |
| | २१ | दुर्वोद्धेऽपि | दुर्वोधेऽपि |
| १९ | ८ | कथं | न |
| | ९ | महदाश्चर्य | महानाश्चर्य्य |
| | १५ | अविरन्त | अविरतं |
| | १७ | भावत्वं | भाववत्त्वं |
| २० | ८ | नीराजनो- | मणिभिःखचि |
| | ९ | त्सवेतरङ्गितो | तयोःकुण्डल |
| | १० | दीपितादीप- मालायया सातथोक्ता मणिभिःख चितयोःकु ण्डलयोःश्रीः शोभाराजति शोभतइत्यर्थः | योःश्रीःशोभा नीराजनोत्स वेतरङ्गितोदी पितादीपमा लाराजति इत्यर्थ |
| | ११ | तां | मां |
| | १४ | स्नपयताम् | स्नपय |
| | १७ | स्नपयता | |
| | १८ | माप्लावयताम् | स्नपयाभिपिञ्च |
| २१ | ९ | वा | वायस्मिन्तादृशः |
| | १७ | श्रीरूपिणी | स्त्रीरूपिणी |
| | २० | चातुर्य्यं | चातुर्य्यमनुकरणं |
| २२ | १३ | सरोवरी | सरोवरं |
| २३ | ३ | ते | तव |
| | ११ | सुशमा | सुषमा |
| | २७ | पादानि | पादाम्नि |
| २४ | ७ | श्रीहाको | श्रीहारको |
| | १३ | पटलाः | पटलानि |
| | १५ | मुखस्य | मुखमेव |
| | २४ | पल्लवैर्नीलो त्पलैःकुवलयै श्च | पल्लवैश्च |
| २५ | २२ | कटाक्षरूप तमसां | कटाक्षरूपस्त मसां |
| २६ | २० | वीक्षणं | क्षणवीक्षणं |
| २७ | १० | सापत्न्याभा वात् | सापत्न्यभा वात् |
| | १९ | शामकाति | शमकाति |
| | २९ | भावत्वं | भाववत्त्वं |
| २८ | १९ | शंक्का | शङ्का |
| ३० | २५ | तुल्यं | तुल्यः |
| ३१ | ८ | वशंकरः | द्वशकरः |
| | ९ | सअत्यंतदरि द्री | सोत्यन्तदरि द्रः |
| | १५ | मकरंदं | क्षौद्रं |
| | १९ | करुणाया भावः | करुणैव |
| ३२ | १ | शक्का | शङ्का |
| | ४ | एतद्वय | एतद् द्वय |
| | १० | जुपंति | जुषन्ते |
| | १६ | रित्या | रीत्या |
| | २० | वीक्षणानी | वीक्षणानि |
| | २१ | काष्ट | काष्ठं |
| ३३ | १० | वश्यमानं | वशंनीय |
| | १९ | पोपापोषको | पोषःपोषको |
| | २८ | करुणाया भावः | कारुण्यैव |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| | १३ | किंकरितंकिं करंजातं | किंकरितंकिंकरीकृतं एवंविधेषुस्थलेष्वेवं विधाव्याख्या बोध्या |
| | २२ | प्रफुल्लनत्वात् | प्रफुल्लत्वात् |
| | २७ | तत्अञ्जनं कज्जलं | अञ्जनंकज्जलं तत् |
| ३६ | ५ | यस्मिन्तत् | तत् |
| | ८ | उलत्पम् | उत्पलं |
| | १४ | सुष्डु | सुष्ठु |
| | २४ | इदम् | इमम् |
| | २५ | सुष्डु | सुष्ठु |
| | २८ | मयी | मय |
| ३९ | ३ | यस्मिन्क्षणे | यदवधि |
| | ४ | तस्मिन्नेवक्षणे | तदवधि |
| ४० | ६ | मेवः | मेव |
| | १६ | विचित्रचित्र महिमा | विचित्रचित्र चरितं |
| | १६ | स्वानां | स्वेषां |
| ४१ | १२ | रुर्मुख्योवा | रुः |
| | १५ | आशिषां | मंगलानाम् |
| | २० | स्मित | स्मितं |
| | २२ | वन्धीमः | वन्नीमः |
| ४२ | ३ | सांचन | सांन |
| ४३ | ११ | शिशिरीशीतलीकरोतु | शिशिरीकरोतुशीतलीकरोतु |
| | ११ | सादृशोक्त्या | शादृश्योक्त्या |
| ४४ | ७ | कल्मश | कल्मष |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| | ८ | काङ्क्ष्या | काङ्क्षा |
| | १६ | जगत्रय | जगत्त्रय |
| | १९ | स्तनतटी | समुन्नतस्तनतटी |
| | २२ | स्तनतटी | समुन्नतस्तनतटी |
| | २२ | तदादा | तदा |
| ४५ | १८ | मञ्जुस्मित | मञ्जुःस्मित |
| | २१ | मञ्जुस्मित | मञ्जुःस्मित |
| ४६ | १३ | दंशे | देशे |
| ४७ | २४ | मुहुराविभ्रती | आविभ्रती |
| | २५ | शरीरंसौधाङ्गणं | शरीरंतदेव |
| ४७ | २८ | पराशक्तेः | परशक्तेः |
| ४८ | ८ | रसएव | रसःसएव |
| ४९ | १० | दन्तपत्र | दन्तपत्रं |
| | २२ | कण्ठस्याध्युपरि | कण्ठेइत्यधिकण्ठं |
| | २४ | विभ्रति | विभर्त्ति |
| ५० | ६ | वैरीवाचरतीति | वैरंकरोतीति |
| | ९ | चन्द्रिका | चन्द्रिकेति |
| | २० | वक्रेकारयति | वक्रेकरोति |
| | २१ | नम्रङ्कारयति | नम्रंकरोति |
| ५१ | ९ | विलोडते | विलोडति |
| | २० | चैतयोर्भेदं | चभेदं |
| ५२ | २ | चञ्चला | चञ्चलाः |
| | १३ | लोलाश्चपलाः | व्यालोलानां चपलानां |
| | २३ | अत इदं | इदं |
| | २६ | मतिशयेन | मतिशयेन पुनःपुनर्वा |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५४ | ५ | कलयतु | कल्लोलयतु |
| | ८ | रात्मिका | रात्मिकायासा |
| | १० | कल्याणं | कल्याणं,आशु |
| | २६ | वर्षन्ती | वर्षति |
| ५५ | २३ | मन्थरमन्द-स्मितं | मन्थरंमदं-स्मितं |
| ५७ | ४ | निवहाःअस्माकं | निवहानोऽस्माकं |
| ५८ | ७ | कूलङ्कपं | कूलंकषं |
| | १४ | धुर्य्येण | धुर्य्येणस्मित कन्दलेन |
| | १५ | यस्वे त्यन्वयः | यस्वेत्यन्वयः |
| | १६ | विदुपा | विदुषां |
| ५९ | ८ | तस्यविडम्ब | विडम्ब |
| ६० | १६ | नगराजा | नगरानजः |
| | १८ | सेनीत्वात् | सेनानीत्वात् |
| | २० | नाम्रदु | मृदु |
| | २१ | क्षुण्णः जनः | क्षुण्णं जनैः |
| ६१ | १३ | निर्म्मलतरं | निर्म्मलं |
| ६२ | ७ | मङ्क्येयः | मङ्क्षेशयः |
| ६२ | १३ | भ्रात्यो | भ्रान्त्यो |
| | २० | वक्षसि | ० |
| | २१ | सख्येन | सख्येन वक्षसि |
| | २३ | यदा | गाढंयदा |
| ६३ | १० | स्मरशासने | स्मरशासने कामशास्त्रेच |
| | १२ | श्रुद्धाः | शुद्धाः |
| | १३ | श्रुद्धाः | शुद्धाः |
| | १३ | शेषाः | शेषः |
| | १६ | शीताञ्शु | शीताञ्शुः |
| | २२ | चोपमीयन्ते | चोपमायन्ते |
| | २७ | रुध्यति | बीभत्सत |
| | २७ | मन्दमङ्कती | मन्दंधीरंनीचं चञ्चकती |
| | २८ | भवति | भवति स्वेतर गमनाभावात् |
| ६४ | २ | माधुर्यादि | माधुर्यशुद्धशीतलादि |
| | ५ | परिभवितुं | व्यथयितुं |
| | ५ | प्रति | ० |
| | १० | दृशा | दृशां |
| | १० | रुद्देन | रुद्दे न |
| | १४ | ल्लतामालं वते | फुल्लतामालं वते |
| | १७ | संगमे | प्रभासंगमे |
| ६५ | ४ | शान्तेय | शान्तये |
| | ८ | कुर्वन्ती | कुर्वती |
| | २२ | चिन्तन | चिन्तनं |
| ६६ | १२ | रूपा | रूपां |
| ६७ | ३ | कुर्वती | व्याकुर्वती |
| ६८ | ६ | स्तनतटी | स्तनतटीं |
| | १२ | हसाग्मा | हसाम्राननं |
| ६९ | १० | वैदध्य | वैदग्ध्य |
| | १३ | स्मितद्युतिर्म | स्मितचातुरीम |
| ७० | ६ | पोविभ्रमभूभृतस्ते | सःतेविभ्रमभूभृतः |
| | १० | विदधतो | विदधतः |
| | १२ | यौवनत्त्वं | यौवनं |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | १३ | तस्यविभ्रमः | तस्य ते विभ्रमः |
| | १४ | मनोहरस्तेतव | मनोहरः |
| ७१ | २ | तस्य | तस्याः |
| | ५ | हार्नीं | हानी |
| | १३ | स्यर्द्धास्या-अस्तीति | स्पर्द्धाऽस्या-स्तीति |
| | १६ | प्रभा | प्रभां |
| ७४ | १ | जग्मुषीं | जग्मुषी |
| | ६ | ऽन्तराद्भुतस्य | न्तरादुद्भूतस्य |
| | २९ | तथोक्ता | तथोक्ताः |
| ७५ | २३ | कमलाच | कलाच |
| ७६ | १ | प्रथा | प्रथां |
| | ६ | सरोऽपिवा | सरोऽपिसततंवा |
| | ८ | पार्वती | पार्वति हे कामाक्षि |
| | ११ | नितान्त | नितान्तं |
| ७८ | २ | विस्तीर्य्यत | विस्तार्य्यत |
| | २३ | इव वर्त्तत इ | इवे |
| | २९ | लीयत इवे | लीयत इव वर्त्तत इत्यर्थः |
| ७९ | २५ | राजेक | राज के |
| ८० | २८ | आकारा | आकराः |
| ८१ | ६ | कुर्वन्त | कुर्वता |
| ८५ | ७ | जनि दुःख मृत्यु | जनिमृत्यु दुःख |
| | ११ | जनिदुः | जनि मृत्यु दुः |
| | १६ | पूर्णा | पूर्णाः |
| ८५ | २२ | जगता | जगतां |
| ८६ | ३ | तथा | यथा |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | १६ | किर्त्तिम् | कीर्त्तिम् |
| | २२ | रसस्त | रसस्तं |
| ८७ | १३ | सर्व्वप्रकारिकाम् | सर्व्वप्रकारकाम् |
| | १६ | चेष्ठतां | चेष्टताम् |
| ८८ | १३ | चेष्ठमाने | चेष्टमाने |
| ८९ | १२ | आसनस्थितेर्य्या | आसनायाः स्थितेः |
| | १ | गुण | गण |
| | १९ | पीयूषवर्षैरेव | पीयूषवर्षैरिव |
| | २४ | करोतीति | कुर्व्वन्तीति |
| ९१ | ८ | सदेहस्य | सन्देहस्य |
| ९२ | १ | कौतुहल | कौतूहल |
| | ६ | मासत | मारुत |
| | २६ | सिहेन | सिंहेन |
| ९३ | ९ | सत्सम्बुद्धौ | तत्सम्बुद्धौ |
| ९४ | ८ | स्वकर्म्माधीनं | स्वकर्म्माधीनः |
| | १२ | वाहुल्यंतस्य | वाहुल्यं तस्य प्रकटनंयस्मात्तस्य |
| ९७ | ११ | तेतथोक्ता | ० |
| | २२ | मलिन | मालिन्य |
| ९८ | ३ | गंग | गाङ्ग |
| | ८ | कुर्व्यन्ती | कुर्व्वती |
| | १५ | वचसोर्विस्मर | वचसोराविस्मर |
| | १६ | कामाद्याः | कामाक्षी |
| | १८ | तयोःविस्मरं | तयोराविस्मरं |
| | २३ | त्यत्र सुयांसुलुगित्यनेनषष्ठ्या लुकापरमे व्योमनितिवत्तस्याः ) | ० |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | २४ | श्रीकामाच्या | श्रीकामाची- |
| | २५ | श्चरणयो | स्वचरणयोः |
| ९९ | २६ | पदतलभू | पदतलंभू |
| १०० | ३ | परागणां | परागाणां |
| | ५ | यामीचीति | यामीति |
| | २२ | दाक्रामद् | दाक्रामन् |
| | २६ | परागो | परागो यस्य स |
| १०१ | १ | पद्मः | पदपद्मः |
| | १२ | ओडारभ्यस्य | ओड्राख्यस्य |
| | २२ | स्पृहयते | चरणयोः |
| | २४ | स्पृहयते | नमस्कुर्मः |
| १०२ | १ | स्पृहयत इच्छति रागलौहित्ययो | नमस्कुर्म्मः वय मिति |
| | | | रैक्यात् रागं स्नेहंवा। "स्वात्मैवदेवता भोक्ता ललिता विश्व विग्रहा लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावनम्" इति तन्त्रराज वचनात्। विश्व विग्रहा ललिता देवता स्वात्मैव तद्विमर्शो देवीनिष्ठं लौहित्य मिति भावनरूपोपास्तिः, अतइदृग्रूपं लौहित्यं चरण विमर्श एव। वाञ्छतीत्यर्थः। अयं जन इति |
| | २४ | गणः | गणैः |
| १०५ | ४ | मिच्छितीति | मिच्छतीति |
| | १६ | नितरा | नितरां |
| १०६ | १५ | अदरिद्राणि | अदरिद्राणा |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | दरिद्राणि | निदारिद्राणानि |
| १०७ | २८ | कामलाभ्यां | कोमलाभ्यां |
| १०८ | १७ | हसानां | हंसानां |
| | २३ | | स्तथोक्ता तवनमने प्रणतिसमये |
| ११२ | २८ | मीहमा | महिमा |
| ११४ | ६ | माया | भाया |
| | २१ | दरिद्रविशिष्टस्य | दारिद्र्यविशिष्टस्य |
| ११५ | ७ | प्रतिपलान | प्रतिपालन |
| | ११ | भिराम | गिराम |
| | १५ | शौणौ | शोणौ |
| ११६ | २१ | प्रकाश | प्रकाशः |
| ११७ | १ | हंसो जपमन्त्र | हंसोऽजपामन्त्र |
| ११७ | ४ | स्मरे | स्मेर |
| | १२ | सुख | सुखं |
| १२० | २६ | मोद्यद्वंन्द्वा | मोद्यद्वृन्दा |
| | २७ | सः | षः |
| १२१ | २४ | देहाहंकारत्वं | देदाहङ्कारः |
| १२४ | ७ | मुकुटनां | मुकुटानां |
| १२५ | १० | कारयती | करोती |
| १२७ | ८ | दिवैव | दिवाएव |
| | ८ | कञ्जस्क्त | कञ्जन्तु |
| | १० | संकुचितो | संकुचितं |
| १२८ | १ | मुकुलयति | मुकुलयतीति |
| | ४ | रुचि | रुचिः |
| | १७ | कमल | कमलं |
| १२९ | १३ | रुच्य | रुच्य |

| पृष्ट | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | ३० | योज्वल | योज्ज्वल |
| १३० | १२ | द्वैऽपि | द्वैअपि |
| | २६ | यार्मेर्ज्जीयर्नि र् | योर्मेर्ज्झीरयो-र्नि |
| | २९ | नर्म्मल्य | नैर्म्मल्य |
| १३१ | ८ | भृङ्कार | भृङ्गार |
| | १० | स्तभिः | स्ताभिः |
| | १२ | तर्तु | तरितु |
| | २८ | प्रदीवे | प्रदीपे |
| १३२ | ८ | कर्म कर्म | कर्म्मा कर्म्म |
| | १७ | तासां | तेषां |
| १३३ | ३ | महिमा | महिम |
| | १८ | सन्तंः | सन्तं |
| १३४ | ४ | श्वित्रा | श्वित्री |
| | ४–५ | यस्मिन्यस्मा द्वासचरणोपि ब्रह्मापि | येषां तेषां |
| | १८ | परितोहतस्य अभितोदूरीकृतस्य | परितोहतः अभितोदूरी-कृतः |
| १३५ | ४ | मिदमुपायं | मिदं साधनं |
| १३७ | १३ | स्नेहेन सह | स्नेहेनरक्तत-याचसह |
| | २१ | पराचा | पराचां |
| | २४ | हृतपद्मं | हृत्पद्मं |
| १३८ | १ | समुद्र | समुद्रे |
| | १० | दैव | देव |
| | १४ | कारावार्त्ता | कारांवार्त्ता |
| | १६ | कान्ती | कान्ति |
| | २६ | दंहा | देहा |
| | २६ | मानं | मानः |
| | २७ | अज्ञानस्य | ज्ञानस्य |

| पृष्ट | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | २७ | भयान्वित्वं | धरणभयान्वि-त्वं |
| १३९ | १२ | कृत्वा | ० |
| १४० | १५ | चरणार्विन्दाभ्यां | चरणारवि-न्दाभ्यां |
| १४१ | १२ | यशोमती | यशस्वती |
| | १६ | सम | शम |
| | २० | सम | शम |
| | २३ | आनन्दा | सानन्दा |
| | २४ | रमणीयेऽक्षिणी | रमणीयेअक्षिणी |
| | २४ | वक्रेऽक्षिणी | वक्रे अक्षिणी |
| | २७ | सुखरूपं | सुखं |
| | २७ | सम उपसमम् | शम उपशमः |
| १४२ | २६ | श्रीमत्याः | श्रीमत्या |
| १४३ | ५ | तदेव | सैव |
| | ७ | कामरूपीटे | कामरूपपीटे |
| | २५ | फलं | फलंतस्य |
| १४४ | ७ | योपीनकुचौ | यौपीन कुचौ |
| | ९ | स्मेति | स्म इति |
| | १० | मौलेरकात्म्य | मौलेरैका-त्म्य |
| | १५ | एकोद्वयश्वासा | एकोद्वितीय-श्वासा |
| | १७ | इदमोभाव यहां से लगा कर ब्रह्मवाचकत्वा च यहां तक गलत | साहि इदं पर मैदंपर्यमुख्य तयांप्रतिपाद्यं वेदसिद्धान्त शिव श-क्त्यैक्य ब्र-ह्मरूपं |
| | २८ | इति श्रुतेद्वैतः | द्वैतःरसोवैसः |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | रसोवैसः | इति श्रुतेः |
| १४५ | ६ | छायाम् | छायम् |
| | १३ | कुटिलानिक-चानि | कुटिलाःक-चाः |
| | २५ | शिथलित | शिथिलित |
| १४६ | ३ | भुमा | भूमा |
| | १२ | आगमस्य शा-स्त्रस्य मुख्यत्वे-नवर्तमानःशा-स्त्ररूपपुरुषस्य | शास्त्ररूपपुरु-षस्य |
| | १६ | आन्दा | आनन्दा |
| १४७ | ७ | यावनो | यौवनो |
| | १२ | विलांसो | विलासो |
| | १९ | काञ्चिपुरीम-धिकृत्य | काञ्च्यामि-त्यधिकाञ्चि |
| | २२ | तेषान्तै | तै |
| १४८ | ६ | पासन कस्य | पासनस्य |
| १४९ | २ | यस्मिन्तत् | यस्मिँस्तत् |
| | १२ | ताभ्यामती-ता | तेऽतीता |
| | २३ | वाणान्यस्य | वाणायस्य |
| १५० | ४ | स्त्री | पतिव्रता |
| | ५ | वनिता | वा |
| | १३ | तरुभिन्नः | तरुणिन्नः |
| १५१ | १ | चन्द्ररूपं | यस्मात् सः चन्द्रः |
| | १ | जाग्रत्सत् | जाग्रत्सन् |
| १५२ | ८ | स्मेति | स्म इति |
| | ११ | गर्वन् मुखं | गर्वायमानमु-खं |
| | १७ | काञ्ची | काञ्चि |
| १५३ | ११ | कुले | कूले |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| | २५ | काञ्च्या | काञ्च्याः |
| | २६ | स्वान | स्वाना |
| १५४ | ५ | स्यैवंवि | स्यावि |
| | १७ | ऋतरस्त | ऋतस्त |
| | २६ | जितकरुण | पुञ्जितकरुणं |
| १५५ | ३ | विलोकेमहि | आलोकेमही |
| | १२ | तस्यां | तस्याकामात्त्यां |
| १५६ | १३ | श्रीलध्वा | श्रीलघ्वा |
| १५७ | ६ | ध्याय | ध्यायामि |
| १५८ | १४ | वन्द | नमामि |
| १५९ | ८ | तत्त्वत्मा | तत्त्वात्मा |
| | २३ | अहमो | अहमित्यस्य |
| १६२ | १ | आकाशरूप मुख्यस्थप्रति | आकाशस्यमु-ख्त्वेनप्रति |
| | ४ | विन्दुवियन्ना देनपरिणता | विन्दुवियतो नादस्तथोक्त स्तेनपरिणता बिन्दुरूपाका शस्यमुखत्वेन-प्रतिपादनात्ना-दस्यबिन्द्वाका शतउत्पन्नत्वा त्विंदुवियन्ना-दपरिणताप्र-काशरूपेणमूला दि ब्रह्मरन्ध्रा न्तंव्याप्तावहि अशब्दसृष्ट्यर्थसृष्टिरूपेण |
| | ५ | वहिरभ्यन्तरे | वस्तुतस्तुवहि रभ्यन्तरे |
| | १४ | श्रेष्टं | श्रेष्ठं |
| १६३ | २८ | स | सन् |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १६४ | ८ | देवतया | देवतयो |
| | १४ | रूपेः | रूपैः |
| | २३ | त्रिदैवत्यां | त्रिदेवतां |
| १६५ | १ | नवत्वंतस्य देहस्यरन्ध्र त्वेनावभास-तें | नवत्वमित्यादि पदद्वयंनिष्प्रयो जनमत्रसार्थ कमन्यत्र |
| | ६ | हषितःस्मर शासनोयया सा | हर्षितःस्मरशा सनोययासाय द्वाहर्षितश्चासौ स्मरश्चतादृशः शासनायांय- स्यास्तथोक्ता |
| | ६ | पुयां | पुर्य्यां |
| | ११ | शम्वरासनं वराशनंवव योरैक्यात् | शम्वरासनंशं सुखंयथाभव- तितथावरेवव योरैक्यात्वरे पतौश्रीशिवे आसनं |
| १६६ | १६ | काा | का |
| १६७ | १८ | कामश्वरा | कामेश्वरा |
| १६८ | ६ | चक्रस्याधीत्य धिचक्रं | चक्रस्यमध्ये इति चक्रम ध्यं |
| | २१ | तेनगत | तयादृष्टोगत |
| १६९ | ८ | कूलं | कूले |
| | ६ | कूलं | कूले |
| १७० | २३ | दीपांक | दीपाङ्क |
| | २३ | प्रत्यड | प्रत्यङ |
| १७१ | १५ | चतद | चतर्द |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १७२ | २४ | काञ्चीत | काञ्चित |
| १७३ | १ | इत्यनुकूलं | इत्यनुकम्याकूलं |
| १७४ | ६ | परिरे | परिसरे |
| | १२ | आस्त | स्त |
| | १८ | सिंहस्य | ससिंहस्य |
| | १६ | स्वस्य | स्वस्याः |
| | २५ | उद्दण्डानि प्रगल्भानि | गद्उन्नतंदण्डं यस्याः सा |
| १७५ | १७ | स्तेभ्योय | स्तेभ्योभक्ता- नांय |
| | २७ | मयः | मया |
| १७६ | ५ | श्रीमुखेने | श्रीमुख |
| १७६ | २० | माण्डत | मण्डित |
| १७७ | ४ | कालायसक लहकरकार्तिं जालामिति साधुः | ० |
| | ६ | जनाः | जनावश्यसं मोहकारिणः त्वत्केवलप्रेमि जनावा |
| १७९ | २ | सामार्थ्यं | सामर्थ्यं |
| | ३ | जनकाले | जनकालकाले |
| | १६ | मुदघाट | मुद्घाट |
| | २४ | धारया | धार |
| १८१ | १८ | त्यनया | तिया |
| | २४ | तथोक्तश्च | तथोक्तंतच्च |
| | २८ | ग्रन्थरचना-नि | ग्रन्थानि |
| १८२ | ६ | नतस्त्व | नतः |
| | ११ | नमोर | नमोस्तु |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १८३ | २८ | धन्य | धन |
| १८४ | १७ | त्रिका | तृका |
| १८५ | ६ | चातुर्य्य साम-थ्र्यं | चातुर्य्यं |
| | २६ | सञ्ज्ञतान | संजनय |
| १८६ | ४ | नेत्रनन्दा | नेत्रानन्दं |
| | २० | शाङ्कारा | शाङ्करा |
| | २६ | स्मृताप | स्मृतापि |
| १८७ | १६ | जातान्य | संजातान्य |
| | २० | काश्चि | काञ्ची |
| | २० | महतीचा | महाँश्चा |
| | २१ | महिम्नी | महिमा |
| १८८ | ३ | कन्तिर्वदने | कान्तिवदनंय-स्यतद्वतत् |
| | ४ | विरहितानां | विरहितानाम-पि |
| | ५ | तस्या | तस्यां |
| | १७ | सार्वविभक्ति क | पञ्चम्या |
| | १८ | पञ्चम्यर्थेत सिल | पञ्चम्यन्तात्-तसिल् |
| १८९ | १५ | विहारी | विहारि |
| | १८ | प्रतिनं | प्रतिदिनं |
| | १९ | गिरा | गिरम् |
| | २८ | काञ्चीसिपु | काञ्चीपु |
| १९० | ७ | स्पृर्श | स्पृशं |
| १९० | १० | तस्य | शिवस्तस्य |
| | ११ | चोरिणीम् | चौरीम् |
| | २१ | जनकेली | जनकेलि |
| | २२ | अंहोञ्चन | अंहोवञ्चन |
| १९१ | २ | आहो | अंहो |
| | ६ | वाङ्मनसो | वाङ्मनसयो |
| | २६ | न्सन्स | न्स |
| | २८ | सम्पदा | सम्पदया |
| १९३ | १ | तस्यवश्रियः शोभाः | तस्यश्रियइव-शोभाः |
| | २ | स्येव | स्यश्रियइव-शोभा |
| १९३ | १२ | रणंती | रणन्ती |
| १९४ | ४ | पदार्थइत्यर्थः | पदार्थस्ययुक्ति रित्यर्थः |
| १९६ | ४ | अक्षणोर्नेत्रयोः | अक्ष्णांनेत्रा-णां |
| | १४ | अलकार | अलङ्कार |
| | २६ | मनि | मीन |
| १९७ | १३ | करैर्हस्तैश्च | करेभ्योहस्ते-भ्योश्च |
| | २५ | चेष्टन्ती | चेष्टमाना |
| १९८ | १ | अतिशोभा-दायक | ० |
| | १३ | यत् | यस्य |
| | १३ | यस्य | तत् |
| १९९ | ७ | लहरीणारं | लहरीणां पूरं |
| २०० | १२ | कारुण | कारण |
| | १४ | नन्दिना | नन्दिनी |
| | २३ | जाड्याधि-क्य | जाड्याधिक |
| | २४ | कथंकुतः | कथंकेन प्रकारेण |
| | २५ | भूतश्चन्द्रः | भाजनंचन्द्र |
| २०१ | ७ | कोष्यसौ | कोप्यसौ |
| | २७ | दाम्यतीति | दमयतीति |
| २०२ | २१ | चमत्कृतिम् | चमत्क्रियां |
| २०५ | १८ | स्तनयोर्यो-गरिमा गौर- | गुरुणामहता-स्तनयोर्योग- |

